Digitized by Madhuban Trust, Delhi



तस्माच्छ्रीदमयन्त्युदारचरिता दान्तं प्रशान्तं सुतं
नाम्नाचार्य्यचतुर्भुजं सुचरितं प्रासोष्ट शिष्टप्रियम् ।। २२ ।।

गोत्रइति। प्रियानुव्रता भर्तुरनुवर्त्तिनी। ह्रीर्लज्जा। कारुण्यं दया। वदान्यता वल्गुभाषिता दानशीलता वा। धृतिः सन्तोषः। दाक्षिण्यं सरलता। सौजन्यं सुजनता। भद्रतेति यावत्। एषां भूः भूमिराश्रय इति यावत्। श्रीदमयन्तीदेवी। तस्मात् दामोदराचार्य्यात्। दान्तो दमितवाह्येन्द्रियः। प्रशान्तः प्रकर्षेण शमितान्तरिन्द्रियः। नाम्नेत्यत्र "प्रकृत्यादिभ्य उपसंख्यान" (वां पां २।३।१८) मिति तृतीया। शिष्टानां प्रियं वल्लभम् ॥ २२ ॥

जातस्तस्य सदाशयस्य तनयो विद्वान् सदाचारभू-
र्भक्तिज्ञानवशीकृतेन्द्रियचयः श्रीकेशवाचार्यकः।
आत्माराम इति द्विनामविदितो लोके सतां सम्मतः
श्रीगोपालसुकोमलारुणपदद्वन्द्वारविन्दार्च्चकः ।। २३ ।।

जात इति। भक्तिः श्रीमद्भागवतोक्तश्रवणकीर्त्तनादिरूपनवविधलक्षणा। ज्ञानन्तत्त्वानुभूतिः। ताभ्यां वशीकृत इन्द्रियचय इन्द्रियसमूहो येन सः। द्विनामविदितो द्वाभ्याम् आत्मारामकेशवाचार्य्यनामभ्यां लोके विदितः ख्यातः। सतां विदुषां सम्मतः। सतामित्यत्र [ सम्मत इति वर्तमानविहितस्य क्तस्य कर्तरि "क्तस्य च वर्तमान" (पां २।३।६७) इति कर्तरि षष्ठी। सम्मत इत्यत्र हि" मतिबुद्धिपूजार्थेभ्यश्चे" (पां ३।२।१८८) ति वर्तमाने क्तः ] ॥ २३ ॥

(कविमातामहवंशवर्णनम्)

आसीत्कोऽपि वशिष्ठगोत्रजननो नागारकुच्याह्वये
ग्रामे श्रीभवदेव इत्यभिहितो नाम्ना सतामग्रणीः।
वादे कोविदवज्रकीटपरमानन्दौ विजित्याञ्जसा
लेभे कौचविहारराजसमितौ वाचस्पतिं नाम यः ।। २४ ।।

अथ ग्रन्थकृतो मातामहवंशमवतारयति आसीदिति। वशिष्ठगोत्रे जननं जन्म यस्य सः। नागारकुच्याह्वये नागारकुचिनाम्नि। सतां



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सुधियामग्रणीः पुरोवर्त्ती। अग्रणीरित्यत्र "अग्रग्रामाभ्यां नयतेर्णो वाच्य" (वां पां ३।२।६१) इति णत्वम्। वादे शास्त्रवादे। कोविदौ पण्डितौ वज्रकीटपरमानन्दौ कोचविहाराधिपतेः सभासदौ। अञ्जसा झटिति। समितौ सभायाम्॥ २४॥

आसीत्तस्य सुतः खगेश्वर इति ख्यातो यजुर्वेदिनः
　　सञ्जातास्महितात्ततः श्रुतधराद्विद्वज्जनाग्रेसरात्।
रम्भादेव्युदरे गुणैरवियुतां चन्द्रप्रभाख्यां सुतां
　　दुर्गेश्वर्य्यपराभिधामुदवहच्छ्रीकेशवाचार्य्यकः॥ २५॥

आसीदिति। तस्य भवदेववाचस्पतेः। महितात्पूजितात्। अग्रेसरात् पुरोगात्। अग्रेसरादित्यत्र "पुरोऽग्रत" (पां ३।२।१८) इति टः। अवियुता[म्] अपरित्यक्ताम् युक्तामिति यावत्। दुर्गेश्वरीति अपरा द्वितीया अभिधा नाम यस्यास्तां चन्द्रप्रभामुदवहदुपयेमे॥ २५॥

(कविजन्म)

तस्माद्धीरेश्वराख्यस्समजनि तनयस्तन्वि चन्द्रप्रभायां
　　शुक्राष्टाविंशभौर्वीतनयनिशि विशाखाद्यपादे सितायाम्।
द्वादश्यां यः शकाब्दे गुणमुनिघनमे कामरूपान्तरष्टा-
　　गारीयग्रामतस्त्रिप्रवरयुतभरद्वाजगोत्रे पवित्रे॥ २६॥

तस्मादिति। तस्मात्केशवाचार्य्यात् धीरेश्वराख्यः धीरेश्वरनामा तनयः पुत्रः समजनि सञ्जातः। तन्वि इति सम्बोधनपदम्। शुक्रस्य ज्यैष्ठस्याष्टविंशप्रमितभौमवासरीयनिशायाम्। विशाखानक्षत्रस्य प्रथमपादे। सितायां शुक्लायां द्वादश्याम्। गुणास्त्रयः, मुनयः सप्त, घनाः सप्तदश। वामावर्त्तैरेभिः प्रमिते त्रिसप्तत्यधिकसप्तदशशतशकाब्दे। कामरूपस्यान्तःपातिनि अष्टागारीयग्रामे आष्टघरीयग्रामे। त्रिप्रवरास्तावद्भरद्वाजाङ्गिरसवार्हस्पत्यास्तैर्युते भरद्वाजगोत्रे न तु पञ्चप्रवरभरद्वाजगोत्रे। ग्रामत इत्यत्र "सप्तम्यास्तसिल् (?)" इति तसिल्॥ २६॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



शुक्रे भौमे च मेषङ्गतवति वृषभं भास्करे रौहिणेये
चाप्ते राहौ कुलीरं विशति सुरगुरौ कन्यकां याति धन्ये ।
चन्द्रे चन्द्रांशुमालाललिततनु तुलाङ्गाहमानेऽथ याते
केतौ सत्कृत्यसेतो मकरमुत शनौ मीनगे मेषलग्ने ॥ २७ ॥

शुक्र इति । भौमे मङ्गले । वृषभं वृषम् । भास्करे रवौ । रौहिणेये बुधे । कुलीरं कर्कटम् । सुरगुरौ बृहस्पतौ । कन्यकां कन्याम् । हे चन्द्रांशुमालाललिततनु । चन्द्रस्य किरणश्रेणीव ललिता तनुर्यस्यास्तथाभूते । सेतो आले ॥ २७ ॥

सोऽयं धीरेश्वराचार्य्यो विहिताचार्य्यवन्दनः ।
उपाध्यायवरेण्यार्य्यकेशवाचार्य्यनन्दनः ॥ २८ ॥

श्रीमद्रुद्रेश्वराचार्य्योपेन्द्राचार्य्याग्रसोदरः ।
भारत्याः श्रीसरस्वत्यास्तातः सर्व्वेश्वरस्य च ॥ २९ ॥

सोऽयमित्यादि । धीराः पण्डिता ईश्वराः प्रभवो यस्य स चासावाचार्य्यश्चेति ननु धीराणामीश्वर इति । विहितं कृतमाचार्य्याणां गुरूणां वन्दनमभिवादनं येन सः । अग्रसोदरः ज्येष्ठसहोदरः । तातो जनकः पितेति यावत् ॥ २८-२९ ॥

लुप्तप्राये बहुतिथात् कालाच्छन्दोऽनुशासने ।
प्रदीप इव कुस्नेहे कामरूपेऽनुतापवान् ॥ ३० ॥

छन्दोभ्यः पैङ्गलादिभ्यो विचित्य विशदैः पदैः ।
इदं छन्दो निबध्नाति कृशवाग्भूतिकोऽपि सन् ॥ ३१ ॥

लुप्तप्राय इति । प्रायेण लुप्ते । बहुतिथात् [ सुदीर्घात् । 'बहुपूगगण-सङ्घस्य' ( पां ५।२।५२ ) इति तिथुक् ] छन्दोऽनुशासने छन्दःशास्त्रे कुस्नेहे अल्पतैले । कुशब्द ईषदर्थे । "पापकुत्सेषदर्थे कु" इत्यमरकोषः । अनुतापवान् अनुतप्तः पश्चात्तापयुक्त इति यावत् । छन्दोभ्य इति । पिङ्गलेन प्रोक्तं



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



पैङ्गलं तदादिर्येषां, तेभ्यो विचित्य समाहृत्य। विशदैः विस्पष्टैः। पदैः सुप्तिङन्तैः। इदं वृत्तमञ्जरीनामछन्दोऽनुशासनं निबध्नाति रचयति ॥ ३०-३१ ॥

इति सूचित आचार्य्यवंश आर्य्याद् यथाश्रुतम्।
अथ निर्दिश्यते सञ्ज्ञा छन्दःशास्त्रोपयोगिनी॥ ३२॥

इतीति। सूचितः प्रकाशितः। निर्दिश्यते क्रियते ॥ ३२ ॥

इति धीरेश्वराचार्य्यकृतौ छन्दोऽनुशासने।
श्रीवृत्तमञ्जरीनाम्नि प्रथमस्तवको गतः॥ ३३॥

इतीति। धीरेश्वराचार्य्यस्य कृतिरिति विग्रहः। धीरेश्वराचार्य्यस्येति कर्त्तरि षष्ठी ॥ ३३ ॥

---



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

# द्वितीयः स्तवकः

## (क) गुरुलघुसंज्ञाकुसुमम् ।

अक्षसूत्रकरकाजिनोज्ज्वलः सोपवीतधृतमौञ्जमेखलः ।
ज्वालपिङ्गलजटः सदग्रणीश्छान्दसो जयति पिङ्गलोमुनिः ॥ १ ॥

अक्षेति । अक्षसूत्रं जपमाला, करकः कमण्डलुः, "कमण्डलौ च करक" इत्यमरः । अजिनं कृष्णसारचर्म्म, तैरुज्ज्वलः । उपवीतेन यज्ञसूत्रेण सह वर्तमानः सोपवीतः, मुञ्जस्य विपूयस्येयं मौञ्जी सा चासौ मेखला चेति "स्त्रियाः पुंवद्भाषितपुंस्का" ( पां ६।३।३४ ) दिति पुँव्वद्भावः । धृता परिहिता मौञ्जमेखला येन सः गोस्त्रियोरुपसर्जनस्ये"( पां १।२।४८ )ति ह्रस्वः । ततः सोपवीतश्चासौ धृतमौञ्जमेखलश्चेति कर्म्मधारयः । ज्वालो वह्निशिखा स इव पिङ्गला जटा यस्य सः । छन्दो वेद छान्दसः "तदधीते तद्वेदे" ( पां ४।२।५९ ) त्यण् छन्दोविदित्यर्थः । पिङ्गलनामा मुनिर्महर्षिर्जयति सर्वोत्कर्षेण वर्त्तताम् । जयतेर्लोड्र्थे लट् । लोटोऽनभिधानात् ॥ १ ॥

यस्य नाम रसनां कलावती साभिलाषमधिरुह्य भारती ।
नृत्यति स्म तमहं महाकविं कालिदासमभिवादये मुदा ॥ २ ॥

यस्येति । नामेति वाक्यालङ्कारे । रसनां जिह्वाम् । कलावती चतुःषष्टिकलायुता । साभिलाषं सतृष्णम् क्रियाविशेषणमिदम् । भारती सरस्वती । नृत्यति स्म ननर्त्त "लट् स्म" ( पां ३।२।११८ ) इति लिटं वाधित्वा स्मयोगे लट् । मुदा हर्षेण "मुत्प्रीतिः प्रमदो हर्ष" इत्यमरः ॥ २ ॥

पाठमात्रत इहाखिलं यथा मन्दधीभिरपि वृत्तलक्षणम् ।
ज्ञायते स्फुटमयत्नतस्तथा वच्मि वृत्तवति वृत्तमञ्जरीम् ॥ ३ ॥

ग्रन्थकृत्प्रतिजानीते पाठमात्रत इति । हे वृत्तवति सच्चरित्रे इह जगति शास्त्रे वा मन्दधीभिरल्पबुद्धिभिरपि पाठमात्रत उच्चारणमात्रेणायत्नतोऽनाया-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



साद्यथाखिलं समस्तं वृत्तलक्षणं पद्यलक्षणं स्फुटं प्रव्यक्तं ज्ञायते बुध्यते तथा वृत्तमञ्जरीं तन्नामकं छन्दःशास्त्रमहं वच्मि कथयामि भविष्यत्सामीप्ये लट् ॥ ३ ॥

चाषसाहजिकघोषसम्परिच्छिन्नकाल इह मात्रयाख्यया ।
कोमलाङ्गि कलया च सत्प्रिये छन्दसि व्यवहृतो महर्षिभिः ॥ ४ ॥

हे कोमलाङ्गि हे सत्प्रिये सत्यप्रिये सतां प्रिय इति वा इह छन्दसि चाषस्य किकीदिवेः पक्षिविशेषस्य "अथ चाषः किकीदिवि" रित्यमरः । साहजिकेन स्वाभाविकेन घोषेण स्वरेण सम्यक् परिच्छिन्नः कालो मात्रया कलया च आख्यया नाम्ना महर्षिभिर्व्यवहृतः । "चाषस्तु वदते मात्रा" ( पां शि ४९ ; याज्ञं शि १७ ) मिति शिक्षाग्रन्थ एवात्र प्रमाणम् ॥ ४ ॥

एकमात्रकमुदीरितम्बुधैर्ह्रस्वमिन्दुवदने द्विमात्रकम् ।
दीर्घमाश्रवणदीर्घलोचने ह्रस्वमेव लघु वक्ति पाणिनिः ॥ ५ ॥

हे इन्दुवदने चन्द्रमुखि हे आश्रवणदीर्घलोचने आकर्णायतलोचने विद्वद्भिः एका मात्रा यस्य तत् एकमात्रकमक्षरं ह्रस्वमुदीरितमुक्तम्, द्वे मात्रे यस्य तत् द्विमात्रकमक्षरं दीर्घमुदीरितम् । पाणिनिर्दाक्षायणः ह्रस्वमेव लघु ( पां २।४।१० ) वक्ति आह ॥ ५ ॥

युक्तपूर्वगतमक्षरं गुरु ज्ञेयमस्वरहलश्च पूर्वगम् ।
तद्वदिन्दुमुखि विन्दुसंयुतं दीर्घमप्युत विसर्गमिश्रितम् ॥ ६ ॥

हे इन्दुमुखि चन्द्रानने त्वया भवत्या युक्तस्य संयुक्तस्य पूर्वगतमादिस्थितमक्षरं गुरुसंज्ञकं ज्ञेयम्बोद्धव्यम् । अस्वरहलः केवलव्यञ्जनस्य च पूर्वस्थितमक्षरं गुरु ज्ञेयम् । विन्दुसंयुतमनुस्वारयुक्तमक्षरं दीर्घमपि द्विमात्रकमपि उत एवं विसर्गमिश्रितं विसर्गयुक्तमक्षरं तद्वद् गुरुसंज्ञकं ज्ञेयम् ॥ ६ ॥

किञ्च भाविनि विसर्जनीयतो जातयोः कुपुनिमित्तयोःप्रिये ।
पूर्वगश्च ≍क≍पयोर्गुरु त्वयाग्नेयसम्मतमिदं निबुध्यताम् ॥ ७ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे भाविनि हे प्रिये किञ्च अपरञ्च कुपुनिमित्तयोः कवर्गपवर्गनिमित्तयोर्विसर्जनीयतो जातयोः विसर्गादिष्टयोरर्द्धविसर्गसदृश्योः ᳵक ᳵपयोर्जिह्वामूलीयोपध्मानीययोरपि पूर्वस्थितमक्षरं त्वया गुरु निबुध्यतां ज्ञायताम्। इदं मतमग्निपुराणोक्तच्छन्दः-सारसम्मतम्। अस्मन्मते तु "ᳵक ᳵपौ चापि पराश्रिता" विति ( पां शि ५ ) शिक्षोक्तेः ᳵक ᳵपयोः पराश्रितत्वेन युक्ताक्षरत्वात्तदादिस्थितस्यापि गुरुत्वसिद्धौ मतान्तरदर्शनम्प्रपञ्चार्थं सुखबोधार्थं वा ॥ ७ ॥

प्रह्वपूर्व्वगलघोर्न पैङ्गलं सूत्रमस्ति गुरुताविकल्पकृत्।
भ्रान्तिमूलकमत एव मञ्जरीच्छन्दसां रचयितुर्वचः प्रिये ॥ ८ ॥

हे प्रिये प्र ह्व इत्यनयोरादिस्थितस्य लघोर्गुरुत्वविकल्पविधायकं पैङ्गलं पिङ्गलप्रोक्तं सूत्रन्नास्ति न विद्यते। अत एव छन्दोमञ्जरीं रचयितुर्गङ्गादासस्य वचः "प्रह्वे वे"( छन्दोमञ्जरी २।२४ )ति सूत्रं भ्रान्तिमूलकम् भ्रममूलकमित्यर्थः ॥ ८ ॥

स्याद्द्वितीयकचतुर्थयोर्गुरुः पादयोर्लघुरपि प्रियेऽन्तिमः।
नापवादविषयेऽन्ययोरपि स्याद्वसन्ततिलकोपजातिषु ॥ ९ ॥

हे प्रिये द्वितीयकचतुर्थयोः पादयोरन्तिमो वर्णो लघुरपि गुरुः स्यात्। अपवादविषये बाधकविधिविषये उक्तलक्षणो लघुर्गुरुर्न भवति। वसन्ततिलकोपजातिषु वसन्ततिलकायामुपजातौ बहुवचननिर्देशाद्वक्त्रविपुलाश्लोकाभिधानेषु च अन्ययोः प्रथमतृतीययोः पादयोरपि अन्तिमो लघुर्गुरुः स्यात्। तथैवाह कर्णपूरः—"पद्यार्द्धे सर्वेषां लघुरपि वर्णो गुरुर्भवत्यन्ते। पादे प्रथमतृतीये बसन्ततिलकोपजातिषु प्रायः।" ( कं पूं-७ ) इति ॥ ९ ॥

चेद्द्वितीयकचतुर्थपादयोरादिमम्भवति युक्तमक्षरम्।
तन्निमित्तकगुरुः क्वचिल्लघुर्नापरो गुरुरिति व्यवस्थितिः ॥ १० ॥

चेदिति। चेद्यदि द्वितीयचतुर्थपादयोरादिममक्षरं युक्तं संयुक्तं भवति, तर्हि तन्निमित्तकगुरुस्तत् युक्ताक्षरं निमित्तं यस्य तथाविधः अर्थात् युक्तपूर्वगतमक्षरं गुरु इति शास्त्रेण शासितः प्रथमतृतीयपादयोरन्ते स्थितो गुरुः



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



क्वचित्स्थले लघुर्भवति। यथाह—केदारभट्टः—"पादादाविह वर्णस्य संयोगः क्रमसंज्ञकः। पुरःस्थितेन तेन स्याल्लघुतापि क्वचिद्गुरो" रिति। इदमस्योदाहरणम्—"तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि। अल्पव्ययेन सुन्दरि ग्राम्यजनो मिष्टमश्नाति॥" अत्र चतुर्थपादादिस्थिताद् 'ग्र' इति संयुक्ताक्षरस्य पूर्वस्थितस्य 'री'त्यस्य गुरोर्लघुत्वम् अत आर्य्याजातेस्तृतीयपादे न त्रयोदशमात्रता नापि गणभङ्गता। अपरः स्वरव्यञ्जनजिह्वामूलीयोपध्मानीयपूर्वस्थितानुस्वारविसर्गयुक्तदीर्घरूपगुरुः कदापि लघुर्न भवति॥ इति व्यवस्थितिर्व्यवस्था॥ १०॥

यद्गुरावगुरुताङ्घ्रिशेषगे यच्च पत्त्रिणि पदे पतत्त्रिता।
स्वीकृता सुमुखि मञ्जरीकृता छन्दसां तदुभयम्प्रमादजम्॥ ११॥

छन्दोमञ्जरीकारमतं दूषयति यदिति। हे सुमुखि छन्दसां मञ्जरीकृता गङ्गादासकविना पादान्तमात्रगते सर्वप्रकारगुरौ यदगुरुता स्वीकृता भट्टिकाव्यस्य "अथ लुलितपत्त्रिमाल" मिति पर्य्यास्थिते पत्त्रिणि पदे यच्च पतत्त्रिता स्वीकृता अथ लुलितपतत्त्रिमालमित्येवं प्रतिपादिता तदुभयमपि प्रमादजम् अनवधानताप्रसूतमित्यर्थः। कामरूपीयप्राचीनपुस्तकेषु पत्त्रिमालमित्येव पाठो लभ्यते नतु पतत्त्रिमालमिति। स्वीकृतेऽपि लघुत्वे तृतीयस्य विषमत्वात् तत्र मध्यगुरुगणप्रवेशरूपो दोषो दुर्निवारः 'नेह भवति विषमे ज' इति स्वयमुक्तत्वात्। अपरञ्च 'स्वरा अर्द्धमार्य्यार्द्धे'मिति मुनिनार्य्यायः अर्द्धे नियम कृतः नतु पादे। अत आर्य्यायाः पादव्यवस्थापि नास्तीति मृतसञ्जीवनी सङ्गच्छते। यस्याः पादे प्रथम इति कालिदासपादोक्तं पथ्यार्य्याविषयं यतिव्यवस्थापकं वा साधीय इति ब्रूमहे। पतत्रिमालमित्यत्र पृथग्भावेन लिखिततकारस्याधः प्रमादपतितहलन्तसूचकचिह्नमदृष्ट्वा पत्त्रिपतत्त्रिशब्दयोरेकार्थकारित्वञ्चाकलय्य केनचिल्लेखकेन पतत्त्रिमालमित्येव लिखितम्। तत्कालमारभ्य पतत्त्रीत्यपपाठः प्रायेण प्रवृत्तः। अलं विस्तरेण॥ ११॥

इति संज्ञा मया प्रोक्ता गुरुलघ्वोर्यथागमम्।
शृणु पद्मपलाशाक्षि परिभाषामतः परम्॥ १२॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



इतीति। यथागमं यथाशास्त्रम्। पद्मपलाशाक्षि पद्मदलसदृशलोचने। अत्र [ "बहुव्रीहौसक्थ्यक्ष्णोः स्वाङ्गात्षजि"( पां ५।४।११३ )ति षचि "स्वाङ्गाच्चोपसर्जनादसंयोगोपधा" ( पां ४।१।५४ ) दिति ङीष्। ]

इति गुरुलघुसंज्ञाकुसुमम्।

---

## (ख) परिभाषाकुसुमम्।

पद्यं पादनिबद्धं स्यादिति च्छन्दोविदो विदुः।
तच्च लोके द्विधैवेष्टं वृत्तजातिप्रभेदतः॥ १॥

परिभाषामारभते पद्यमिति। पादनिबद्धं पादाभ्यां पादैर्वा निबद्धं गुम्फितं पद्यं स्यात्। इति च्छन्दोविदः छान्दसाः विदुः विदन्ति। द्विधा द्विप्रकारम्॥

निबद्धमक्षरगणैः पद्यं वृत्तं प्रगीयते।
मात्रागणैर्निबद्धन्तु पद्यं जातिरिहेष्यते॥ २॥

निबद्धमिति। इहच्छन्दसि अक्षरगणैस्त्रिगुरुमगणादिभिर्निबद्धं ग्रथितम्पद्यं वृत्तं प्रगीयते कथ्यते। मात्रागणैरेककलद्विकलत्रिकलचतुष्कलादिगणैर्निबद्धं ग्रथितं पद्यं जातिरिष्यते॥ २॥

अचः सर्वत्र सङ्ख्येयाः पद्येषु न पुनर्हलः।
अतो हलोऽर्द्धमात्रत्वस्वीकारो नात्र युज्यते॥ ३॥

अच इति। सर्व्वत्र पद्येषु अचः स्वराः सङ्ख्येयाः परिगणनीया न पुनर्हलः व्यञ्जनानि संख्येयाः। अतो हेतोः हलः व्यञ्जनवर्णस्य अर्द्धमात्रत्व-स्वीकारोऽभ्युपगमोऽत्रच्छन्दःशास्त्रे न उपयुज्यते न युक्तो निष्फलत्वाद् इति भावः॥ ३॥





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



पद्यञ्चतुष्पदीत्युक्तं यत्तु च्छन्दःप्रणेतृभिः ।
द्वित्रिषण्णवपद्यादिष्वव्याप्तेः प्रायिकं हि तत् ॥ ४ ॥

पद्यमिति । चतुर्णां पदानां समाहारश्चतुष्पदी । छन्दःप्रणेतृभिः छन्दः-शास्त्रनिर्म्मातृभिः केदारभट्टगङ्गादासादिभिः पद्यं चतुष्पदीति यदुक्तं द्विपद्यादिषु झुल्लणाप्रभृतिषु अव्याप्तेरप्रसङ्गात्तत् प्रायिकं हि न सार्व्वत्रिकमित्यर्थः ॥ ४ ॥

वृत्तन्त्रिविधमाख्यातं सममर्द्धसमन्तथा ।
विषमञ्चेत्यथैतेषां शृणु लक्षणमुच्यते ॥ ५ ॥

वृत्तमिति । आख्यातं कथितम् । अथानन्तरम् । एतेषां समार्द्धसमविष-माणाम् ॥ ५ ॥

चतुर्णामपि पादानामन्योन्यमतितुल्यता ।
यत्र सञ्जायते कान्ते तद्वृत्तं सममुच्यते ॥ ६ ॥

चतुर्णामिति । अन्योन्यम्परस्परम् । अतितुल्यता अतिसादृश्यम् । ह्रस्व-दीर्घाणामक्षराणाञ्च समानत्वमिति यावत् ॥ ६ ॥

आद्यस्याङ्घ्रेस्तृतीयेन यत्र पादेन तुल्यता ।
द्वितीयस्य चतुर्थेन तदर्धसममुच्यते ॥ ७ ॥

आद्यस्येति । आद्यस्य प्रथमस्य । अङ्घ्रेः पादस्य ।

चतुर्णामपि पादानां परस्परमतुल्यता ।
यत्र तद्विषमं ज्ञेयं सम्पूर्णेन्दुनिभानने ॥ ८ ॥

चतुर्णामिति । अतुल्यता वैसादृश्यम् । सम्पूर्णेन्दुना पूर्णचन्द्रेण निभं तुल्यमाननं मुखं यस्यास्तथाभूते ।

महाभागे चतुर्भागः पादः पादाङ्गदाञ्चिते ।
सद्वृत्ते वृत्ततत्त्वज्ञैः समे वृत्ते त्वयं मतः ॥ ९ ॥

हे महाभागे अतिभाग्यशालिनि पादाङ्गदाञ्चिते तुलाकोटिशोभिते । हे सद्वृत्ते साधुचरिते । चतुर्भागः पादः । स इत्थम्—चतुरक्षराया उक्थाया



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



एकाक्षरः, अष्टाक्षराया अत्युक्थाया द्व्यक्षरः, द्वादशाक्षराया मध्यायास्त्र्यक्षरः षोड़शाक्षरायाः प्रतिष्ठायाश्चतुरक्षरः, विंशत्यक्षरायाः सुप्रतिष्ठायाः पञ्चाक्षरः, चतुर्विंशत्यक्षराया गायत्र्याः षड़क्षरः। एवमुष्णिगादीनामपि। वृत्ततत्त्वज्ञैश्छन्दस्तत्त्वविद्भिरयं पादः समे वृत्ते एव मतः। चतुर्भागरूपः पादः समवृत्तविषय एवेति भावः ॥ ९ ॥

यथावृत्तसमाप्तिर्वा पाद इत्यब्रवीन्मुनिः।
विषमेऽर्द्धसमे चापि द्विपद्यादौ च स स्मृतः ॥ १० ॥

यथेति। वाशब्दोऽत्र व्यवस्थितविभाषाद्योतकः। उद्गतादिषु विषमवृत्तेषु चतुर्भागातिक्रमेणापि पादव्यवस्थादर्शनात्। यस्य वृत्तस्य यादृशैः पादैर्न्यूनाक्षरैरधिकाक्षरैर्वा समाप्तिर्दृश्यते, तस्य तादृशा एव पादा ग्रहीतव्याः, मुनिः पिङ्गलनाग इत्यब्रवीदुक्तवान्। स यथावृत्तसमाप्तिरूपः पादः विषमे अर्द्धसमे चापि वृत्ते द्विपद्यादौ च स्मृतः ॥ १० ॥

द्विरदेन्द्रकराभोगस्पर्द्धमानोरुमण्डले।
सा यतिः पदपाठस्तु यत्र विच्छिद्यते सति ॥ ११ ॥

यतिं लक्षयति द्विरदेति। द्विरदेन्द्रस्य हस्तिराजस्य करः शुण्डादण्डस्तस्याभोगः परिपूर्णता तं स्पर्द्धमानं जिगीषु ऊरुमण्डलं यस्यास्तथाभूते। सति पतिव्रते। यत्र स्थाने पदपाठः विच्छिद्यते विभज्यते सा यतिरुच्यते ॥ ११ ॥

छिन्नावसानविश्रामविरामा विरतिस्तथा।
छेदश्चेत्यादिभिश्शब्दैः सा वाच्या स्वेच्छया त्वया ॥ १२ ॥

यतिबोधकशब्दानाह छिन्नेति। सा यतिः। वाच्या वक्तव्या। स्वेच्छया निजेच्छया। त्वया भवत्या ॥ १२ ॥

पाद आद्यस्तृतीयश्च विषमायुग्मनामकः।
द्वितीयश्च चतुर्थश्च स्याद्युग्मसमनामकः ॥ १३ ॥

प्रथमादिपादानां संज्ञान्तरमाह पाद इति। आद्यः प्रथमः। विषममयुग्मञ्च नाम यस्य सः। युग्मं समञ्च नाम यस्य सः ॥ १३ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



गुणवेदेन्द्रियर्तूणां त्रिचतुःपञ्चषण्मुखाः ।
सङ्ख्यास्सङ्ख्यावदाम्नायात् संख्यातव्या यथाक्रमम् ॥ १४ ॥

गुणेति । मुखम् आदि । संख्यावतां कवीनाम् । आम्नायाच्छास्त्रात् । संख्यातव्याः परिगणनीयाः । यथाक्रमं क्रममनतिक्रम्य । अस्मिन् शास्त्रे गुण इत्युच्यमाने गुरुलघुस्वरूपा वर्णा गृह्यन्ते । लौकिकप्रसिद्ध्युपलक्षणार्थमियं परिभाषा । तेन त्रयाणां गुणाः । चतुर्णां वेदाः । पञ्चानामिन्द्रियाणि । षण्णाम् ऋतवः इत्येवमादयः संज्ञाविशेषा लौकिकेभ्यः प्रत्येतव्याः ॥ १४ ॥

क्षन्तव्यो यतिदोषोऽत्र धीरैर्दुष्करलक्षणे ।
पूरणप्रत्ययस्यार्थो द्वित्र्यादिषु पदेष्वपि ॥ १५ ॥

क्षन्तव्य इति । अत्र वृत्तमञ्जर्याम् । क्वचित्कुत्रचित् दुष्करे रचयितुमुपायान्तरासाध्ये लक्षणे । यतिदोषः यतिभङ्गस्वरूपो दोषः । क्षन्तव्यः सोढव्यः । द्वित्र्यादिषु द्वित्रिप्रभृतिषु संख्यावाचकेषु पदेष्वपि पूरणप्रत्ययस्य तीयादिप्रत्ययस्यार्थः द्वितीयतृतीयचतुर्थ इत्येवंरूपः क्षन्तव्यः ॥ १५ ॥

इति तेऽभिहिता कान्ते परिभाषा समासतः ।
यतिभेदमथो वक्ष्ये श्रूयतां वरवर्णिनि ॥ १६ ॥

इतीति । समासतः सङ्क्षेपात् । वक्ष्ये कथयिष्ये । वरवर्णिनि उत्तमे ॥ १६ ॥

इति परिभाषाकुसुमम् ॥

---

## (ग) यतिभेदकुसुमम् ।

श्लोकस्य कान्ते चरणान्तमात्रे यतिस्तदर्द्धे तु विशेषरूपा ।
विम्बोष्ठि वेदादिपदान्ततश्च व्यक्तानभिव्यक्तविभक्तिके स्यात् ॥ १ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ यदिभेदं दर्शयति श्लोकस्येति। हे कान्ते श्लोकस्य पद्यस्य चरणान्तमात्रे सर्वत्र पादान्ते यतिर्विरतिः। तदर्द्धे श्लोकार्द्धे पुनर्विशेषरूपा विशेषेण यतिः। हे विम्बोष्ठि व्यक्तानभिव्यक्तविभक्तिके वेदादिपदान्ततः वेदादिपदान्ते च यतिः स्यात्। चरणान्तमात्रे यतिरित्यस्योदाहरणम्—'विशुद्धज्ञानदेहाय' इत्यादि। तस्यैव प्रत्युदाहरणम्—'नमस्तस्मै महादेवाय शशाङ्कार्द्धधारिणे' इत्येवमादि। तदर्द्धे तु विशेषरूपा इत्यत्र सन्धिकार्य्याभावात् स्पष्टविभक्तित्वाच्च विशेषः। तत्रोदाहरणम्—'नमस्यामि सदोद्भूतमिन्धनीकृतमन्मथम्। ईश्वराख्यम्परं ज्योतिरज्ञानतिमिरापहम्॥' अत्र ईश्वराख्यमित्यस्य पूर्वमकारेण सहयोगो न कर्तव्यः। समासे प्रत्युदाहरणम्—'सुरासुरशिरोरत्नस्फुरत्किरणमञ्जरी—पिञ्जरीकृतपादाब्जद्वन्द्वं वन्दामहे शि[व]म्॥' वेदादिपदान्ततश्च व्यक्तानभिव्यक्तविभक्तिके। तत्र श्रूयमाणविभक्त्यन्तं व्यक्तविभक्तिकम्। समासान्तर्भूतविभक्त्यन्तमनभिव्यक्तविभक्तिकम्। तत्रोदाहरणम्—'यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु' इत्यादि। व्यक्तानभिव्यक्तविभक्तिके इति चरणान्तमात्र इत्यनेन सम्बध्यते। तत्रोदाहरणम्—'वशीकृतजगत्कालं कण्ठेकालं नमाम्यहम्। आदिनन्दाकलाशेषशशिलेखाशिखामणिम्।' अपिच—'नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे। त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे॥ १॥

पूर्व्वापरांशौ यदि नैकवर्णौ स्यातां स्फुटेन्दीवरपत्रनेत्रे।
पदस्य मध्येऽपि यतिः क्वचित्स्याद्गुणाब्धिवाणर्तुहयाचलादौ॥ २॥

पूर्व्वेति। हे स्फुटेन्दीवरपत्रनेत्रे प्रफुल्लनीलोत्पलदललोचने क्वचित्पदमध्येऽपि गुणाब्ध्यादौ यतिः स्यात्, यदि पूर्व्वापरौ भागौ एकाक्षरविशिष्टौ न स्याताम्। तत्रोदाहरणम्। 'पर्य्यासिचामीकरकटकतटे श्लिष्टशीतेतरांशौ' इत्यादि। तथा 'कूजत्कोयष्टिकोलाहलमुखरभुवः प्रान्तकान्तारदेशा' इत्यादि। तथा 'हासो हस्ताग्रसंवाहनमपि तुलिताद्रीन्द्रसारद्विषोऽसा' वित्यादि। 'वैरिञ्चानान्तथोच्चारितरुचिरऋचाञ्चाननानाञ्चतुर्णा' मित्यादि। 'षज्जे पानीयमाह्लादयति च महिषम्पक्षपाती पृथक्' इत्यादि। 'भावं श्रृङ्गारसारस्वतमयजयदेवस्य विष्वग्वचांसि' इत्यादि। समुद्रादाविति किम्, पदमध्ये यतिः पादान्ते माभूत्। तद्यथा—



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



'प्रणमत भवबन्धक्लेशनाशाय नारायणचरणसरोजद्वन्द्वमानन्दहेतु'मित्यादि। पूर्वोत्तरभागयोरेकाक्षरत्वे तु यतिर्दुष्यति। तत्रोदाहरणम्—'एतस्या गण्डतलम-मलं गाहते चन्द्रकक्ष' मित्यादि। 'एतस्या राजति मुखमिदं पूर्णचन्द्रप्रकाश' मित्यादि। तथा सुरासुरशिरोनिघृष्टचरणारविन्दश्शिव' इत्यादि ॥ २ ॥

पूर्वान्तवत्सुन्दरि संहितायामचः कदाचित्तु परादिवत्स्युः।
तथा यणादेश इह प्रमुग्धे परादिवत्स्याद्यतिचिन्तने तु ॥ ३ ॥

पूर्व्वेति। हे सुन्दरि योऽयमेकादेशः स्वरसन्धौ विधीयते स क्वचित् पूर्व्वस्यान्तवत् भवति क्वचित्परस्यादिवत्। तथाच पाणिनेः स्मरणम्— 'अन्तादिवच्चे'( पां ६।१।८५ )ति। तत्र पूर्व्वान्तवद्भावे उदाहरणम्— 'स्यादस्थानोपगतयमुनासङ्गमेवाभिरामा। जम्भारातीभकुम्भोद्भवमिव दधतः' इत्यादि। 'दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्त्तये। स्वानुभूत्येकमानाय नमः शान्ताय तेजसे ॥' इत्यादि। परादिवद्भावे उदाहरणम्—'स्कन्धं विन्ध्याद्रिबुद्ध्या निकषति महिषस्याहितोऽस्तम्प्रयास्यन्निति। शूलं शूलन्तु गाढम्प्रहरहरहृषीकेशः केशोपि चक्रश्चक्रेणाकारि किन्न' इत्यादि। अत्र हि स्वरस्य परादिवद्भावे व्यञ्जनमपि तद्भक्तत्वात्तदादिवद्भवति। पूर्वापरांशौ यदि नैकवर्णौ इत्यन्तादिवद्भावविधावपि सम्बध्यते। तेन अस्या वक्त्राब्जमवजितपूर्णेन्दुशोभं विभाति। इत्येवंविधा यतिर्न भवति॥ यणादेशः परादिवदित्यस्येयं व्याख्या। हे प्रमुग्धे अतिसुन्दरि यतिचिन्तने तु यणादेशः इकः स्थाने 'इको यणची' ( पां ६।१।७७ )ति सूत्रेण विहितो यवरलादेशः परादिवत्परस्यादिवद्भवति। तत्रोदाहरणम्—'दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन् य' इत्यादि। 'विततघनतुषारक्षोदशुभ्रांशुपूर्णास्वविरलपदमालां श्यामलामुल्लिखन्तः' इत्यादि। 'ताम्बूलवल्लीपरिणद्धपूगास्वेलालतालिङ्गितचन्दनासु' इत्यादि च ॥ ३ ॥

पूर्वेण सम्बन्धयुजस्तु नित्यं स्युश्चादयः पूर्व्वपदान्तवद्भोः।
परेण सम्बन्धयुजस्तु नित्यं स्युः प्रादयस्तन्वि परादिवच्च ॥ ४ ॥

पूर्वेणेति। पूर्वेण प्राक्पदेन नित्यं सम्बन्धयुजः नित्यसम्बद्धाश्चादयः पूर्व्वपदान्तवत् पूर्व्वपदस्यान्तवद्भवन्ति। तेभ्यः पूर्व्वा यतिर्न कर्त्तव्येत्यर्थः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तत्रोदाहरणम्। 'स्वादु स्वच्छं सलिलमपि च प्रीतये कस्य न स्या' दिति। नित्यं प्राक्पदसम्बन्धा इति किम्। अन्येषाम्पूर्व्वपदान्तवद्भावो माभूत्। तद्यथा—'मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्या' इति। तथा 'इत्यौत्सुक्या-दपरिगणयन्गुह्यकस्तं ययाचे' इत्यादि। हे तन्वि परेण परपदेन नित्यं सम्बन्धयुजः नित्यसम्बन्धाः प्रादय उपसर्गाः परादिवत् स्युः भवेयुः। तेभ्यः परा यतिर्न भवतीत्यर्थः। तत्रोदाहरणम्—'दुःखं मे प्रक्षिपति हृदयं दुस्सहस्तद्वियोग' इति। परेण नित्यसम्बन्धयुजः किम्। कर्म्मप्रवचनीयेभ्यः परापि यतिर्यथा स्यादिति। तत्रोदाहरणम—द्विषम्प्रति स्फुरत्पादे मन्दायन्ते न खल्वि'ति। श्रेयांसि बहुविघ्नानि भवन्ति महतामपि' इति। अयन्तु चादीनां प्रादीनाञ्चैकाक्षराणां वा पदान्ते यतावन्तादिवद्भाव इष्यते। न त्वेकाक्षराणां पादमध्ये यतौ। तत्र हि पदमध्येऽपि चामीकरादिष्विव यतेरभ्यनुज्ञातत्वात्। तत्र चादीनामुदाहरणम्—'प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासमिति। प्रादीनामुदाहरणम्—दूरारूढप्रमोदं हसितमिव परिस्पष्ट-माशासखीभि' रित्यादि ॥ ४ ॥

इत्याम्नायप्रसिद्धस्ते यतिभेदः प्रदर्शितः।
शृण्वथ च्छन्दसां सञ्ज्ञा आकर्णायतलोचने ॥ ५ ॥

आम्नायते अभ्यस्यते असौ, कर्म्मणि घञ् 'आतो युक् चिण्कृतो' (पां ७।३।३३)रिति युक्। आम्नायप्रसिद्धः शास्त्रसम्मतः यतिभेदः यतिवैचित्र्यं ते तुभ्यं मया प्रदर्शितः। अथानन्तरं छन्दसां संज्ञाः शृणु आकर्णय। कर्णपर्य्यन्तदीर्घनेत्रे ॥ ५ ॥

इति यतिभेदकुसुमम्।

---



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## (घ) सामान्यसंज्ञाकुसुमम् ।

पादैरेकाक्षरैरुक्थात्युक्था तु द्व्यक्षरैर्मता ।
त्र्यक्षरैस्तु भवेन्मध्या प्रतिष्ठा चतुरक्षरैः ॥ १ ॥

पञ्चाक्षरैः सुप्रतिष्ठा गायत्री स्यात्षडक्षरैः ।
उष्णिक् सप्ताक्षरैः प्रोक्तानुष्टुबष्टाक्षरैः स्मृता ॥ २ ॥

नवाक्षरैः स्याद्बृहती ज्ञेया पङ्क्तिर्दशाक्षरैः ।
एकादशाक्षरैस्त्रिष्टुब्जगती द्वादशाक्षरैः ॥ ३ ॥

त्रयोदशाक्षरैर्धीरैः कान्तेऽतिजगती स्मृता ।
चतुर्दशाक्षरैः साध्वि शक्करी संस्मृता बुधैः ॥ ४ ॥

तथातिशक्करी नाम भवेत्पञ्चदशाक्षरैः ।
स्यात्षोडशाक्षरैरष्टिस्तथा सप्तदशाक्षरैः ॥ ५ ॥

अत्यष्टिः सम्मता शिष्टैर्धृतिरष्टादशाक्षरैः ।
ऊनविंशत्यक्षरैस्तु प्राज्ञैरतिधृतिः स्मृता ॥ ६ ॥

कान्ते विंशत्यक्षरैस्तु कृतिः कृतिभिरुच्यते ।
एकविंशत्यक्षरैस्तु प्रकृतिः सम्प्रकीर्त्तिता ॥ ७ ॥

द्वाविंशत्यक्षरैर्व्विद्वद्वृन्दैराकृतिरुच्यते ।
त्रयोविंशत्यक्षरैस्तु विकृतिः साध्वि बुध्यताम् ॥ ८ ॥

सालंकृते चतुर्विंशत्यक्षरैः सङ्कृतिर्भवेत् ।
पञ्चविंशत्यक्षरैस्तु भवेदतिधृतिः प्रिये ॥ ९ ॥

षड्विंशत्यक्षरैः पूर्व्वैः कविभिः कीर्त्तितोत्कृतिः ।
अत ऊर्द्ध्वं चण्डवृष्टिप्रपाताद्यास्तु दण्डकाः ॥ १० ॥

अत ऊर्द्ध्वं षड्विंशाक्षरात् परं चण्डवृष्टिप्रपातप्रभृतयस्तु दण्डकसंज्ञयाभिहिता भवन्ति ॥ १० ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



इति सामान्यसंज्ञोक्ता छन्दसामधुनैकतः।
लक्ष्यलक्षणसंश्लिष्टं शृणु च्छन्दोऽनुशासनम्॥ ११॥

इति सामान्यसंज्ञाकुसुमम्।

इति एवम्प्रकारा छन्दसां संज्ञा उक्ता। अधुना इदानीम् एकत एकपद्ये लक्ष्यलक्षणाभ्यामुदाहरणलक्षणाभ्यां संश्लिष्टमालिङ्गितं छन्दोऽनुशासनं छन्दःशास्त्रं शृणु आकर्णय॥ ११॥

इति सामान्यसंज्ञाकुसुमम्॥

इति धीरेश्वराचार्य्यकृतौ छन्दोऽनुशासने।
श्रीवृत्तमञ्जरीनाम्नि द्वितीयस्तवको गतः॥ १२॥

इतीति। स्तवको गुच्छः स्पष्टमन्यत्। इति छन्दोवृत्तौ द्वितीयः स्तवकः॥

---



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

# तृतीयः स्तवकः

## १ । उक्था ।

गुर्व्वै । चेत् श्रीः ॥ १ ॥

अथ त्रिविधेषु वृत्तेषु तावत् क्रमप्राप्तमेकाक्षरादि समवृत्तं लक्षयति गुर्व्विति । गुरु ऐ इति च्छेदः । ऐ इति सम्बोधनार्थकमव्ययम् । 'ऐ वाचं देहि धैर्य्यं नस्तव हेतोरस्त्सुव'( भट्टि ६।१ )दिति भट्टिप्रयोगात् । गुरु इत्येकवचननिर्देशादेकमेव गुरूपतिष्ठते । तेन चेद्यदि पादे एकं गुरु जायते तदा श्रीर्नाम च्छन्दो भवति । यद्यप्यस्मिन् छन्दोऽनुशासने लक्षणमेवोदाहरणम्, तथापि बालानां सुखबोधार्थं नानाग्रन्थोद्धृतानि स्वरचितानि चोदाहरणानि वृत्तावुपन्यस्तानि । यथा—'श्रीस्ते । सास्ताम् ॥' पादान्ते यतिः । अत्र ते इति सुबन्तप्रतिरूपकमव्ययम् । अन्यथा पादादिस्थिततया तुभ्यमित्यस्य स्थाने ते-आदेशो दुर्घटः । यत्तु पराभावान्नादित्वमिति पुरुषोत्तमपादेनोक्तन्तच्चिन्त्यम् 'आद्यन्तवदेकस्मि' ( पां १।१।२१ )न्निति पाणिनीयविरोधात् ॥ १ ॥

तदु । न सु ॥ २ ॥

तदिति । तत् उ इति च्छेदः । उ इति सम्बोधने । उ भोः यदि पादे तत्र गुरु न अर्थाल्लघु भवति तदा सु-नाम च्छन्दः । यथा—'क्व नु । स हि ॥' पादान्ते यतिः ॥ २ ॥

इत्युक्थाकुसुमम् ।

---

## २ । अत्युक्था ।

यत्र द्वौ स्तः । दीर्घौ सा स्त्री ॥ १ ॥

यत्रेति । यत्र यस्यां द्वौ दीर्घौ स्तः भवतः सा स्त्री-नामच्छन्दः । पादान्ते यतिः । यथा—गोपस्त्रीभिः । कृष्णो रेमे ( गङ्गादासः ) ॥ २ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



एके त्वेनाम्। प्राहुः कामम् ॥ २ ॥

अस्या ग्रन्थान्तरे नामान्तरमाह एके इति। एके कवयः एनां स्त्रियं कामं नामः छन्दः प्राहुः प्रकर्षेण ब्रुवन्ति। यथा वाणीभूषणे—कल्पाणं वः। शम्भूर्देयात् ॥ 'कल्पाणं' इत्यत्र यतिभङ्गः। शश्वत् शं व इत्येव वक्तुमुचितम् ॥ २ ॥

लघुर्गुरुः। यदा मही ॥ ३ ॥

लघुरिति। पादे यदा प्रथमं लघुस्ततो गुरुः स्यात्तदा मही नाम च्छन्दो भवति। यथा—हरिर्मुदे। सदास्तु नः ॥ पादान्ते यतिः ॥ ३ ॥

आदि दीर्घि। सारनाम ॥ ४ ॥

आदीति। यस्य पादे आदि अक्षरं दीर्घि दीर्घवर्णविशिष्टं स्यात् तत् सारनामकं छन्दः भवेत्। यथा—देव रक्ष। मुक्तिदक्ष ॥ पादान्ते यतिः ॥ ४ ॥

लघुलघु। यदि मधु ॥ ५ ॥

लघ्विति। लघुनः परं लघु लघुलघु। अन्यथा द्वन्द्वे कृते एकशेषःस्यात्। यद्वा असमस्तं पदद्वयम्। पादे यदि लघुद्वयं प्रयुज्यते तदा मधुनामकं छन्दो भवति। यथा—मलमज। हर मम ॥ पादान्ते यतिः ॥ ५ ॥

इत्यत्युक्थाकुसुमम्।

---

## ३। मध्या।

यत्र स्युर्दीर्घाणि। त्रीणि स्यात्सा नारी ॥ १ ॥

अथ त्र्यक्षरपादवृत्तं लक्षयति यत्रेति यत्र यस्यां त्रीणि दीर्घाणि स्युः सा नारी नाम च्छन्दः स्यात्। यथा—गोपानां नारीभिः। श्लिष्टोऽव्यात् कृष्णो नः ॥ (गङ्गादासः)। पादान्ते यतिः ॥ १ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तामेके हे कान्ते। तालीश्चाभाषन्ते ॥ २ ॥

नामान्तरमाह। तामिति। हे कान्ते एके मुख्या आचार्य्यास्तां नारीं ताली-नामिकाञ्चाभाषन्ते आलपन्ति ॥ २ ॥

द्वितीयस्तृतीयः। गुरुश्चेत् शशी स्यात् ॥ ३ ॥

द्वितीय इति। चेद्यदि द्वितीयस्तृतीयश्च वर्णौ गुरुस्तदा शशी शशिनामकं छन्दः स्यात्। यथा—तमस्त्वयरातिः। शशी खे विभाति ॥ पादान्ते यतिः ॥ ३ ॥

तमेवाह कश्चित्। भवानीं विपश्चित् ॥ ४ ॥

अस्य नामान्तरमप्याह तमिति। कश्चित्कोऽपि विपश्चित् कविस्तं शशिनमेव भवानीमाह ब्रवीति ॥ ४ ॥

आदिमः सान्तिमः। चेद्गुरुः स्यान्मृगी ॥ ५ ॥

आदिम इति। अन्तिमेन सहित आदिमो वर्णौ यदि गुरुः स्यात्तदा मृगी नाम च्छन्दो भवति। यथा—सा मृगीलोचना। राधिका श्रीपतेः ॥ (गङ्गादासः)। यथा वा—शङ्करः शङ्करः। पातु नः पातु नः ॥ पादान्ते यतिः ॥ ५ ॥

ताम्प्रियेतिप्रिये। के चनाचक्षते ॥ ६ ॥

तामिति। हे प्रिये केचनाचार्य्यास्तां मृगीं प्रियेत्याचक्षते कथयन्ति ॥ ६ ॥

अगुरुद्वितयात्। गुरु चेद्रमणः ॥ ७ ॥

अगुर्विति। चेत् यदि अगुरुद्वितयात् लघुद्वयात् परं गुर्व्वक्षरमेकं स्यात्तदा रमणो नामच्छन्दो भवति। यथा—शशिना रजनी प्रभुणा धरणी ॥ पादान्ते यतिः ॥ ७ ॥

ह्रस्वं यदन्त्यन्तु। पञ्चालमाख्यातु ॥ ८ ॥

ह्रस्वमिति। यस्यान्त्यमेवाक्षरं ह्रस्वं स्यात् तं पञ्चालं नाम च्छन्द आख्यातु प्रकथयतु। यथा—शर्म्माणि सर्वाणि। देयानि शर्व्वाणि ॥ पादान्ते यतिः ॥ ८ ॥

द्वितीयगुरुं हि। मृगेन्द्रमवेहि ॥ ९ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



द्वितीयेति। हि अवधारणे। द्वितीयो गुरुर्यस्मिंस्तं द्वितीयगुरुमेव मृगेन्द्रं नाम छन्दः अवेहि जानीहि। यथा—करीन्द्रभुजं हि। मृगेन्द्रमवेहि॥ पादान्ते यतिः॥ ६॥

तमेव मृगाक्षि। मृगाङ्कमुशन्ति॥ १०॥

मृगेन्द्रस्य नामान्तरमाह तमिति। हे मृगाक्षि तमेव मृगेन्द्रमेव मृगाङ्कं नाम छन्द उशन्ति इच्छन्ति। वश कान्तौ धातुः॥ १०॥

प्राग्गुरु चेन्ननु। मन्दरमामन॥ ११॥

प्रागिति। ननु भोः प्राक् आदौ यदि गुरु भवति तदा मन्दरं नाम छन्द आमन अभ्यस्य। म्ना अभ्यासे म्नाधातोर्लोटो मध्यमपुरुषैकवचने शपि 'पाघ्रे' (पां ७।३।७८) ति मनादेशे 'अतो हे' (पां ६।४।१०५)रिति हिलोपे च आमनेति सिद्धम्। उदाहरति यथा—शङ्कर हे पुरु। त्वं मम शं कुरु॥ पादान्ते यतिः॥ ११॥

त्रिलघु यदि तु। कमलमयतु॥ १२॥

यदि तु यदि हि त्रिलघु त्रयो लघवो यस्मिंस्तथाभूतं स्यात् तदा कमलं नाम च्छन्दः अयतु अवगच्छतु। इ गतौ भ्वादिरयम्। गत्यर्थस्य ज्ञानार्थत्वात् ज्ञानार्थश्च। कमलमुदाहरति यथा—मदघमनघ। शमय शमय॥ पादान्ते यतिः॥ १२॥

इति मध्याकुसुमम्।

---

## ४। प्रतिष्ठा।

यस्यां वर्णाश्चत्वारः स्युः।
दीर्घा सा स्यात्कन्या धन्ये॥ १॥

हे धन्ये यस्यां चत्वारो वर्णा दीर्घाः स्युः सा कन्या नाम छन्दः स्यात्। यथा—जाया माया पुत्रा धूर्त्ताः। एवं ज्ञात्वा युक्तं कुर्य्याः॥ यथा वा—



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



भास्वतकन्या सैका धन्या। यस्याः कूले कृष्णोऽखेलत्॥ (गङ्गादासः)। पादान्ते यतिः॥ १॥

काव्याम्बोधेस्तीरोत्तीर्णाः।
तामेवैके प्राहुस्तीर्णाम्॥ २॥

अस्या नामान्तरमाह काव्येति। काव्याम्बोधेः काव्यसागरस्य तीरोत्तीर्णा-स्तीरमुत्तीर्णा एके कवयस्तां कन्यां तीर्णां प्राहुः तीर्णानामच्छन्दः प्रवदन्ति। अत्र प्रपूर्वकब्रूञो लटः प्रथमपुरुषस्य बहुवचने 'ब्रुवः पञ्चानामादित एवे' (पां ३।४।८४) ति झेर्जुसादेशः। 'आह च ब्रुव' इत्याहादेशश्च॥ २॥

लघुः प्राच्यस्ततो दीर्घाः।
त्रयश्चेन्मुग्धधारः स्यात्॥ ३॥

यदि प्राच्यः प्रथमो वर्णो लघुः ह्रस्वः ततः परे त्रयो वर्णा दीर्घा भवन्ति तदा मुग्धधारनाम च्छन्दः स्यात्। यथा—रजो ब्रह्माच्युतः सत्त्वम्। तमो रुद्रो गुणं धत्ते॥ पादान्ते यतिः।

द्वितुर्य्यकौ गुरू यदा।
नगाणिका भवेत्तदा॥ ४॥

यदि द्वितीयचतुर्थौ वर्णौ गुरू भवतस्तदा नगाणिका नामच्छन्दः स्यात्। यथा—हरेः पदाम्बुजं भजन् सखे भवाम्बुधिं तर। पादान्ते यतिः। नगालिके-त्यपि पाठान्तरं दृश्यते॥ ४॥

त्रिलघुतो यदि भवेत्।
गुरु तदा सति सती॥ ५॥

हे सति यदि त्रिलघुतो लघुत्रयात् परमेकं गुरु भवेत् तर्हि सती नाम च्छन्दः स्यात्। यथा—मुररिपो तव पदम्। नमति सा ननु सती॥ पादान्ते यतिः॥ ५॥

चेद्द्वितीयतुर्यमेव।
ह्रस्वमस्ति घाय्यगादि॥ ६॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यदि द्वितीयतुर्य्यं द्वितीयश्चतुर्थश्चाक्षरं ह्रस्वं लघु अस्ति भवति तर्हि धारी नाम छन्दः अगादि गदिता। यथा—हे घनाभ पद्मनाभ। स्वान्तमेहि शं विधेहि॥ पादान्ते यतिः॥ ६॥

त्रिलघुत इह सति।
यदि लघ मणिरिति॥ ७॥

हे सति इह यदि त्रिलघुतः लघुत्रयात् परं लघु भवति तदा मणिरिति मणिनामकं छन्दो भवति। यथा—पदयुगमज तव। विलसतु हृदि मम॥ पादान्ते यतिः॥ ७॥

इति प्रतिष्ठाकुसुमम्।

---

## ५। सुप्रतिष्ठा।

यस्याः पञ्च स्युः पादे दीर्घाश्चेत्।
कान्ते विद्वद्भिः सोक्ता सम्मोहा॥ १॥

हे कान्ते यस्याः पादे पञ्च वर्णा यदि दीर्घाः स्युः तदा सा विद्वद्भिः सम्मोहा नाम छन्दः उक्ता। यथा—धर्म्मं रक्षिष्यन् शौरेर्देवक्याम्। आविर्भूतो यः सोऽव्यान्मृत्योर्नः॥ पादान्ते यतिः॥ १॥

द्वौ द्वौ तु दीर्घावाद्यन्तयोः स्तः।
एको लघुश्चेन्मध्ये स हारी॥ २॥

चेद्यदि पादस्यादावन्ते च द्वौ द्वौ दीर्घौ वर्णौ स्तः मध्ये तु यदि एको लघुवर्णः स्यात्तदा स हारी नाम उक्तः। यथा—गोपालबालो गोमध्यचारी। चित्ते ममास्तां दुःखापहारी॥ पादान्ते यतिः॥ २॥

निर्म्माति शश्वत् सत्सत्प्रबन्धम्।
अन्ये तमाहुर्हारीतबन्धम्॥ ३॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अस्य नामान्तरमाह निर्म्मात्रीति। हे अनवरतसत्सत्प्रबन्धनिर्म्मात्रि रचयित्रि अन्ये आचार्य्यास्तं हारिणं हारीतबन्धमाहुः ब्रुवन्ति। सत्सत्प्रबन्धमित्यत्र कर्म्मणि द्वितीया न षष्ठी तृन्योगे तन्निषेधात् ( पां २।३।६९ ) ॥ ३ ॥

द्वितीयतुर्य्यं सपञ्चमं भोः।
यदा गुरु स्यात्तदा विभूतिः ॥ ४ ॥

भोः प्रिये यदा पञ्चमेन सहितं द्वितीयचतुर्थं गुरु स्यात्तदा विभूतिर्नाम छन्दः भवति। यथा—नवोद्धृताशानुबद्धतृष्णः। सतां विभूत्यै सदास्तु कृष्णः ॥ पादान्ते यतिः ॥ ४ ॥

आद्यचतुर्थं दीर्घमथान्त्यम्।
यत्र हि जातं तं वद हंसम् ॥ ५ ॥

यत्र तु प्रथमं चतुर्थम् अथ अन्त्यञ्चाक्षरं दीर्घं जातं तं हंसं नाम छन्दो वद। यथा—कृष्णसनाथा तर्णकपङ्क्तिः। यामुनकच्छे चारु चचार ॥ ( गङ्गादासः )। पादान्ते यतिः ॥ ५ ॥

चिन्तितसच्चित् कोऽपि विपश्चित्।
आह च पङ्क्तिं वाक्षरपङ्क्तिम् ॥ ६ ॥

अस्य नामान्तरमाह चिन्तित इति। चिन्तितं सच्चित् ब्रह्म यया हे चिन्तितसच्चित्कोऽपि विपश्चित्कविस्तं हंसं पङ्क्तिम् अक्षरपङ्क्तिं वा छन्द आह वदति।

सतृतीयकं ननु पञ्चमम्।
गुरु चेत्तदा कथिता प्रिया ॥ ७ ॥

ननु भोः यदि तृतीयेन सह पञ्चममक्षरं गुरु स्यात्तदा प्रिया नाम छन्दः कथिता। यथा—व्रजसुभ्रुवो विलसत्कलाः। अभवन् प्रिया मुरवैरिणः ॥ पादान्ते यतिः ॥ ७ ॥

चतुरगुरु पुनरगुरु।
यदि भवति यमकमिति ॥ ८ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यदि चतुरगुरु चतुर्ह्रस्वं पुनरगुरु पुनर्ह्रस्वं मिलित्वा पादे ह्रस्वपञ्चकं स्यात्तदा यमकमिति यमकनामकं छन्दो भवति। यथा—मुरदमन भवशमन। कुरु कुशलमलममल॥ पादान्ते यतिः॥ ८॥

अपरकविरिदमुशति।
यमकगुण इति भणति॥ ६॥

अस्य नामान्तरमाह। हे उशति सस्नेहे अपरकविरिदं यमकं यमकगुण इति भणति वक्ति॥ ६॥

इति सुप्रतिष्ठाकुसुमम्।

---

## ६। गायत्री।

यत्पादे षड्वर्णा दीर्घा दृश्यन्ते चेत्।
सद्भिर्विद्युल्लेखा शेषा वा सा प्रोक्ता॥ १॥

यस्याः पादे षड्यदि दीर्घा वर्णा दृश्यन्ते तर्हि सद्भिः पण्डितैः सा विद्युल्लेखा नाम शेषा नाम वा छन्दः प्रोक्ता अभिहिता। यथा—गीर्व्वाणानां पक्षः कंसध्वंसे दक्षः। आरण्यस्त्रक्कण्ठः पायाद्वो वैकुण्ठः॥ पादान्ते यतिः॥ १॥

द्वितीयस्तृतीयस्तथा पञ्चमः स्यात्।
गुरुर्यत्र षष्ठश्च सा सोमराजी॥ २॥

यत्र द्वितीयतृतीयपञ्चमषष्ठा गुरवः स्युः सा सोमराजी नामच्छन्दः। यथा—हरे सोमराजीसमा ते यशःश्रीः। जगन्मण्डलस्य च्छिनत्त्यन्धकारम्। [ गङ्गादासः ] पादान्ते यतिः॥ २॥

इमां शङ्खनारीं श्रिते कैटभारिम्।
कुरङ्गाक्षि धन्ये बुधाः प्राहुरन्ये॥ ३॥





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अस्या नामान्तरमाह। हे कैटभारिं विष्णुं श्रिते समाश्रिते अतएव धन्ये हे कुरङ्गाक्षि मृगनयने इमां शङ्खनारीं नाम छन्दः अन्ये बुधाः प्राहुः वदन्ति ॥ ३ ॥

आद्यद्वितयञ्चेद्यस्यां गुरु तद्वत्।
स्यात्पञ्चमषष्ठं सोक्ता तनुमध्या ॥ ४ ॥

यस्यामाद्यद्वितयं प्रथमं द्वितीयं चाक्षरं गुरु। पञ्चमषष्ठञ्च यदि तद्वद्गुरु सा तनुमध्या नाम छन्द उक्ता। तत्रोदाहरणम्—'धन्या त्रिषु नीचा कन्या तनुमध्या। श्रोणीस्तनगुर्वी भूयात्पतिभोग्या ॥ अत्र पादान्ते विशेषेण विश्रामः कर्त्तव्य इत्याम्नायः' [ हलायुधः ] ॥ ४ ॥

प्रथमचतुष्कं लघु ननु यस्याम्।
द्विगुरु ततस्तां वद चतुरंसाम् ॥ ५ ॥

ननु भो यस्यां प्रथमचतुष्कं प्रथमद्वितीयतृतीयचतुर्थमक्षरं लघु। ततः पश्चात् द्विगुरु गुरुद्वयं स्यात्तां चतुरंसां नाम छन्दः वद। तत्रोदाहरणम्—शशिवदनानां व्रजतरुणीनाम्। अधरसुधोर्मिं मधुरिपुरैच्छत् ॥ [ गङ्गादासः ]। पादान्ते यतिः ॥ ५ ॥

अयि पुनरेनां जगति विपश्चित्।
शशिवदनेति प्रदिशति कश्चित् ॥ ६ ॥

अयि भोः कश्चिद्विपश्चित्, एनां चतुरंसां पुनः शशिवदनेति नाम छन्दः प्रदिशति निर्दिशति। चतुरंसाया एव नामान्तरमित्यर्थः ॥ ६ ॥

आदिमं दीर्घकं स्यात्तृतीयन्तथा।
तुर्य्यषष्ठं यदा सा विमोहा तदा ॥ ७ ॥

यदा आदिमं प्रथमं तृतीयं तथा चतुर्थं षष्ठञ्चाक्षरं दीर्घं स्यात्तदा सा विमोहा नाम छन्दःस्यात्। तत्रोदाहरणम्—धर्मसंस्कारकः कंससंहारकः। देवकीबालकः सोऽस्तु मे पालकः ॥ पादान्ते यतिः ॥ ७ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सतृतीयमुदेत्यथ षष्ठमहो ।
गुरु यत्र तु सा कथिता तिलका ॥ ८ ॥

अहो भो यस्यास्तु तृतीयेन सहितं षष्ठम् अक्षरं यदि गुरु। उदेति गुरु भवति तर्हि सा तिलका नाम छन्दः कथिता । तत्रोदाहरणम्—कृपया श्रितवान् हृदयस्य विलम् । हर संहर मे कलुषं निखिलम् ॥ पादान्ते यतिः ॥ ८ ॥

आद्यद्वयमथो अन्तश्च गुरु चेत् ।
यस्यां भवति सा ज्ञेया वसुमती ॥ ९ ॥

यस्यामाद्यद्वयं प्रथमं द्वितीयम् अथो अनन्तरम् अन्त्यञ्चाक्षरं यदि गुरु भवति तदा सा वसुमती नाम छन्दः ज्ञेया । राजा यदि निजं धर्म्मं हृदयगम् । वर्मेव कुरुते धन्या वसुमती ॥ पादान्ते यतिः ॥ ९ ॥

ह्रस्वन्तृतीयश्च षष्ठश्च यस्मिन् हि ।
मृद्वङ्गि तन्नाम मन्थानमाख्याहि ॥ १० ॥

हे मृद्वङ्गि कोमलाङ्गि यस्मिन् तृतीयञ्च षष्ठञ्चाक्षरं ह्रस्वं लघु भवति तस्य नाम मन्थान माख्याहि मन्थानं नाम छन्दः कथय । यथा—श्रीकृष्णपादाब्जमाध्वीकपानस्य । मन्ये प्रभावेन युध्येय कालेन ॥ पादान्ते यतिः ॥ १० ॥

प्रथमं द्वितीयमथ तुर्य्यकञ्च ।
लघु षष्ठकञ्च मधुसारमात्थ ॥ ११ ॥

अथ यदि प्रथमं द्वितीयं चतुर्थं षष्ठञ्चाक्षरं लघु स्यात्तर्हि मधुसारं नाम छन्द आत्थ वद । हरिपादपद्ममधुसारसङ्गि । मम चित्तभृङ्गसुखमस्त्वसङ्गि ॥ पादान्ते यतिः । अयमक्षरात्मकः । मधुसारस्तु मात्रागणात्मक इत्यनयोर्भेदः ॥ ११ ॥

यदाद्यतृतीयचतुर्थमुदेति ।
सषष्ठमदीर्घमु मालतिकेति ॥ १२ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उ भो यदा यर्हि षष्ठेन सहितं प्रथमतृतीयचतुर्थमक्षरमदीर्घं ह्रस्वमुदेति तदा मालतिका मालतीति नाम छन्दो भवति। यथा—कथं रसने त्वमहर्दिवमेव। असारकथासु रसं न जहासि ॥ पादान्ते यतिः। मालतिकेत्यत्र स्वार्थे कन् ॥ १२ ॥

यदि षड्गुरुविरचिततनु।
दमनकमिति सुतनु वितनु ॥ १३ ॥

हे सुतनु यदि षड्भिरगुरुभिर्विरचिता तनुर्यस्य तत् षड्लघुकपादं छन्दः दमनकनामकं वितनु विस्तारय। यथा—मदनदहन शमनदमन। नवविधुधर मलमपहर ॥ पादान्ते यतिः ॥ १३ ॥

इति गायत्रीकुसुमम्।

---

## ७। उष्णिक्।

यस्यां सप्त स्युः कान्ते दीर्घा वर्णाः सत्स्वान्ते।
सा शीर्षाख्या विद्वद्भिर्निर्दिष्टा छन्दोविद्भिः ॥ १ ॥

हे सत्स्वान्ते प्रशस्तहृदये कान्ते यस्यां सप्त वर्णा दीर्घाः स्युः गुरवो भवेयुः सा छन्दोविद्भिर्विद्वद्भिः शीर्षा नाम छन्दो निर्दिष्टा ॥ पादान्ते यतिः ॥ १ ॥

अयि यस्यां तृतीयं गुरु तुर्य्यञ्च षष्ठम्।
अपि चान्त्यन्तथा चेद्वद तां हंसमालाम् ॥ २ ॥

अयि भो यस्यां तृतीयं चतुर्थं षष्ठमपि तथान्त्यञ्च गुरु चेत्तर्हि तां हंसमालां नाम छन्दो वद। यथा—शरदि प्रोदितायाम्प्रतिपद्माकरान्तः। चरतीयं सलीलं मुदिता हंसमाला ॥ पादान्ते यतिः ॥ २ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



दीर्घाः प्राक् त्रय एव ह्रस्वौ द्वावथ वर्णौ।
यत्रान्त्यौ च गुरू स्तो ज्ञेया सा मदलेखा ॥ ३ ॥

यस्यां प्राक् प्रथमं त्रय एव वर्णा दीर्घा भवन्ति। अथानन्तरं द्वौ वर्णौ ह्रस्वौ भवतः। अन्त्यौ द्वौ तु वर्णौ गुरू भवतः सा मदलेखा नाम छन्दो ज्ञेया। यथा—रङ्गे बाहुविरुग्णाद्दन्तीन्द्रान्मदलेखा। लग्नाभून्मुर-शत्रौ कस्तूरीरसचर्चा [ गङ्गादासः ] ॥ ३ ॥

द्वितीयमथ षष्ठं यतोऽस्ति गुरु सान्त्यम्।
गुणाब्धिविरतिश्चेत् कुमारललिता सा ॥ ४ ॥

यतो यत्र द्वितीयमक्षरम् अथान्त्येन सहितं षष्ठं गुरु अस्ति। गुणैस्त्रिभिर-ब्धिभिः चतुर्भिश्च चेद्विरतिः सा कुमारललिता नाम छन्दो भवति। यथा—यदीयरतिभूमौ विभाति तिलकाङ्कः। कुमारललितासौ कुलान्यटति नारी ॥ [ हलायुधः ]। अत्र द्वाभ्यां पञ्चभिश्च केचिद्यतिमिच्छन्ति। तत्रो-दाहरणम्—इदं वदनपद्मम्प्रिये तव विभाति। इह व्रजति मुग्धे मनो भ्रमरताम्मे ॥ [ हलायुधः ]। पूर्वोदाहरणे कुलान्यटति नारीत्यत्र चतुर्थपादे "यणादेशः परादिव"दिति यत्युपनिषदो जागरूकतया त्रिभिरक्षरैर्यतिप्रदर्शनं भट्टहलायुधपादस्य प्रामादिकम्पूर्वपादत्रये समीचीनमेव ॥ ४ ॥

आद्यकन्तृतीयकं पञ्चमञ्च सप्तमम्।
तन्वि दीर्घकं यदा स्यात् समानिका तदा ॥ ५ ॥

हे तन्वि यदा प्रथमं तृतीयं पञ्चमं सप्तमञ्चाक्षरं दीर्घं स्यात्तदा समानिका नामच्छन्दः स्यात्। यथा—अस्तु देवसेव्ययोः कृष्णपादपद्मयोः। भुक्तिमुक्तिमूलयोर्मद्रतिर्द्विलोकयोः ॥ पादान्ते यतिः ॥ ५ ॥

आद्यद्वयं गुरु चेत् तुर्य्यन्तथाक्षरकम्।
यस्मिन् ससप्तमकं चूड़ामणिं वद तम् ॥ ६ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यत्र आद्यद्वयं प्रथमद्वितीयं सप्तमसहितञ्चतुर्थञ्चाक्षरं यदि गुरु तर्हि तं चूड़ामणिं नाम च्छन्दः कथय। यथा—चण्डात्सुराधिपतेर्गोवर्द्धनन्दधता। गोगोपवत्सकुलं येनावि सोऽवतु वः॥ पादान्ते यतिः॥ ६॥

प्रथमममगुरवः षड़थ यदि गुरुः।
भवति मधुमती मधुमदिति च वा॥ ७॥

यदि प्रथममादौ षड्वर्णा अगुरवो लघवो भवन्ति, अथानन्तरम् एको वर्णो गुरुर्भवति, तदा सा मधुमती नाम अथवा मधुमदिति च मधुमत् नाम छन्दश्च भवति। यथा—रविदुहितृतटे वनकुसुमततिः। व्यधित्तमधुमती मधुमथनमुदम्॥ पादान्ते यतिः॥ ७॥

भवति करहञ्च इति स यदि पञ्च।
लघव उत षष्ठपर उशति यत्र॥ ८॥

हे उशति स करहञ्च इति करहञ्चो नाम छन्दो भवति। यत्रादौ पञ्च वर्णा लघवः प्रयुज्यन्ते। उत एवं षष्ठपरः षष्ठाक्षरात्परः सप्तमो वर्णो यदि लघुः प्रयुज्यते। यथा—विषयजनितानि परिहर सुखानि। हरिहरपदानि भजत गतिदानि॥ ८॥

चतुरगुरूत्तरमलघु ततो लघु।
भणति सुवासकमगुरु पुनर्यदि॥ ९॥

चतुर्भ्यः अगुरुभ्यः अर्थात् लघुवर्णेभ्यः उत्तरं परं यद्येकमलघु अर्थाद्गुरु, ततः परमप्येकं लघु, पुनरप्येकमगुरु लघु भवेत् तर्हि सुवासकं नाम छन्दो भणति वदति। यथा—पुरु करुणाकर पदकमलन्तव। विलसतु मानससरसि सदा मम॥ पादान्ते यतिः॥ ९॥

षड्गुरुपरत उत लघु यदि च।
तदमृतमुशति शुभमिह भवति॥ १०॥

हे शुभमुशति कल्याणं वाञ्छन्ति यत्र षड्भ्यः अगुरुभ्यः परस्मिन् यदि चैकं लघु जायते तदा इह जगति तत् अमृतमिति अमृतं नाम



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



छन्दो भवति । यथा—यदुमणिचरणगलदमृतकण। मदसुकिकिदिवितृषमपगमय ॥ पादान्ते यतिः ॥ १० ॥

इत्युष्णिक्कुसुमम् ।

---

## ८। अनुष्टुप् ।

यस्यामष्टौ दीर्घा वर्णाः स्युश्चेद्वेदैर्वेदैश्छेदः ।
छन्दोविद्भिः सङ्ख्यावद्भिः सा सङ्गीता विद्युन्माला ॥ १ ॥

यस्याम् अष्टौ दीर्घा वर्णा भवेयुश्चतुर्भिश्चतुर्भिश्चाक्षरैर्यदि विरामस्तर्हि छन्दोज्ञैः कविभिः सा विद्युन्माला नाम छन्दः कथिता। यथा—विद्युन्मालालोलान् भोगान् मुक्त्वा मुक्तौ यत्नं कुर्य्यात्। ध्यानोत्पन्नं निस्सामान्यं सौख्यं भोक्तुं यद्याकाङ्क्षेत् ॥ [ हलायुधः ]। यथा वा—गोगं गङ्गोमेशं शं मे साहि हिंसारङ्गागारम्। तुङ्गाङ्गन्तं नाकं कंना सोहं हंसो वन्दे देवम् [ वृत्तमाला ] ॥ १ ॥

गुरु द्वितीयञ्चतुर्थं सपञ्चमं सप्तमञ्च ।
यदाष्टमञ्च प्रयुक्तं प्रिये वितानन्तदा स्यात् ॥ २ ॥

हे प्रिये यदा द्वितीयं चतुर्थं पञ्चमेन सहितं सप्तमम् अष्टमञ्चाक्षरं गुरु प्रयुक्तं भवति तदा वितानं नाम छन्दः स्यात्। यथा—सखे भवव्याघ्रवक्त्रं विलोक्य मा भीतिमागाः। भयातपध्वंस्यजस्ते वितानवत् स्याच्छरण्यः ॥ पादान्ते यतिः ॥ २ ॥

दीर्घाश्चेत्त्रय इहाद्या वर्णाः सप्तम उतान्त्यः ।
जाता यत्र सुमनोज्ञं तत्स्याद्धंसरुतसंज्ञम् ॥ ३ ॥

यत्र आद्याः प्रथमद्वितीयतृतीया इति त्रयो वर्णाः सप्तम उत एवं पादान्तस्थितश्च दीर्घा जातास्तत् सुमनोज्ञं सुन्दरं हंसरुतं नाम छन्दः स्यात्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यथा—[ अभ्यागामिशशिलक्ष्मीमञ्जीरक्वणिततुल्यम् । तीरे राजति नदीनां रम्यं हंसरुतमेतत् ॥ ( हलायुधः ) ] ॥ ३ ॥

प्रथमसगुरवः षट् तदनु यदि गुरू द्वौ ।
ननु सुतनु तदोक्ता सुकविभिरिह तुङ्गा ॥ ४ ॥

हे सुतनु यदि प्रथममादौ षड्वर्णा अगुरवो लघवो भवन्ति तदनु ततः परं द्वौ वर्णौ गुरू भवतः तदा सुकविभिरिह जगति तुङ्गा नाम छन्दः उक्ता अभिहिता । स्वरभिगमसुरङ्गा मम गतिरतितुङ्गा । भवतु वरतरङ्गा परत इह च गङ्गा ॥ पादान्ते यतिः ॥ ४ ॥

गुरु द्वितीयतुर्यरकं यदा सषष्ठमष्टमम् ।
भवेत्तदा प्रमाण्ययेऽथवा प्रमाणिका प्रिये ॥ ५ ॥

अये भोः प्रिये यदा द्वितीयचतुर्थं षष्ठमष्टमञ्चाक्षरं गुरु भवेत्तदा प्रमाणी नाम अथवा प्रमाणिका नाम छन्दो भवति । यथा—मधु प्रपीय चाभवन्न- तानता न ता न ताः । ररक्ष नैषधस्तदा रराज राजराजराः ॥ [ नलोदयकाव्यम् ] यथा वा—उदारहारमण्डने नवोढमानिनीस्तने । अलेखि यन्नखैर्यशः समन्मथः स पूरुषः ॥ [ वृत्तमाला ] । पादान्ते यतिः ॥ ५ ॥

भवति गुरु षष्ठकम्भवति पुनरष्टमम् ।
कमलवदने यदा कमलमुदितन्तदा ॥ ६ ॥

हे भवति वृद्धिमति हे कमलवदने पद्ममुखि यदि षष्ठम्पुनरष्टमञ्च गुरु भवति तदा कविभिः कमलं नाम छन्द उदितमुक्तम् । यथा—भजदजन- रञ्जनं निजचरणसञ्जनम् । स्फुटकमललक्षणं भव हृदय सक्षणम् ॥ पादान्ते यतिः ॥ ६ ॥

यदि सती द्विगुणिता भवति सामलमते ।
सुकविभिः प्रकथिता गजगतिर्गजगते ॥ ७ ॥

हे अमलमते निर्मलबुद्धे हे गजगते गजगामिनि यदि सा पूर्व्वोक्ता सती चतुरक्षरपादा द्विगुणिता द्विगुणा भवति तदा सुकविभिः सा गजगतिर्नाम



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



प्रकथिता। यथा—रविसुतापरिसरे विहरतो दृशि हरेः। व्रजवधूर्गजगतिर्मुदमलं व्यतनुत ॥ [ गङ्गादासः ]। पादान्ते यतिः ॥ ७ ॥

सप्रथमन्तुर्यमथो पञ्चमकञ्चाष्टमकम्।
स्याद्गुरु चेद्वेदयतिर्माणवकाक्रीडितकम् ॥ ८ ॥

प्रथमेन सहितं चतुर्थम् अथो अनन्तरं पञ्चममष्टमञ्चाक्षरं यदि गुरु भवेत् चतुर्भिश्चितुर्भिश्च यतिस्तदा माणवकाक्रीड़ितकं नाम छन्दः स्यात्। यथा—माणवकाक्रीडितकं यः कुरुते वृद्धवयाः। हास्यमसौ याति जने भिक्षुरिव स्त्रीचपलः ॥ [ हलायुधः ] इत्यादि। "चञ्चलचूलञ्चपलै"रिति गङ्गादासोदाहरणं यतिभङ्गदोषाकुलं हलायुधवृत्तिविरोधात् ॥ ८ ॥

कैटभजिद्भक्तिरते वक्ति कविः शुद्धमते।
माणवकं कोऽप्यथवा माणवकाक्रीड़मिदम् ॥ ९ ॥

अस्य नामान्तरमाह। हे विष्णुभक्तिरते हे विशदबुद्धे कोऽपि कविरिदं माणवकाक्रीड़ितकं माणवकम् अथवा माणवकाक्रीड़ं नाम छन्दः वक्ति कथयति ॥ ९ ॥

आदिमन्तृतीयकञ्च पञ्चमञ्च सप्तमञ्च।
यत्र दीर्घमच्छदन्ति मल्लिकेति तां वदन्ति ॥ १० ॥

हे अच्छदन्ति निर्मलदशने यत्र आदिमं प्रथमं तृतीयं पञ्चमं सप्तमञ्चाक्षरं दीर्घं गुरु स्यात् तां मल्लिकेति मल्लिकां नाम छन्दः कवयो वदन्ति। ओं नमो जनार्द्दनाय पापसङ्घमोचनाय। दुष्टदैत्यमर्दनाय पुण्डरीकलोचनाय ॥ [ हलायुधः ]। पादान्ते यतिः ॥ १० ॥

व्यापृते सदैव दैवकार्य्यसञ्चयेषु सैव।
ऐ समानिकाथ वादिकोविदैः समान्यवादि ॥ ११ ॥

मल्लिकाया नामान्तरमाह। ऐ हे दैवकार्य्यकलापेषु सदैव व्यापृते सा एव मल्लिका एव कोविदैः पण्डितैः समानिका नाम अथवा समानी नाम छन्दः अवादि उदिता ॥ पादान्ते यतिः ॥ ११ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सतृतीयं ननु तुर्यं गुरु चेत्सप्तमकं स्यात्।
अपि यत्राष्टममुच्चैर्वद तत्तर्हि वितानम् ॥ १२ ॥

ननु भोः सतृतीयं तृतीयेन सहितं चतुर्थं सप्तममष्टममपि अक्षरं यत्र गुरु चेत् गुरु यदि भवेत्तर्हि तद्वितानं नाम छन्द उच्चैर्वद। यथा—हृदयं यस्य विशालं गगनाभोगसमानम्। लभतेऽसौ मणिचित्रं नृपतिर्मूर्ध्नि वितानम् ॥ [ हलायुधः ]। पादान्ते यतिः ॥ १२ ॥

आदिगतं सचतुर्थं सप्तमकञ्च तथान्त्यम्।
यत्र गुरु प्रमदे स्याच्चित्रपदा गदिता सा ॥ १३ ॥

हे प्रमदे यत्र यस्यामादिगतं प्रथमं चतुर्थं सप्तमं तथा पादान्तस्थितञ्चाक्षरं गुरु स्यात्सा चित्रपदा नाम छन्दो गदिता शब्दिता। यथा—यस्य मुखे प्रियवाणी चेतसि सज्जनता च। चित्रपदापि च लक्ष्मीस्तं पुरुषन्न जहाति ॥ [ हलायुधः ]। पादान्ते यतिः ॥ १३ ॥

यस्मिंस्तु तृतीयं लघु तद्वच्च चतुर्थं सति।
स्यात्सप्तममप्यष्टममेतच्च वितानं वद ॥ १४ ॥

हे सति यस्मिन्नेव तृतीयमक्षरं लघु चतुर्थं सप्तममष्टममप्यक्षरं तद्वत् लघु स्यात् एतच्च वितानं नाम छन्दो वद। यथा—तृष्णां त्यज धर्म्मं भज पापे हृदयम्मा कुरु। इष्टा यदि लक्ष्मीस्तव शिष्टाननिशं संश्रय ॥ [ हलायुधः ]। अत्रापि पादान्ते यतिरित्याम्नायः ॥ १४ ॥

आद्यं द्वितीयतुर्य्यकं षष्ठन्तथाष्टमं गुरु।
यस्यां प्रयुज्यते प्रिये नाराचिकां वदन्ति ताम् ॥ १५ ॥

हे प्रिये यस्यां प्रथमं द्वितीयं चतुर्थं षष्ठमष्टमञ्चाक्षरं गुरु प्रयुज्यते, कवयस्तां नाराचिकां नाम छन्दो वदन्ति। यथा—'कङ्कालमालभारिणं कन्दर्पदर्पहारिणम्। संसारबन्धमोचनं वन्दामहे त्रिलोचनम् ॥ पादान्ते यतिः ॥ नाराचिकापि वितानान्तर्गतैव' [ हलायुधः ] ॥ १५ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



आद्यद्वितयं गुरु चेत् स्यात्पञ्चममष्टमकम् ।
यस्यां सति सा प्रथिता नाराचिकयाभिधया ॥ १६ ॥

हे सति यस्याम् आद्यद्वितयं प्रथमं द्वितीयं च तथा पञ्चममष्टमञ्चाक्षरं यदि गुरु स्यात् तर्हि सा नाराचिकयाभिधया नाराचिकानाम्ना प्रथिता प्रख्याता भवति । यथा—लक्ष्मीमभिवाञ्छसि चेद्भ्रातः कुमतिं विजहत् । तिष्ठन्नभियुक्तमते कार्य्यं कुरु धीरमतिः ॥ पादान्ते यतिः ॥ १६ ॥

द्विगुणचतुरगुरुरनुदिननुतगुरु ।
यदि स विमलमतिरचल इति वदति ॥ १७ ॥

अनुदिनं प्रतिदिनं नुतः स्तुतो गुरुर्यया बहुव्रीहिः । हे अनुदिननुतगुरु । वामोरु इतिवदूङन्तस्यास्य 'अम्बार्थनद्योर्ह्रस्वः' [ पा० ७।३।१०७ ] इति ह्रस्वः । द्विगुणाश्चत्वारः अगुरवो यत्र सः अष्टलघ्वक्षरघटित इत्यर्थः यदि प्रयुज्यते तर्हि विमलमतिः कविरचल इति अचलनाम छन्दो वदति । यथा—शमनशमन हर हर भवभयमज । जननमरणमथ मदनदहन दह ॥ पादान्ते यतिः ॥ १७ ॥

इत्यनुष्टुप्कुसुमम् ॥

---

## ६ । बृहती ।

अष्टाभ्यो दीर्घेभ्यो वर्णेभ्यो
भूयश्चैको दीर्घो यत्र स्यात् ।
छन्दोभिज्ञैर्विज्ञैर्विज्ञप्ता
रूपामालीसंज्ञा ज्ञेया सा ॥ १ ॥

यस्यामष्टाभ्यो दीर्घवर्णेभ्यः परः पुनरपि एको दीर्घवर्णः स्यात्, छन्दोऽभिज्ञैश्छन्दोविद्भिर्विज्ञैर्विज्ञप्ता निवेदिता सा रूपामालीसंज्ञा रूपामालीनाम



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



छन्दः त्वया ज्ञेया बोध्या। यथा—हत्वा शत्रुञ्चण्डी नृत्यन्ती सा चण्डी वः कल्याणं कुर्य्यात्। देवेन्द्राद्याः प्रीत्या सम्प्राप्ताः संसेवन्ते यत्पादाम्भोजम्॥ इत्यादि। पादान्ते यतिः॥ १॥

प्रथममगुरवः षट् स्यु-
स्तदनु च गुरवो यस्याम्।
त्रय उत हयदोर्श्छिन्ना
भुजगशिशुसृता सोक्ता॥ २॥

यस्यां प्रथममादौ षड्वर्णा अगुरवो लघवः तदनु च तत्पश्चात् त्रयो वर्णा गुरवो दीर्घाः स्युः एवं हयैः सप्तभिर्दोर्भ्यां द्वाभ्याञ्च छिन्ना सविरामा सा कविभिः भुजगशिशुसृता उक्ता भुजगशिशुसृता नाम छन्दः कथिता। यथा—इयमधिकतरं रम्या विकचकुवलयश्यामा। रमयति हृदयं यूनां भुजगशिशुसृता नारी॥ [हलायुधः]। भुजगशिशुसृता वक्रगतिरित्यर्थः॥ २॥

भुजगशिशुयुतामेतां
शशिमुखि कथयन्त्येके।
भुजगशिशुभृतामन्ये
भुजगशिशुवृतां केचित्॥ ३॥

अस्या नामान्तराण्याह। हे शशिमुखि एके आचार्य्या एतां भुजगशिशुसृतां भुजगशिशुयुताम् अन्ये भुजगशिशुभृताम् केचिदपरे भुजगशिशुवृतां कथयन्ति। यथा—हृदतटनिकटक्षौणी भुजगशिशुयुता यासीत्। मुररिपुदलिते नागे व्रजजनसुखदा साऽभूदिति [गङ्गादासः]॥ ३॥

अयि सुदति यत्र षष्ठं
गुरु तदनु चाष्टमञ्चेत्।
नवममपि चाक्षरं स्यात्
तरुणि तदवेहि विम्बम्॥ ४॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अयि भोस्तरुणि यत्र षष्ठमष्टमं नवममप्यक्षरं गुरु स्यात् तद्बिम्बं नाम छन्दः अवेहि अवगच्छ। यथा—व्रजपतिसुतस्य बिम्बारुणमधरयुग्ममेतत्। सखि ललितवेणु पीत्वा चल सफलयाव हावम्। पादान्ते यतिः॥ ४॥

सतृतीयममलवर्णे
चलकुण्डलयुतकर्णे।
गुरु चाष्टमनवमञ्चेद्
बृहती भवति तदा सा॥ ५॥

हे अमलवर्णे चलाभ्यां लोलाभ्यां कुण्डलाभ्यां युतौ कर्णौ यस्याः हे तथाभूते चेद्यदि अष्टमं नवमञ्च अक्षरं गुरु स्यात् तदा सा बृहती नाम छन्दो भवति। यथा—विदिता त्रिजगति वीणा बृहती जयतितरां या। कृततुम्बुरुस्करसङ्गा द्युषदां मदयति चेतः॥ पादान्ते यतिः॥ ५॥

अमलकमलवदने
चलकुवलयनयने।
नवमकमलघु यदा
कमलमिति वद तदा॥ ६॥

हे अमलकमलवदने हे चलकुवलयनयने यदा नवममक्षरमलघु गुरु भवति तदा कमलमिति कमलनाम छन्दो वद कथय। यथा—सहृदयकुशलकरं व्रजजनवृजिनहरम्। भज भुजगफणचरं सकलभुवनपितरम्॥ ६॥

आदिमं यत्र गुर्व्वक्षरं
स्यात्तृतीयञ्च तुर्य्यन्तथा।
षष्ठकं सप्तमञ्चान्तिमं
सा महालक्ष्म्यभिख्या भवेत्॥ ७॥

यस्यामादिमं प्रथमं तृतीयं तुर्य्यं चतुर्थं तथा षष्ठं सप्तममन्तिमं पादान्तस्थितञ्चाक्षरं गुरु स्यात्तर्हि सा महालक्ष्मीर्नाम छन्दो भवेत्। यथा—



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



श्रद्धया शुद्धभक्तया च यः सेवते श्रीमहालक्ष्मिकाम्। तस्य भूतिः सदा वर्द्धते शुक्लपक्षे यथा ग्लौकला॥ पादान्ते यतिः॥ ७॥

प्रथमं द्वितीयतुर्य्यकं
लघु यत्र षष्ठमष्टमम्।
अपि सा चिरण्टि वण्टिता
कविभिर्भुजङ्गसङ्गता॥ ८॥

हे चिरण्टि सुवासिनि यस्यां प्रथमं द्वितीयं चतुर्थं षष्ठमष्टममपि अक्षरं लघु स्यात्सा कविभि र्भुजङ्गसङ्गता नाम छन्दः कथिता। यथा—तरला-तरङ्गरिङ्गितैर्यमुना भुजङ्गसङ्गता। कथमेति वत्सचारकश्चपलः सदैव तां हरिः [ गङ्गादासः ]॥ पादान्ते यतिः। वटि विभाजने चुरादिः। 'इदितो नुम् धातो' [ पां ७।१।५८ ] रिति नुम्। ततः कर्म्मणि निष्ठा॥ ८॥

दीर्घकम्प्रथममक्षरं
स्यात्तृतीयमथ सप्तमम्।
तद्वदेव नवमं यदा
भद्रिका भवति सा तदा॥ ६॥

यदा प्रथमं तृतीयमथानन्तरं सप्तममक्षरं दीर्घं नवमञ्चाक्षरं तद्वदेव दीर्घमेव स्यात्तदा सा भद्रिका नाम छन्दो भवति। यथा—कृष्णपाद-कमलासवं यः पिवेदनुदिनं जनः। उद्धरेत्स कुलमात्मनो भद्रिकां गतिमथा-प्नुयात्॥ पादान्ते यतिः॥ ६॥

आद्यचतुर्थौ यत्र गुरू
पञ्चमषष्ठौ चेन्नवमः।
तन्मणिमध्यन्तन्वि तदा
स्यान्मणिबन्धो वा प्रमदे॥ १०॥

हे प्रमदे हे तन्वि यस्मिन् आद्यचतुर्थौ पञ्चमषष्ठौ च वर्णौ गुरू स्यातां चेद्यदि नवमश्च वर्णो गुरुः स्यात्तदा तत् मणिमध्यं नाम अथवा



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



मणिबन्धो नाम छन्दो भवेत्। यथा—कालियभागाभोगगतस्तन्मणिमध्य-स्फीतरुचा। चित्रपदाभो नन्दसुतश्चारु ननर्त्त स्मेरमुखः [ गङ्गादासः ]॥ पादान्ते यतिः ॥ १० ॥

भवति गुरुः पञ्चमक-
स्तदनु सषष्ठो नवमः।
शशिमुखि यस्यां कविभि-
र्ननु कथिता सा हरिणी ॥ ११ ॥

ननु भोः शशिमुखि यस्यां पञ्चमः तत्पश्चात् षष्ठसहितो नवमश्च वर्णो गुरुर्भवति कविभिः सा हरिणी नाम छन्दः कथिता। यथा—शशधरलेखा-भरणा सुललितनृत्यचरणा। करजितलीलाजलजा जगदिदमव्याद्गिरिजा। पादान्ते यतिः ॥ ११ ॥

पुनरियमेवाभिधया
विधुमुखि सारङ्गिकया।
प्रतनकवीनां वदने
स्फुरितवती सद्रदने ॥ १२ ॥

अस्या नामान्तरमाह। हे विधुमुखि हे सद्रदने प्रशस्तदन्ते इयमेव हरिण्येव पुनः प्रतनानां पुरातनानां कवीनां वदने मुखे सारङ्गिकया अभिधया सारङ्गिकानाम्ना स्फुरितवती प्रकाशमाप। पादान्ते यतिः ॥ १२ ॥

यस्यां प्राच्याः शशिवदने
चत्वारः स्युर्य्यदि गुरवः।
वर्णास्तद्वन्ननु नवमः
पाइत्ता सा भवति तदा ॥ १३ ॥

हे शशिवदने यस्यां प्राच्याः प्रथमाश्चत्वारो वर्णा यदि गुरवो नवमश्चापि वर्णस्तद्वद्गुरुः सा पाइत्ता नाम छन्दो भवति। स्मारं स्मारं मरणदिने



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



कृष्णस्य श्रीपदनलिने। दत्त्वा मृत्योः शिरसि पदं यास्यामः स्वाभिमतपदम् ॥

पादान्ते यतिः ॥ १३ ॥

आदिमम्भवति गुरुकं
चेत्तृतीयमथ नवमम्।
यत्र च त्रिरसविरतिः
सा स्मृता ननु हलमुखी ॥ १४ ॥

ननु भो यदि आदिमं प्रथमं तृतीयम् अथानन्तरं नवमञ्चाक्षरं गुरु भवति। यत्र च यस्यां त्रिभिः षड्भिश्च विरतिस्तर्हि सा हलमुखी नाम छन्दः कविभिः स्मृता। यथा—गण्डयोरतिशयकृशं यन्मुखं प्रकटदशनम्। आयतं कलहनिरतं तां स्त्रियं त्यज हलमुखीम् ॥ इत्यादि ॥ १४ ॥

प्रथमद्वितीयचतुर्थ-
मथ षष्ठसप्तमकञ्च।
नवमञ्च यत्र न दीर्घ-
मयि तोमरन्तदवेहि ॥ १५ ॥

अयि भो यत्र प्रथमं द्वितीयं चतुर्थमथ षष्ठं सप्तमं नवमञ्चाक्षरं दीर्घं न ह्रस्वमेव स्यात्तच्छन्दस्तोमरं नाम अवेहि जानीहि। यथा—सखि मादके मधुमासि व्रज सत्वरं किमिहासि। सह तेन किं विहरामि किमु पावकं प्रविशामि ॥

पादान्ते यतिः ॥ १५ ॥

इति बृहतीकुसुमम्।

---

## १० । पंङ्क्तिः ।

यस्यादौ त्रय उदिता दीर्घा
दृश्यन्ते शशिवदनेऽन्तेऽपि।
चत्वारो यदि लघवो मध्ये
छिन्नः खेषुषु पणवः स स्यात् ॥ १ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे शशिवदने यस्यादौ अन्तेऽपि यदि त्रयो वर्णा दीर्घा मध्ये चत्वारो वर्णा लघव उदिता दृश्यन्ते खेषुषु इन्द्रियबाणेषु पञ्चसु पञ्चस्विति यावत् छिन्नो विराम[युत]स्तर्हि स पणवो नाम च्छन्दो भवेत्। यथा—मीमांसारसममृतं पीत्वा शास्त्रोक्तिः पटुरितरा भाति। एवं संसदि विदुषां मध्ये जल्पामो जयपणवन्धत्तात् ॥ [ हलायुधः ] ॥ १ ॥

यत्र सद्वितीयकश्चतुर्थं
षष्ठमष्टमञ्च चेल्लघु स्यात्।
कुन्दकुट्मलालिकान्तदन्ते
सा मयूरसारिणी तदोक्ता ॥ २ ॥

कुन्दस्य माध्यस्य कुट्मलानां कोरकाणामालिः श्रेणिरिव कान्ताः कमनीया दन्ता यस्याः सा हे तथाभूते यत्र द्वितीयसहितं चतुर्थं षष्ठमष्टमञ्चाक्षरं यदि लघु स्यात्तदा सा मयूरसारिणी नाम छन्द उक्ता। यथा—या वनान्तराण्युपैति रन्तुं या भुजङ्गभोगभुक्तचित्ता। या द्रुतम्प्रयाति सन्नतांसा तां मयूरसारिणीं विजह्यात् ॥ [ हलायुधः ] ॥ पादान्ते यतिः ॥ २ ॥

आद्यचतुर्थौ पञ्चमषष्ठा-
वष्टमतो द्वौ यत्र गुरू स्तः।
रुक्मवती वा रूपवती वा
पञ्चकमाला वापि भवेत्सा ॥ ३ ॥

यत्र प्रथमचतुर्थौ पञ्चमषष्ठौ अष्टमतः परौ द्वौ नवमदशमौ च वर्णौ गुरू भवतः सा रुक्मवती नाम अथवा रूपवती नाम यद्वा पञ्चकमाला नाम छन्दो भवेत्। यथा—पादतले पद्मोदरगौरे राजति यस्या ऊर्द्ध्वगरेखा। सा भवति स्त्री लक्षणयुक्ता रुक्मवती सौभाग्यवती च ॥ [ हलायुधः ] ॥ पादान्ते यतिः ॥ ३ ॥

मस्तकराजच्चम्पकमाले
चन्दनबिन्दूद्भासितभाले।
सेन्द्रियबाणैश्चेत्सविरामा
चम्पकमाला स्यादभिरामा ॥ ४ ॥





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यतिभेदेनास्या नामान्तरं दर्शयति। मस्तके राजन्ती चम्पकमाला यस्या हे तथाभूते चन्दनस्य विन्दुना तिलकेन उद्भासितम् उज्ज्वलं भालं ललाटं यस्या हे तथाभूते सा रुक्मवती इन्द्रियवाणैः पञ्चभिः पञ्चभिरक्षरैः सविरामा विरतियुक्ता यदि भवति तदा सा अभिरामा मनोहरा चम्पकमाला नामच्छन्दः स्यात्। यथा—आगत एष प्राणविशेषः कृष्ण इतीयं कुम्भनिधेयम्। गाढतमिस्रं कौतुकमिश्रं श्लिष्यति राधा तादृशबाधा॥ [ वृत्तमाला ]॥ ४॥

चत्वारि प्राक् सुतनु गुरूणि
स्युश्चेत्तद्वन्नवममथान्त्यम्।
विश्रामश्चेच्छ्रुतिरसशोभी
सद्भिर्मत्ता सुमुखि तदोक्ता॥ ५॥

हे सुतनु हे सुमुखि चेद्यदि प्राक् प्रथमानि चत्वारि अक्षराणि गुरूणि स्युः, अथ नवमं पादान्त्यञ्चाक्षरं तद्वत् गुरु स्यात् श्रुतिभिः चतुर्भिः रसैः षड्भिश्च शोभितुं शीलमस्य तथाभूतो विश्रामो यदि भवति तदा सद्भिः धीरैः मत्ता नामच्छन्द उक्ता। यथा—पीत्वा मत्ता मधु मधुपाली कालिन्दीये तटवनकुञ्जे। उद्दीव्यन्तीर्व्रजजनरामाः कामासक्ता मधुजिति चक्रे॥ [ गङ्गादासः ]॥ ५॥

आद्यचतुर्थं दीर्घमक्षरं
पञ्चमषष्ठं यत्र साष्टमम्।
स्याद्दशमञ्चागारदीपिके
दीपकमाला सा स्मृता बुधैः॥ ६॥

दीपिकेव दीपिका रूपकम्। हे आगारदीपिके गृहप्रदीप यत्र यस्याम् आद्यं प्रथमं चतुर्थं पञ्चमं षष्ठं तथा अष्टमं दशमञ्चाक्षरं दीर्घं स्यात्सा बुधैः दीपकमाला नाम छन्दः स्मृता। यथा—मोहतमिस्रालुप्तदर्शनाप्यच्युतभक्ति-प्राप्तदर्शना। स्यान्नरराजिः कार्त्तिकी कुहूर्दीपकमालोद्भासिनी न किम्॥ पादान्ते यतिः॥ ६॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



गुरु चतुर्थकञ्चलालके
भवति षष्ठकन्तथाष्टमम् ।
दशममक्षरं यतो हि सा
निगदिता बुधैर्मनोरमा ॥ ७ ॥

चला अलकाश्चूर्णकुन्तला यस्याः हे तथाभूते यत्र चतुर्थं षष्ठम् अष्टमं तथा दशमञ्चाक्षरं गुरु स्यात् सा बुधैर्मनोरमा नाम छन्दो निगदिता प्रोक्ता। यथा—तरणिजातटे विहारिणी व्रजविलासिनीविलासतः। मुररिपोस्तनुः पुनातु वः सुकृतशालिनां मनोरमा ॥ [ गङ्गादासः ] ॥ पादान्ते यतिः ॥ ७ ॥

तुर्यम्पञ्चमसप्तमं प्रिये
यत्र स्यान्नवमं तथाक्षरम् ।
ह्रस्वं शुद्धविराट्परायणे
धीरैः शुद्धविराट् स ईरितः ॥ ८ ॥

आण्डकोषे शरीरेऽस्मिन् सप्तावरणसंयुते। वैराजः पुरुषो योऽसौ भगवान्धारणाश्रयः ॥ इति भागवतोक्तेः [ २।१।२५ ] शुद्धो गुणसङ्गरहितो विराट्पुरुषः परम्प्रधानमयनमाश्रयो धारणाविषयो यस्याः हे तथाभूते यत्र तुर्यं चतुर्थं पञ्चमं तथा नवमञ्चाक्षरं ह्रस्वं स्यात्स धीरैः शुद्धविराट् नाम छन्द ईरितः कथितः। यथा—विश्वन्तिष्ठति कुक्षिकोटरे वक्त्रे यस्य सरस्वती सदा। अस्मद्वंशपितामहो गुरुर्ब्रह्मा शुद्धविराट् पुनातु नः ॥ [ हलायुधः ] ॥ पादान्ते यतिः ॥ ८ ॥

दयिते तृतीयकपञ्चमं
गुरु यत्र योजितमष्टमम् ।
दशमञ्च कुञ्चितकेशि सा
कविभिर्नुता किल संयुता ॥ ९ ॥

हे कुञ्चितकेशि कुटिलकुन्तले दयिते वल्लभे यत्र तृतीयं पञ्चमम् अष्टमं दशमञ्चाक्षरं गुरु योजितं स्यात्सा किल कविभिर्नुता स्तुता संयुता नाम छन्दः



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



भवति। यथा—बलसंयुतं व्रजरञ्जनं यमलार्जुनद्रुमभञ्जनम्। गिरिशादिभिः कृतवन्दनं प्रणमाम्यहं यदुनन्दनम्॥ पादान्ते यतिः॥ ९॥

साद्यद्वयपञ्चममष्टमं
दीर्घन्दशमञ्च यदाक्षरम्।
द्वाभ्यां वसुभिश्च यतिस्तदा
गीतामलधीभिरुपस्थिता॥ १०॥

यदा यर्हि आद्यद्वयेन प्रथमद्वितीयाभ्यां सहितम्पञ्चममष्टमं दशमञ्चाक्षरं दीर्घं स्यात् द्वाभ्यामष्टभिश्च यतिश्चेत्तदा अमलबुद्धिभिः उपस्थिता नाम छन्दो गीता शब्दिता। यथा—एषा जगदेकमनोहरा कन्या कनकोज्ज्वलदीधितिः। लक्ष्मीरिव दानवसूदनं पुण्यैर्नरनाथमुपस्थिता॥ [ हलायुधः ]॥ १०॥

आद्या यत्र तु गुरवस्त्रयो
वर्णाश्चाष्टमदशमौ तथा।
श्रीकृष्णापचितिपरायणे
भो वामोरु स पणवो भवेत्॥ ११॥

हे श्रीकृष्णपूजातत्परे वामौ मनोहरौ ऊरू यस्याः सा 'संहितशफलक्षण-वामादेश्चे' [ पां ४।१।७० ] त्यूङ् 'अम्बार्थनद्योर्ह्रस्व' [ पां ७।३।१०७ ] इति ह्रस्वः। हे वामोरु यत्र तु आद्याः पादादौ स्थितास्त्रयो वर्णा गुरवो भवन्ति अष्टमदशमौ च तथा गुरू भवतः स पणवो नाम च्छन्दो भवेत्। यथा—शब्दोऽयं पणवमुखोत्थितः सञ्ज्ञानन्निति निखिलो जनः। आदिष्टं किमपि महीभृतेत्यासीत्संशयपरमानसः॥ पादान्ते यतिः॥ ११॥

आद्यद्वितयं यस्यां गुरुकं
स्यात्पञ्चमकं षष्ठञ्च तथा।
चेत्सप्तमकञ्चैवं दशमं
सा तर्हि बुधैः प्रोक्ता सुषमा॥ १२॥

यस्यामाद्यद्वितयं प्रथमं द्वितीयञ्च षष्ठं सप्तमन्दशमञ्चाक्षरं गुरु यदि स्यात्तर्हि बुधैः सा सुषमा नाम छन्दः प्रोक्ता। यथा—एणीनयने केलीकलहे



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



प्रेयान् वद किं किन्नो कुरुते। धन्या रमणी सर्व्वं सहते दुःखं सुखवत्स्वान्ते मनुते ॥ [ वाणीभूषणम् ]। पादान्ते यतिः ॥ १२ ॥

आदिगतं सचतुर्थमथो
सप्तमकञ्च तथा दशमम्।
यत्र भवेद्गुरु सत्परते
सा कथिता ननु सारवती ॥ १३ ॥

ननु भोः सत्परते ब्रह्मासक्ते यत्र आदिगतम्प्रथमम् अथो अनन्तरं चतुर्थेन सहितं सप्तमं तथा दशमञ्चाक्षरं गुरु भवेत्सा सारवती नाम छन्दः कथिता। यथा—ईश गदाधर भूतपते शङ्कर माधव लोकपते। त्र्यम्बक यादव भूतपद त्वत्पदमञ्चतु चित्तमदः ॥ [ वृत्तमाला ] ॥ यथा वा—माधवमानय मत्सविधं किं सखि चिन्तय मित्रवधम्। यत्र करिष्यसि मत्प्रणयं नो मम याति तदा समयम् ॥ [ वाणीभूषणम् ] ॥ पादान्ते यतिः ॥ १३ ॥

कुलमहिलाकुलतिलके
धृतसितचन्दनतिलके।
यदि गुरु पञ्चमदशमं
त्वममृतगतिर्भवति तदा ॥ १४ ॥

हे कुलस्त्रीकुलेषु मध्ये अतिश्रेष्ठे हे धृतसितचन्दनतिलके यदि पञ्चमं दशमञ्चाक्षरं गुरु स्यात्तर्हि सा अमृतगतिर्नाम छन्दो भवति। यथा—शशधर-सुन्दरवदना विकचसरोरुहनयना। मदकलकुञ्जरगमना भवतु सखे तव ललना ॥ पादान्ते यतिः ॥ १४ ॥

कमलदलायतनयने
व्रतकृतभूतलशयने।
इयमपि चेत्खशरयदि-
र्भवति तदा त्वरितगतिः ॥ १५ ॥

कमलस्य दले इव आयते दीर्घे लोचने यस्याः सा हे कमलदलायत-नयने व्रताय कृतं भूतले शयनं यया सा हे तथाभूते इयमपि अमृतगतिरपि



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



चेत् खशरयतिः खैरिन्द्रियैः शरैः वाणैश्च यतिर्यस्याः पञ्चभिः पञ्चभिरित्यर्थः तथोक्ता यदि स्यात्तर्हि त्वरितगतिर्नाम छन्दो भवति। यथा—क्षितिविजितिस्थितिविहितिव्रतरतयः परगतयः। उरु रुरुधुर्गुरु दुधुवुर्युधि कुरवः स्वमरिकुलम्॥ [ काव्यादर्शः ३।८५ ]॥ अत्र वर्णानां गुरुलघूनाञ्च समानतासाकलय्य प्राकृतपिङ्गलटीकायां क्वचिदियमेव त्वरितगतिरिति यद्यप्युक्तं तथापि त्वरितगतेः सयतिकत्वादमृतगतेः पृथगियम्। त्वरितगतिर्नलवयुगमिति कर्णपूरसूत्रात्। यतिमतो वकारस्यैव गुरुसंज्ञा तेनैव परिभाषिता। यतिमन्तौ दीर्घह्रस्वौ वकौ व्याचक्षते बुधा इति ॥ १५ ॥

चत्वारः प्राक् सुतनु गुरवो
जाता यस्यां दशमसहिताः।
वेदैः स्वादैर्भवति विरति-
श्चेद् हंसी सा कविभिरुदिता॥ १६॥

हे सुतनु यस्यां दशमसहिताः प्राक् प्रथमाश्चत्वारो वर्णा गुरवो जाताः चेद्यदि वेदैः स्वादैश्चतुर्भिः षड्भिश्च विरतिर्भवति तर्हि कविभिः सा हंसी नाम छन्दः कथिता। यथा—मन्दाक्रान्त्यन्त्ययतिरहिता सालङ्कारे यदि भवति सा। सा विद्वद्भिर्ध्रुवमभिहिता ज्ञेया हंसी कमलवदने॥ १६॥

इति पङ्क्तिकुसुमम्।

---

## ११। त्रिष्टुप्।

रूपामालीवृत्तस्याङ्घ्रीणामन्ते
द्वौ द्वौ दीर्घौ वर्णौ जातौ चेत्कान्ते।
मालत्या मालाभिः कान्तोरः प्रान्ते
मालत्याख्यं वृत्तं तद्वाभाषन्ते॥ १॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



मालत्या जात्या मालाभिः कान्तः कमनीय उरसो वक्षःस्थलस्य प्रान्तो यस्या हे तथाभूते कान्ते चेद्यदि रूपामालीनाम्नो वृत्तस्य पादानामन्ते शेषे द्वौ द्वौ दीर्घौ वर्णौ जातौ भवतस्तर्हि मालत्याख्यं मालती नाम वृत्तं भाषन्ते कथयन्ति। यथा—पायान्मायामीनो लीनः कल्पान्ते प्राग्दिक्-क्षोणीभर्त्तुः पाणिक्रोडे यः। व्यापाम्भोधिस्तस्मिन् काले लीलाभिः सम्यक् सर्व्वौषध्या यत्पृष्ठेऽतिष्ठत् ॥ १ ॥

प्रभवति गुरु सप्तमं यस्यां
सनवमदशमन्तथा चान्त्यम्।
सुपुरुषजनिते सुधीभिः सा
कुपुरुषजनिता समाख्याता ॥ २ ॥

हे सुपुरुषजनिते यस्यां सप्तमं नवमं दशमञ्चाक्षरं गुरु स्यात्सा सुधीभिर्धीरैः कुपुरुषजनिता नाम छन्दः समाख्याता कथिता। यथा—सुपुरुषजनितोऽसि जाने त्वं तत इह निजवंशमुन्नेतुम्। समभिलषसि चेद्धि मा कार्षीः कुपुरुषजनिताकरग्राहम् ॥ २ ॥

नवमकदशमकमप्येका-
दशमपि ननु गुरु यत्र स्यात्।
युगहययतिरुत तां वृन्तां
प्रवदति कविरथवा वृत्ताम् ॥ ३ ॥

हे सुमुखि यत्र नवमं दशममेकादशमप्यक्षरं गुरु स्यात् उत एवं युगैश्चतुर्भिर्हयैः सप्तभिश्च यतिर्भवति कविस्तां वृन्तां नाम अथवा वृत्तां नाम छन्दः प्रवदति। यथा—द्विजगुरुपरिभवकारी यो नरपतिरतिधनलुब्धात्मा। ध्रुवमिह निपतति पापोऽसौ फलमिव पवनहतं वृन्तात् ॥ [ हलायुधः ] ॥ पादान्ते यतिः ॥ ३ ॥

द्वितीयसहितं षष्ठञ्च दीर्घं
ससप्तममथो यत्ताष्टमञ्च।
तथैव दशमञ्चैकादशन्तत्
शिखण्डितमहो वोपस्थितं स्यात् ॥ ४ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अहो भो यत्र द्वितीयं षष्ठं सप्तमम् अथो अष्टमं दशममेकादशञ्चाक्षरं दीर्घं स्यात् तत् शिखण्डितं नाम उपस्थितं नाम वा छन्दः भवति। यथा—शिखण्डितमिमं मौलिं मुरारेर्निपीय नयनैराभीररामाः। सुतं निजपतिं लज्जाञ्च मुक्त्वा तमाशुरतये निन्युर्निकुञ्जम् ॥ ४ ॥

यस्यां षष्ठोऽथाष्टमान्त्यश्च वर्णः
कान्ते ह्रस्वो दृश्यते कान्तवक्त्रे।
वेदैरश्वैर्जायते चेद्यतिस्तां
सङ्ख्यावन्तः शालिनीति ब्रुवन्ति ॥ ५ ॥

हे कान्तवक्त्रे कान्ते यस्यां षष्ठः अथ यदि अष्टमान्त्यो नवमश्च वर्णो ह्रस्वो लघुर्दृश्यते चतुर्भिः सप्तभिश्च यदि यतिः स्यात्तदा सङ्ख्यावन्तः पण्डितास्तां शालिनीति नाम छन्दो ब्रुवन्ति कथयन्ति। यथा—अङ्घो हन्ति ज्ञानवृद्धिं विधत्ते धर्म्मं दत्ते काममर्थञ्च सूते। मुक्तिं दत्ते सर्व्व-दोपास्यमाना पुंसां श्रद्धाशालिनी विष्णुभक्तिः ॥ [ गङ्गादासः ] ॥ ५ ॥

यस्यान्तृतीयं सषष्ठं लघु स्यात्
स्वर्णाभवर्णेऽष्टमान्तश्च तद्वत्।
विद्वद्भिराद्यैः प्रयुक्ता तदा सा
विध्वङ्कमाला विधूत्कृष्टवक्त्रे ॥ ६ ॥

हे स्वर्णाभवर्णे सुवर्णोज्ज्वलवर्णे हे विधूत्कृष्टवक्त्रे यस्यां तृतीयं षष्ठम् अष्टमस्यान्त्यं नवमञ्चाक्षरं लघु भवति तदा पुरातनकविभिः सा विध्वङ्कमाला नाम छन्दः प्रयुक्ता। यथा—या कापि विद्या गुरोः साध्वधीता विध्वं-शुमालेव सा सुप्रकाशा। यद्यन्यथा स्यात्पुनः पिष्टपेऽस्मिन् विध्वङ्कमालेव सैवाप्रकाशा ॥ पादान्ते यतिः ॥ ६ ॥

शालिन्याश्चेद्गुरुः पञ्चमः स्या-
न्मिष्टालापे धृतभूषाकलापे।
वेदैरश्वैर्विरतिश्चापि यस्यां
वातोर्म्मी सा मनसालोचनीया ॥ ७ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे मिष्टालापे मधुरभाषिणि हे धृतभूषाकलापे परिहितालङ्कारसमूहे चेद्यदि शालिन्याश्छन्दसः पञ्चमो वर्णः अगुरुर्लघुर्भवेत् यस्याञ्च चतुर्भिः सप्तभिर्विरतिश्चापि भवेत्तदा सा वातोर्म्मी नाम छन्दो मनसा आलोचनीया। यथा—"यात्युत्सेकं सर्पदि प्राप्य किञ्चित्स्याद्वा यस्याश्चपला चित्तवृत्तिः। या दीर्घाङ्गी स्फुटशब्दाट्टहासा त्याज्या सा स्त्री द्रुतवातोर्म्मीमाला॥" [ हलायुधः ]। वातोर्मीति स्त्रियां 'कृदिकारादक्तिन' [ गं १२४ ] इति ङीप्। 'वातोर्म्मीपोतमिवाम्भोधिमध्ये' इति गङ्गादासकविरचितोदाहरणं यतिभङ्गदोषसङ्कुलतया न समीचीनम्। पदमध्ये यतौ कर्त्तव्यायां पूर्व्वापरभागयोरेकाक्षरत्वोपस्थितिर्यत्युपनिषद्विरुद्धा॥ ७॥

दीर्घमाद्यं सतृतीयं चतुर्थं
सप्तमं साष्टमकं प्राज्यबुद्धे।
यत्र रामे दशमैकादशञ्च
प्रीतिफुल्लानन-पद्मेऽमृता सा॥ ८॥

हे प्राज्यबुद्धे विपुलप्रज्ञे तथा प्रीत्या फुल्लमाननपद्मं यस्या हे तथाभूते हे रामे सुन्दरि यत्र प्रथमं तृतीयं चतुर्थं सप्तमं दशममेकादशञ्चाक्षरं दीर्घं स्यात्सा अमृता नाम छन्दो भवति। यथा—रीतिसम्पद्रसभावैरुपेतं दोषशून्यं सगुणालङ्कृतीत्थम्। रच्यते चेत्कविना येन काव्यं तस्य कीर्त्तिस्त्वमृता स्याज्जगत्याम्॥ पादान्ते यतिः॥ ८॥

द्वितीयकञ्चतुर्थकं गुरु स्या-
दथो सषष्ठमष्टमं तथा चेत्।
उपान्त्यमन्तिमञ्च सन्नतभ्रू-
र्निबुध्यतां विलासिनी तदा सा॥ ९॥

हे सन्नतभ्रूः द्वितीयं चतुर्थम् अथ षष्ठमष्टममुपान्त्यं दशमम् अन्तिममेकादशञ्चाक्षरं यदि गुरु स्यात्तदा सा विलासिनी नाम छन्दो निबुध्यताम् ज्ञायताम्। यथा—'विलासिनीविलोकितः स कामी दधाति कामसत्त्वचेष्टितं



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



या । करोति चञ्चलाक्षिदृष्टिपातैर्यतात्मनश्च योगिनोऽपि मत्तान् ॥ [हलायुधः] ॥ पादान्ते यतिः ॥ ९ ॥

आद्यद्वयं तुर्य्यकपञ्चमञ्च
यत्राष्टमञ्चान्त्ययुगञ्च दीर्घम् ।
हेमाङ्गदाश्लिष्टभुजे कवीन्द्रा-
स्तामिन्द्रवज्रां प्रतिबोधयन्ति ॥ १० ॥

हेमाङ्गदाभ्यां सुवर्णकेयूराभ्यामाश्लिष्टौ आलिङ्गितौ भुजौ यस्या हे तथाभूते यत्र यस्यामाद्यद्वयं प्रथमद्वितीयं चतुर्थं पञ्चममष्टमञ्चान्त्ययुगं दशमैकादशञ्चाक्षरं दीर्घं भवति कवीन्द्राः कविवरास्तामिन्द्रवज्रां नाम छन्दः प्रतिबोधयन्ति निवेदयन्ति । यथा—गोब्राह्मणस्त्रीव्रतिभिर्विरुद्धं मोहात्करोत्यल्पमतिर्नृपो यः । तस्येन्द्रवज्राभिहतस्य पातः क्षोणीधरस्येव भवत्यवश्यम् ॥ [ हलायुधः ]॥ अपि च । ये दुष्टदैत्या इह भूमिलोके द्वेषं व्यधुर्गोद्विजदेवसङ्घे । तानिन्द्रवज्रादपि दारुणाङ्गान् व्याजीवयद् यः सततं नमस्ते ॥ [ हलायुधः ] ॥ इत्यादि । रक्ताम्बुदेनोदितलम्बमाला शीतांशुचण्डातपकुण्डलाभ्याम् । तारांशुतारावलिहृद्यहारैः स्वीयां श्रियं भूषयतीव सन्ध्या ॥ [ वाणीभूषणम् ] ॥ इत्यादि च । पादान्ते यतिः ॥ १० ॥

यदेन्द्रवज्राचरणादिसंस्था
भवन्ति वर्णा लघवः सुमध्ये ।
अनङ्गकान्तासमकान्तमूर्त्ते
तदोच्यते सद्भिरुपेन्द्रवज्रा ॥ ११ ॥

सु शोभनं मध्यं यस्या हे सुमध्ये तनुमध्ये इत्यर्थः । तथा अनङ्गस्य हरकोपानलेन भस्मीभूतावयवस्य कामस्य कान्तया रत्या समा तुल्या कान्ता मनोज्ञा मूर्त्तिस्तनुर्यस्या हे तथाभूते यदा इन्द्रवज्रायाश्चरणानामादौ स्थिता वर्णा लघवो ह्रस्वा भवन्ति तदा सद्भिर्विद्वद्भिरुपेन्द्रवज्रा नाम छन्द उच्यतेऽभिधीयते । यथा—भवन्नखाः कुन्ददलश्रियो ये नमन्ति लक्ष्मीस्तन-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



लेखनेऽपि। उपेन्द्रवज्राधिककर्कशत्वं कथङ्गतास्ते रिपुदारणस्याम् ॥ [हलायुधः] ॥ अत्रापि पादान्ते यतिः ॥ ११ ॥

यत्रेन्द्रवज्राचरणेन सार्द्ध-
मुपेन्द्रवज्राचरणस्य योगः ।
क्रियेत सा प्राक्कविभिः प्रदिष्टां
लभेत सुभ्रूरुपजातिसंज्ञाम् ॥ १२ ॥

अथोपजातिं लक्षयति यत्रेति । हे सुभ्रूः यत्र यस्याम् इन्द्रवज्राचरणेन सार्द्धं सह उपेन्द्रवज्राचरणस्य योगः सम्मिश्रणं क्रियेत सा पूर्वकविभिः प्रदिष्टामुपजातिसंज्ञाम् उपजातिनाम लभेत प्राप्नुयात् । यथा—अत्रोपजाति-र्विविधा विदग्धैः संयोज्यते तु व्यवहारकाले । अतः प्रयत्नः प्रथमं विधेयो नृपेण पुंरत्नपरीक्षणाय । [हलायुधः] ॥ पादान्ते यतिः । समवृत्तप्रस्तावे प्रसङ्गा-दुपजातीनामुपन्यासो लाघवार्थः । केचिदिदं लक्षणं न्यायोपलक्षणपरं व्याचक्षते । तेन वंशस्थेन्द्रवंशापादयोरपि सङ्करादुपजातयो भवन्ति । तथा शालिनी-वातोर्मीपादयोरन्येषामपि स्वल्पभेदानां प्रयोगानुसारेण उपजातयो ज्ञेया इति मृतसञ्जीवनी ॥ १२ ॥

प्रस्तारचक्रे चतुरक्षरीये
भवन्ति ये षोडशधैव भेदाः ।
तत्राद्यमन्त्यञ्च विहाय मध्या-
श्चतुर्दशोक्ता उपजातिभेदाः ॥ १३ ॥

उपजातिभेदान्दर्शयति प्रस्तारेति । चतुरक्षरवर्णप्रस्तारे ये षोडशप्रकारा भेदा भवन्ति तत्र षोडशप्रकारभेदमध्ये आद्यं प्रथमम् अन्त्यं शेषञ्च त्यक्त्वा मध्यस्थिताश्चतुर्दशप्रकारा उपजातिभेदा उक्ताः । वृत्तमालायामपि—'मणिप्रभा कान्तिमती सती गतिः स्मृतिः कुशाग्री रतिरुन्नता शिवा । वराधरा प्रीतिमती प्रिया सुधा चतुर्दशैता उपजातयः क्रमात्' ॥ १३ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उपेन्द्रवज्रा प्रथमेऽस्ति पादे
शेषत्रये यत्र यदेन्द्रवज्रा।
छन्दोविदः सुन्दरि तां तदानीं
कीर्त्तिं समाख्यान्ति मणिप्रभां वा ॥ १४ ॥

हे सुन्दरि यत्र प्रथमे पादे यदा उपेन्द्रवज्रास्ति भवति शेषत्रये द्वितीय-तृतीयचतुर्थेषु पादेषु इन्द्रवज्रा भवति तदानीं तर्हि तां छन्दोविदः छन्दोज्ञाः कीर्त्तिं नाम मणिप्रभां नाम वा उपजातिमाख्यान्ति वदन्ति। यथा—सपत्रलेखेषु विलासिनीनां वक्त्रेषु हेमाम्बुरुहोपमेषु। रत्नान्तरे मौक्तिकसङ्गरम्यः स्वेदोद्गमो विस्तरतामुपैति ॥ [ ऋतुसंहारम् ६।६ ] ॥ १४ ॥

यत्रेन्द्रवज्राप्रथमे तृतीये
चतुर्थके च प्रतिभाति पादे।
औपेन्द्रवज्रं चरणं द्वितीये
वाणीति सा कान्तिमतीति वा स्यात् ॥ १५ ॥

यत्र यस्यां प्रथमे तृतीये चतुर्थे च पादे इन्द्रवज्रा द्वितीये पादे उपेन्द्र-वज्रायाश्चरणं प्रतिभाति सा वाणीति कान्तिमतीति वा नामोपजातिः स्यात्। यथा—निष्ठाङ्गते दत्त्रिमसभ्यतोषे विहित्त्रिमे कर्म्मणि राजपत्न्यः। प्राशुर्हुतोच्छिष्टमुदारवंश्यास्तिस्रः प्रसोतुं चतुरः सुपुत्त्रान् ॥ [ भट्टिः १।१३ ] ॥ १५ ॥

उपेन्द्रवज्रा प्रथमे द्वितीये
कृशोदरि स्याच्चरणे तु यस्याः।
चेदिन्द्रवज्रा तु तृतीयतुर्य्ये
माला तदा सा कथिता सती वा ॥ १६ ॥

हे कृशोदरि यस्याः प्रथमे द्वितीये चरणे यदि उपेन्द्रवज्रा तृतीयचतुर्थ-चरणे इन्द्रवज्रैव भवति तदा कविभिः सा माला नाम अथवा सती नाम उपजातिः कथिता। यथा—'यः पूरयन् कीचकरन्ध्रभागान्दरीमुखोत्थेन समीरणेन। उद्गास्यतामिच्छति किन्नराणां तानप्रदायित्वमिवोपगन्तुम्' ॥ [ कुमार सम्भवम् १।८ ] ॥ १६ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यत्रेन्द्रवज्रा प्रथमे द्वितीये
तुर्य्ये च पादेऽथ पुनस्तृतीये ।
उपेन्द्रवज्रा यदि तां तदानीं
शालां गतिं वा प्रदिशन्ति सन्तः ॥ १७ ॥

यत्र प्रथमे द्वितीये चतुर्थे च पादे यदि इन्द्रवज्रा अथ तृतीये पादे पुनरुपेन्द्रवज्रा भवति तदानीं सन्तः पण्डितास्तां शालां नाम गतिं वा नाम उपजातिं प्रदिशन्ति निर्दिशन्ति । यथा—काञ्चीगुणैः काञ्चनरक्तचित्रैर्नो भूषयन्ति प्रमदा नितान्तम् । न नूपुरैर्हंसरुतं भजद्भिः पादाम्बुजान्यम्बुज-कान्तिभाञ्जि ॥ [ ऋतुसंहारम् ४।४ ] ॥ १७ ॥

उपेन्द्रवज्रा प्रथमे तृतीये
चाङ्घ्रौ भवेद्यत्र तु कुन्ददन्ति ।
द्वितीयतुर्य्ये पुनरिन्द्रवज्रा
हंसी स्मृतिर्वाभिमता बुधैः सा ॥ १८ ॥

हे कुन्ददन्ति यस्यान्तु प्रथमे तृतीये च पादे उपेन्द्रवज्रा भवेत् द्वितीयचतुर्थे पुनरिन्द्रवज्रा भवेत् सा बुधैर्हंसी नाम स्मृतिर्नाम वा उप-जातिरभिमता इष्टा । यथा—पदं तुषारस्रुतिधौतरक्तं यस्मिन्नदृष्ट्वापि हत-द्विपानाम् । विदन्ति मार्गं नखरन्ध्रमुक्तैर्म्मुक्ताफलैः केसरिणां किराताः ॥ [ कुमारसम्भवम् १।६ ] ॥ १८ ॥

प्रसूनदूर्व्वाङ्कुरशोभिशीर्षे
पूर्णैणहीनद्विजराजवक्त्रे ।
आभाषतेमां विपरीतपूर्व्वा-
माख्यानिकीं पिङ्गलनागपादः ॥ १९ ॥

प्रसूनैः पुष्पैर्दूर्व्वाङ्कुरैश्च शोभितुं शीलमस्य तथाभूतं शीर्षं मस्तकं यस्याः । पूर्णः सकलकलापरिपूर्ण एणहीनो हरिणरहितो यो द्विजराजश्चन्द्रः स इव वक्त्रं यस्या हे तथाभूते पिङ्गलनागपाद इमां हंसीं विपरीताख्यानिकीं नामो-पजातिमाभाषत ॥ १९ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उपेन्द्रवज्रा प्रथमे द्वितीये
तृतीयके चापि भवेद्यदाङ्गे।
चतुर्थके चेत्पुनरिन्द्रवज्रा
जायां रतिं वात्थ सुजातजङ्घे ॥ २० ॥

हे सुजातजङ्घे सुजाते सुमनोहरे जङ्घे यस्यास्तथाभूते यदा प्रथमे द्वितीये तृतीये च पादे उपेन्द्रवज्रा चतुर्थपादे पुनरिन्द्रवज्रा भवेत् तदा तां जायां नाम अथवा रतिं नाम उपजातिम् आत्थ ब्रूहि। यथा—नवप्रबालोद्गमसस्यरम्यः प्रफुल्ललोध्रः परिपक्वशालिः। विलीनपद्मः प्रपतत्तुषारो हेमन्तकालः समुपागतोऽयम् ॥ [ ऋतुसहारम् ४।१ ] ॥ २० ॥

यत्रेन्द्रवज्रा प्रथमे चतुर्थे-
ऽस्त्युपेन्द्रवज्रा चरणे द्वितीये।
तृतीयके च स्तुतदेवसङ्घे
माया तदा स्यादथवा कुशाग्री ॥ २१ ॥

हे स्तुतदेवसङ्घे स्तुतो देवसङ्घो देवतासमूहो यया तथाभूते यत्र प्रथमे चतुर्थे पादे इन्द्रवज्रा अस्ति विद्यते द्वितीये तृतीयके च पादे उपेन्द्रवज्रा अस्ति भवति तदा सा माया नाम अथवा कुशाग्री नाम च्छन्दः स्यात्। यथा—अन्तर्निविष्टोज्ज्वलरत्नभासो गवाक्षजालैरभिनिष्पतन्त्यः। हिमाद्रिटङ्कादिव भान्ति यस्यां गङ्गाम्बुपातप्रतिमा गृहेभ्यः ॥ [ भट्टिः १।८ ] ॥ २१ ॥

आदौ तु मुक्ताफलदन्तपङ्क्ते
यत्रेन्द्रवज्राचरणत्रयं स्यात्।
औपेन्द्रवज्रं चरणन्तथान्ते
वदन्ति बालामथवोन्नतान्ताम् ॥ २२ ॥

मुक्ताफलानीव दन्तपंक्तिर्दशनश्रेणिर्यस्या हे तथाभूते यत्र आदौ तु प्रथममेव इन्द्रवज्रायाश्चरणत्रयं स्यात् अन्ते अवसाने चतुर्थे इति यावत् औपेन्द्रवज्रं उपेन्द्रवज्रायाश्चरणं भवेत्तां कवयो बालां नामाथवा उन्नतां नामोपजातिं



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वदन्ति । यथा—यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे । भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥ [ कुमारसम्भवम् १।२ ]। ॥ २२ ॥

उपेन्द्रवज्रा प्रथमे चतुर्थे
चाङ्घ्रौ द्वितीये तु तथा तृतीये ।
चेदिन्द्रवज्रोदयते तदार्द्रा-
थवा शिवा सङ्कथिता कवीन्द्रैः ॥ २३ ॥

चेद्यदि प्रथमे चतुर्थे च पादे उपेन्द्रवज्रा द्वितीये तथा तृतीये च इन्द्रवज्रा उदयते तदा कवीन्द्रैः आर्द्रा नाम अथवा शिवा नाम उपजातिः सङ्कथिता उक्ता । यथा—सुकान्तकान्तामणितानुकारं कूजन्तमाघूर्णितरक्तनेत्रम् । प्रस्फारितोन्नम्रविनम्रकण्ठं मुहुर्मुहुर्नर्त्तितचारुपुच्छम् ॥ २३ ॥

यत्रेन्द्रवज्रा प्रथमे तृतीये
द्वितीयतुर्य्ये तदुपेन्द्रवज्रा ।
पादे पुनश्छन्दसि जागरूका
वदन्ति भद्रामथवा वरां ताम् ॥ २४ ॥

यत्र प्रथमे तृतीये पादे इन्द्रवज्रा द्वितीये चतुर्थे च पादे पुनस्तदुपेन्द्र-वज्रा सा चासावुपेन्द्रवज्रा चेति कर्म्मधारयः प्रसिद्धोपेन्द्रवज्रा भवेत् छन्दसि जागरूकाश्छान्दसास्तां भद्रां नामाथवा वरां नामोपजातिं वदन्ति कथयन्ति । यथा—वापीजलानां मणिमेखलानां शशाङ्कभासां प्रमदाजनानाम् । चूतद्रुमाणां कुसुमान्वितानां ददाति सौरभ्यमयं वसन्तः ॥ [ ऋतुसंहारम् ६।३ ] ॥ २४ ॥

एनाम्पुनः पिङ्गलनागपादाः
सुमङ्गले मङ्गलमात्रभूषे ।
आख्यानिकीं कङ्कणशोभिहस्ते
प्रजुञ्जते शिञ्जितनूपुराङ्घ्रे ॥ २५ ॥

हे सुमङ्गले हे मङ्गलमात्रभूषे परिमितालङ्कारे नतु विलासार्थं परिहित-विविधालङ्कारे हे कङ्कणशोभिहस्ते हे शिञ्जितनूपुराङ्घ्रे पिङ्गलनागपादाः



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



पूज्यतमपिङ्गलाचार्य्याः पूजायां बहुवचनम्। एनां भद्रां पुनः आख्यानिकीं नामोपजातिं प्रयुञ्जते ॥ २५ ॥

उपेन्द्रवज्रा प्रथमद्वितीय-
चतुर्थपादेषु यदेन्द्रवज्रा।
पादे तृतीये तु भवेत्तदानीं
धराऽथवा प्रेम ऋतानुभूते ॥ २६ ॥

ऋता सत्या अनुभूतिर्ज्ञानं यस्या हे ऋतानुभूते यदा प्रथमद्वितीयचतुर्थ-पादेषु उपेन्द्रवज्रा तृतीये पादे तु इन्द्रवज्रा भवेत् तदानीं तदा प्रेमा नाम धरा नाम वा उपजातिर्भवति। यथा—अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम्। एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥ [ कुमार १।३ ] ॥ २६ ॥

यत्रेन्द्रवज्रा प्रथमे द्वितीये
चाङ्घ्रौ तृतीयेऽथ चतुर्थके च।
उपेन्द्रवज्रा यदि तर्हि रामा
प्रगीयते प्रीतिमतीति वा सा ॥ २७ ॥

यत्र प्रथमे द्वितीये च पादे इन्द्रवज्रा अथ तृतीये चतुर्थे च पादे उपेन्द्रवज्रा भवति तर्हि सा कविभिः रामा प्रीतिमतीति वा प्रगीयते कथ्यते। यथा—पाकं व्रजन्ती हिमजातशीतैराधूयमाणा सततं मरुद्भिः। प्रिये प्रियङ्गुः प्रियविप्रयुक्ता विपाण्डुतां याति विलासिनीव ॥ [ ऋतुसंहारम् ४।१० ] ॥ २७ ॥

उपेन्द्रवज्रा प्रथमे तृतीये
तुर्य्ये च पादे भवरत्नभूते।
यदीन्द्रवज्रा भवति द्वितीये
प्रिये तदृद्धिं ब्रूवते प्रियां वा ॥ २८ ॥

हे भवरत्नभूते संसाररत्नस्वरूपे प्रिये प्रथमे तृतीये चतुर्थे च पादे यद्युपेन्द्रवज्रा भवति द्वितीये पादे इन्द्रवज्रा भवत्ति तदा ऋद्धिं नाम प्रियां



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



नाम वा उपजातिं कवयो ब्रूवते कथयन्ति। यथा—अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम्। वनाय पीतप्रतिबद्धवत्सां यशोधनो धेनुमृषेर्मुमोच ॥ [ रघु २।१ ] ॥ २८ ॥

यत्रेन्द्रवज्रा प्रथमे तु पादे
विभाति सीमन्तिनि कान्तकान्ते।
उपेन्द्रवज्रा चरणत्रयेऽन्त्ये
निबोध बुद्धिं ननु तां सुधां वा ॥ २६ ॥

हे सीमन्तिनि "सीमन्तः केशवेश" इति पररूपम्। कान्ता मनोरमा कान्तिर्य्यस्या हे कान्तकान्ते यत्र प्रथमे पादे एव इन्द्रवज्रा अन्त्ये चरणत्रये उपेन्द्रवज्रा विभाति तां बुद्धिं नाम सुधां वा नामोपजातिं निबोध बुध्यस्व। यथा—गात्राणि कालीयकचर्च्चितानि सपत्त्रलेखानि मुखाम्बुजानि। शिरांसि कालागुरुधूपितानि भवन्ति नार्य्याः सुरतोत्सवाय ॥ [ ऋतुसंहारम् ४।५ ] ॥ इन्द्रवज्रोपेन्द्रवज्राचरणसाङ्कर्य्यादुपजातिषु पादान्ते यतिः कर्त्तव्या ॥ २६ ॥

आख्यानिकीयं विपरीतपूर्व्वा
प्रगीयते छन्दसि कालिदासैः।
विलोलनीलालकशैवलाली
सुशोभमानाननपङ्कजान्ते ॥ ३० ॥

शास्त्रान्तरे बुद्ध्या नामान्तरमाह आख्यानिकीति। विलोलाश्चला नीलाः कृष्णा अलका एव शैवलास्तेषामाली श्रेणी तया सुशोभमानस्यानन-पङ्कजस्यान्तः प्रान्तभागो यस्या हे तथाभूते इयं बुद्धिनामोपजातिश्छन्दसि श्रुतबोधनाम्नि च्छन्दोग्रन्थे कालिदासैर्विपरीतपदं पूर्व्वं यस्यास्तथाविधाख्यानिकी विपरीताख्यानिकीति यावत् प्रगीयते उच्यते। कालिदासैरिति बहुवचननिर्द्देश आदरातिशयद्योतकः। 'मणिप्रभा कान्तिमती सती गतिः स्मृतिः कुशाग्री रतिरुन्नता शिवा। वरा धरा प्रीतिमती प्रिया सुधा चतुर्दशैता उपजातयः क्रमात्' ॥ वृत्तमाला २२ ॥ उपजातयो निवृत्ताः ॥ ३० ॥





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



प्रथमचतुष्कं यत्र लघु स्यात्
तदनु तथा चेदष्टमसेवम् ।
नवममपि स्यात्तद्वदुदारै-
रनवसितोक्ता सा कविवारैः ॥ ३१ ॥

यत्र प्रथमचतुष्कं प्रथमं द्वितीयं तृतीयं चतुर्थं लघु तत्पश्चादष्टमं नवममप्यक्षरं लघु स्यात्तदा उदारैः [ कविवारैः ] कविवर्गैः सा अनवसिता नाम छन्द उक्ता । यथा—अनवसिता चेत्केशवभक्तिर्न भवति पुंसाम्बन्धनमुक्तिः । इति हितवाक्यं धारय चित्ते परिहर चास्थां नश्वरवित्ते ॥ पादान्ते यतिः । नेदं मात्रासमकं, तद्धि मात्रारचितमियन्तु अक्षरगणरचिता इत्यनयोर्भेदः ॥ ३१ ॥

आद्यचतुर्थकसप्तमकञ्चे-
दक्षरकं दशमञ्च तथान्त्यम् ।
यत्र भवेद्गुरु तन्वि तदा तद्-
दोधकमित्यथवा वद बन्धुम् ॥ ३२ ॥

यत्र प्रथमं चतुर्थं सप्तमं दशमं तथा अन्त्यमेकादशञ्चाक्षरं यदि गुरु भवेत्तदा हे तन्वि तत् दोधकं नाम अथवा बन्धुं नाम छन्दो वद ब्रूहि । यथा—'दोधकमर्थविरोधकमुग्रं स्त्रीचपलं युधि कातरचित्तम् । स्वार्थपरं मतिहीनममात्यं मुञ्चति यो नृपतिः स सुखी स्यात् ॥' हलायुधः । पादान्ते यतिः । पूर्ववन्नाय-मपि मात्रासमकम् ॥ ३२ ॥

दीर्घमादिगतमुल्लसितभ्रू-
श्चेत्तृतीयकमथ सप्तमकं स्यात् ।
तद्वदेव दशमञ्च तथान्त्यं
स्वागता सुदति सा कथितार्य्यैः ॥ ३३ ॥

उल्लसिते भ्रुवौ यस्या हे उल्लसितभ्रूः हे सुदति यदि आदिगतं प्रथमं तृतीयं सप्तमं चाक्षरं दीर्घं स्यात् दशमं तथा अन्त्यमेकादशञ्चाक्षरं तद्वद्दीर्घमेव स्यात् तदा आर्य्यैर्महर्षिभिः सा स्वागता नाम छन्दः कथिता। यथा—



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



आहवम्प्रविशतो यदि राहुः पृष्ठतश्चरति वायुसमेतः। प्राणवृत्तिरपि यस्य शरीरे स्वागता भवति तस्य जयश्रीः ॥ पादान्ते यतिः ॥ ३३ ॥

अक्षरमाद्यन्तदनु चतुर्थं
पञ्चममेवं गुरु दशमं स्यात्।
यत्र तथैकादशमपि सा स्या-
न्मौक्तिकमाला शशिमुखि वा श्रीः ॥ ३४ ॥

हे शशिमुखि यत्राद्यम्प्रथमं तत्पश्चाच्चतुर्थं पञ्चमं दशमं तथा एकादशमप्यक्षरं गुरु स्यात्सा मौक्तिकमाला नाम अथवा श्रीर्नामच्छन्दो भवेत्। 'कामनिदाघज्वलिततरास्त्वोर्वक्षसि संस्था युवकयुवत्योः। मौक्तिकमालातप उपशान्त्यै श्रीरपि नेन्दोः किरणगतालम् ॥' पादान्ते यतिः। प्राग्वन्नेयमपि परमटिका ॥ ३४ ॥

आद्यचतुर्थं सुतनु गुरु स्यात्
पञ्चममित्थं दशममथान्त्यम्।
वाणरसैश्चेद्यतिरनुकूला
कुट्मलदन्ती भवति तदा वा ॥ ३५ ॥

हे सुतनु आद्यचतुर्थं प्रथमतुर्य्यं पञ्चमं दशममेकादशञ्चाक्षरं यदि गुरु स्यात्पञ्चभिः षड्भिश्च यतिः तदा अनुकूला नाम कुट्मलदन्ती नाम वा छन्दो भवति। यथा—'वल्लववेशा मुररिपुमूर्त्तिर्गोपमृगाक्षी कृतरतिपूर्त्तिः। वाञ्छितसिद्ध्यै प्रणतिपरस्य स्यादनुकूला जगति न कस्य' ॥ [ गङ्गादासः ]। इत्यादि। पूर्व्वयोः पादान्ते यतिरस्या वाणरसैर्य्यतिरिति भेदः। नाम्नैव भेद इत्यन्ये ॥ ३५ ॥

सतृतीयं ननु तुर्य्यसप्तमं
नवमैकादशमप्यथाक्षरम्।
पुरुभाग्ये गुरु यत्र जायते
कलकण्ठः कविभिः स गीयते ॥ ३६ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ननु भोः पुरुभाग्ये विपुलभाग्ये यत्र यस्मिन् सतृतीयं तृतीयसहितं चतुर्थसप्तमं नवममेकादशमप्यक्षरं गुरु भवति स कविभिः कलकण्ठो नाम छन्दो गीयते कथ्यते। यथा—इदमप्यच्युत विश्वभावनं वपुरानन्दकरं मनोदृशाम्। सुरविद्विट्क्षपणैरुदायुधैर्भुजदण्डैरुपपन्नमष्टभिः॥ पादान्ते यतिः॥ ३६॥

आदिमं तृतीयनवमन्तथै-
कादशञ्च तन्वि यदि चाक्षरम्।
यत्र दीर्घमेव ननु जायते
सा द्रुता सुधीभिरवसीयते॥ ३७॥

हे तन्वि यत्र प्रथमं तृतीयं नवमं तथा एकादशञ्चाक्षरं यदि दीर्घमेव भवति सा सुधीभिः द्रुता नाम छन्दोऽवसीयते निश्चीयते। यथा—कृष्णवेणु-निस्वनविमोहिता गेहकृत्यमप्यगणयन्त्यसौ। भानुजार्च्चनं व्यपदिशन्त्यथो राधिकालिभिः प्रचलिता द्रुता॥ पादान्ते यतिः॥ ३७॥

अगुरवो भवन्त्यादिमास्त्रयो
यदि हि पञ्चमस्तद्वदष्टमः।
सदशमस्तदा कामचारिणी
रसशरैर्यतिर्जाह्नवीति वा॥ ३८॥

यदि हि आदिमास्त्रयो वर्णाः प्रथमद्वितीयतृतीया अगुरवो लघवो भवन्ति पञ्चमः सदशमो दशमसहितोऽष्टमश्च तद्वदगुरुर्लघुर्भवति षड्भिः पञ्चभिश्च यदि यतिस्तदा कामचारिणी नाम जाह्नवी नाम वा भवति। यथा—शिरसि यां वहत्यादराच्छिवः शरणमस्तु सा देहिनां सरित्। श्रुतिभिरीड्यते यानिशं शुभा शुभचयप्रदा सैव जाह्नवी॥ ३८॥

हरिसपर्य्यया ध्वस्तदुष्कृते
विलसदिन्दिराशोभनाकृते।
व्रतविचक्षणे छान्दसा इमां
जगति के चन प्राहुरिन्दिराम्॥ ३९॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हरेः कृष्णस्य सपर्य्यया पूजया ध्वस्तं विनष्टं दुष्कृतं दुरितं यस्यास्तथा विलसन्ती दीप्यमाना या इन्दिरा लक्ष्मीस्तद्वच्छोभना आकृतिर्य्यस्या हे तथाभूते व्रतेषु विचक्षणे इमां जाह्नवीं के चन के चिच्छान्दसाश्छन्दोविद इन्दिरां नाम छन्दो ब्रुवन्ति। यथा—'जयति तेऽधिकं जन्मना व्रजः श्रयत इन्दिरा शश्वदत्र हि। दयित दृश्यतां दिक्षु तारकास्त्वयि धृतासवस्त्वां विचिन्वते' ॥ [ भाः १०।३१।१ ] ॥ ३९ ॥

आदिमन्तृतीयकञ्च पञ्चमं
सप्तमन्तथाष्टमान्त्यमन्तिमम्।
दीर्घमेव यत्र तन्वि दृश्यते
श्येनिकेति सा बुधैः प्रकाश्यते ॥ ४० ॥

हे तन्वि यत्र आदिमं प्रथमं तृतीयं पञ्चमं सप्तमं तथा अष्टमान्त्यं नवमम् अन्तिममेकादशञ्चाक्षरं दीर्घमेव दृश्यते सा बुधैः श्येनिकेति श्येनिका नाम छन्दः प्रकाश्यते। यथा—'क्रूरदृष्टिरायताग्रनासिका चञ्चला कठोरतीक्ष्ण-नादिनी। युद्धकाङ्क्षिणी सदामिषप्रिया श्येनिकेव सा विगर्हिताङ्गना' ॥ [ हलायुधः ] ॥ पादान्ते यतिः ॥ ४० ॥

सैव दैवकर्म्मवर्म्मधारिणि
प्रोद्यदन्तरायवाणवारिणि।
श्येन्यभिख्यया जगत्सु राजते
सेनिकाख्यया च कस्यचिन्मते ॥ ४१ ॥

श्येनिकाया नामान्तरमाह सैवेति। हे दैवकर्म्मरूपकवचधारिणि हे उदय-[मा]प्नुवद्विघ्नरूपवाणवारिणि सैव श्येनिकैव जगत्सु कस्यचिदाचार्य्यस्य मते श्येनी नाम्ना सेनिका नाम्ना च राजते दीप्यते ॥ ४१ ॥

आदिमन्ननु तृतीयसप्तमं
कुन्ददन्ति नवमन्तथान्तिमम्।
अक्षरन्तु गुरु दृश्यते यदा
ज्ञायतां सति रथोद्धता तदा ॥ ४२ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे कुन्ददन्ति हे सति यदा आदिमं प्रथमं तृतीयं सप्तमं नवमं तथा अन्तिममेकादशश्चाक्षरं गुरु दृश्यते तदा रथोद्धता नाम छन्दो ज्ञायतां बुध्यताम्। यथा—'या करोति विविधैर्विटैः समं सङ्गतं परगृहे रता च या। म्लानयत्युभयतोऽपि बान्धवान् मार्गधूलिरिव सा रथोद्धता'॥ [ हलायुधः ]॥ पादान्ते यतिः॥ ४२॥

कुवलयनयने गुरुर्य्यदा
भवति सुमुखि सप्तमस्तथा।
नवमकसहितोऽन्तिमस्तदा
कवय इह वदन्ति भद्रिकाम्॥ ४३॥

हे कुवलयनयने उत्पलनयने हे सुमुखि यदा सप्तमस्तथा नवमसहितोऽन्तिम एकादशश्च वर्णो गुरुः स्यात्तदा कवय इह जगति भद्रिकां नाम छन्दो वदन्ति। यथा—अभिनवजलदच्छटाच्छविः सकलविबुधविद्विषां पविः। कमलजनयनः श्रियः पतिः स भवतु मम भद्रिका गतिः॥ पादान्ते यतिः॥ ४३॥

गुरु चेत्सतृतीयकषष्ठकं
नवमन्दशमस्य तथान्तिमम्।
उपचित्रमवादि तदा सता
ललिताङ्ग्यथवा ललितव्रता॥ ४४॥

हे ललिताङ्गि चेद्यदि तृतीयसहितं षष्ठं नवमन्तथा दशमस्यान्तिममेकादशश्चाक्षरं गुरु भवति तदा सता कविना उपचित्रं नाम ललितव्रता नाम वा अवादि उक्ता। यथा—अयि वल्लववेशधरं हरिं शिखिपिच्छविमण्डिशिखण्डकम्। तव भावयतोऽस्तविनिर्गमे समयेऽप्युपचित्रगतिर्भवेत्॥ पादान्ते यतिः॥ ४४॥

आद्यद्वितयं करभोरु गुरु
स्यात्पञ्चममष्टममन्त्यमपि।
यत्राङ्गविमोटनदत्तसुखे
तन्मोटनकं भणितं सुमुखि॥ ४५॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



मणिबन्धादाकनिष्ठं करस्य करभो बहिरित्यमरः। करभाविव ऊरू यस्या हे करभोरु "ऊरूत्तरपदादौपम्ये" इत्यूङ्। [ पां ४।१।६९ ]। "अम्बार्थनद्योर्ह्रस्वः" [ पां ७।३।१०७ ] इति ह्रस्वः। "एङ्ह्रस्वात्सम्बुद्धेः" [ पां ६।१।६९ ]-रिति सम्बुद्धिलोपः। अङ्गस्य हस्तपादाङ्गुल्याद्यवयवस्य विमोटनेन मर्दनेन दत्तं सुखं यया हे अङ्गविमोटनदत्तसुखे यत्र आद्यद्वितयं प्रथमं द्वितीयं पञ्चमम् अष्टमम् अन्त्यम् एकादशमप्यक्षरं गुरु स्यात्तत् मोटनकं नाम छन्दः कविभिः कथितम्। यथा—'रङ्गे खलु मल्लकलाकुशलश्चाणूरमहाभटमोटनकम्। यः केलिलवेन चकार स मे संसाररिपुं प्रतिमोटयतु' [ गङ्गादासः ] पादान्ते यतिः॥ ४५॥

प्रथमचतुष्टयषष्ठमथो
वरतनु सप्तमकं नवमम्।
लघु दशमञ्च तथैव यदा
सुमुखि मता सुमुखीति तदा॥ ४६॥

हे वरतनु हे सुमुखि प्रथमद्वितीयतृतीयचतुर्थषष्ठसप्तमनवमं लघु दशमञ्चाक्षरं यदा तथैव लघु भवति तदा सुमुखीति सुमुखी नाम छन्दोऽभिहिता। 'तरणिसुतातटकुञ्जगृहे वदनविधुस्मितदीधितिभिः। तिमिरमुदस्य वृतं सुमुखी हरिमवलोक्य चुचुम्ब चिरम्'॥ [ गङ्गादासः ]। पादान्ते यतिः॥ ४६॥

चत्वारः स्युः प्रथममलघवो
यस्यामेकादश इह सुमते।
वेदैरश्वैर्यदि भवति यति-
स्ताम्भाषन्ते भ्रमरविलसिताम्॥ ४७॥

हे सुमते यस्यामादौ चत्वारो वर्णा एकादशश्च वर्णोऽलघवो दीर्घाः स्युः यदि चतुर्भिः सप्तभिश्च यतिर्भवति तदा इह जगति तां भ्रमरविलसितां नाम च्छन्दो भाषन्ते। 'किन्ते वक्त्रं चलदलकचितं किं वा पद्मम्भ्रमरविलसितम्। इत्येवम्मे जनयति मनसि भ्रान्तिं कान्ते परिसरसरसि'॥ [ हलायुधः ]॥ पादान्ते यतिः॥ ४७॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अयि शशिमुखि दश लघवः
सति गुरुरथ विरतिभवः ।
इह यदि नयनपथगता
दमनकमुदितमिति सता ॥ ४८ ॥

अयि भोः शशिमुखि चन्द्रवदने हे सति साध्वि यदि प्रथमं दश लघवो वर्णा अथानन्तरं [विरतिभवः] एकादशो वर्णो गुरुर्नयनपथगता दृष्टिगोचरा भवन्ति तदा इह जगति सता विदुषा दमनकं नाम छन्द उक्तम् । यथा—'प्रणमत मधुरिपुचरणं भवजलनिधिपरितरणम् । अभिनवबिसलयरुचिरं सुरपतिसकलभयहरम्' ॥ [ वाणीभूषणम् ] ॥ पादान्ते यतिः ॥ ४८ ॥

विलासिनीसमानि लक्षणानि
विचक्षणे भवन्ति लक्षितानि ।
अदीर्घमन्तिमाक्षरन्तु यत्र
वदन्ति सेनिकेति तां कलत्र ॥ ४९ ॥

हे विचक्षणे विदुषि हे कलत्र यत्र विलासिन्याः तन्नामच्छन्दसः समानि तुल्यानि लक्षणानि चिह्नानि लक्षितानि भवन्ति तु किन्तु अन्तिमाक्षरमेकादशमक्षरं यदि लघु भवति तदा तां सेनिकेति सेनिका नाम छन्दो वदन्ति । यथा—व्रजाङ्गनाव्रजस्य मध्यगेन प्रहृष्यता तदङ्गसङ्गमेन । प्रजातभूरिरोमहर्षणेन कलं जगेऽथ केशिसूदनेन ॥ पादान्ते यतिः ॥ ४९ ॥

कुड्मलदन्तीप्रतिचरणान्त-
संस्थितवर्णा यदि लघवो हि ।
यत्र भवेयुर्ननु सति तर्हि
सान्द्रपदं तद्वद वरनारि ॥ ५० ॥

ननु भोः सति प्रशस्ते हे वरनारि श्रेष्ठनारि यत्र कुड्मलदन्त्याः प्रतिचरणान्ते चतुर्णामपि पादानामन्ते संस्थिता वर्णा यदि लघवो हि भवेयुस्तर्हि तत् सान्द्रपदं नाम छन्दो वद ब्रूहि । यथा—मुञ्च कुसङ्गं कुरु यतिसङ्गमिन्द्रियवेगं झटिति



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



निरुन्धि । मा परहिंसामपि कुरु तात सान्द्रपदङ्चेरवमभिलषाशु ॥ पादान्ते यतिः ॥ ५० ॥

इति त्रिष्टुप्कुसुमम् ।

---

## १२ । जगती ।

सर्व्वे वर्णा दीर्घा यस्मिन् सञ्जायन्ते
पीयूषं वर्षन्ति च्छन्दोदृश्वस्वान्ते ।
देवच्छन्दच्छन्दश्छन्दःक्लृप्तच्छन्द-
स्तम्प्राग्विद्याधारो ब्रूते विद्याधारम् ॥ १ ॥

हे छन्दोदृश्वनां स्वान्ते मनसि पीयूषममृतं वर्षन्ति देवच्छन्दे शतयष्टिकहारे छन्दोऽभिलाषो यस्या हे तथाभूते छन्दसा इच्छया क्लृप्तं रचितं छन्दो यया हे तथाभूते यस्मिन्सर्व्वे वर्णा दीर्घाः सञ्जायन्ते भवन्ति प्राग्विद्याधारस्तं विद्याधारं नामच्छन्दो ब्रूते कथयति । विद्याधार इति जातावेकवचनम् । यथा— योऽनाद्यन्तो यं योगीशाः संसेवन्ते येन त्राता यस्मै सद्भावं कल्पन्ते । यस्मान्मोक्षो यस्यानन्ता शक्तिर्यस्मिन् प्रोतं विश्वं शश्वद्भूयाद्भक्तिस्तस्मिन् ॥ पादान्ते यतिः ॥ १ ॥

आद्यचतुर्थं पञ्चमषष्ठं यस्या-
मष्टमतश्चेद्वर्णचतुष्कं दीर्घम् ।
मौक्तिकमालाभूषितवक्षस्तर्हि
प्राक्कविगीतान्तां वद कान्तोत्पीड़ाम् ॥ २ ॥

मौक्तिकमालाभिर्भूषितं वक्षो यस्या हे तथाभूते यस्यामाद्यं प्रथमं चतुर्थं पञ्चमं षष्ठं दीर्घमष्टमाच्च परं वर्णानां चतुष्कं दीर्घं भवति तर्हि पूर्व्वकविभिः प्रोक्तां तां कान्तोत्पीड़ां नाम छन्दो वद ब्रूहि । यथा—'कामशरैर्व्याप्ता खलु कान्तोत्पीड़ामाप्तवती दुःखैः परिमुह्यन्ती या । सा लभते चेत् कामुकयोगं गाढ़ं दुःखविमुक्ता स्यात् परमानन्दाप्ता ॥ [ हलायुधः ] ॥ २ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



चत्वारः प्राङ्मतिमति दीर्घा वर्णाः
कान्ते ह्रस्वास्तदनु च चत्वारः स्युः ।
चत्वारोऽन्ते पुनरपि दीर्घा यस्या-
श्छिन्नाब्धीभैर्जलधरमाला सा स्यात् ॥ ३ ॥

हे मतिमति बुद्धिमति कान्ते यस्याः प्राक् प्रथमं चत्वारो वर्णा दीर्घास्तदनु तत्पश्चाच्च चत्वारो वर्णा ह्रस्वा अन्ते पुनरपि भूयोऽपि चत्वारो वर्णा दीर्घाः स्युश्चतुर्भिरष्टाभिश्च छिन्ना सविरामा चेत्तदा सा जलधरमाला नाम छन्दः स्याद्भवेत् । यथा—'दीव्यस्त्रीणां सचरणलाक्षारागा रागा[या]ते निपतितपुष्पा-पीड़ाः । पीड़ाभाजः कुसुमचिताः साशंसं शंसन्त्यस्मिन् सुरतविशेषं शय्याः' ॥ [ भारविः ५।२३ ] ॥ ३ ॥

यस्यान्तृतीयं सुभ्रूरेकादशाद्यं
ह्रस्वम्प्रयुक्तं कान्ते गम्भीरभावे ।
अश्वेन्द्रियैश्चेद्भूयो जातो विरामो
विद्वद्वरैः सङ्गीता सा वाहिनीति ॥ ४ ॥

हे गम्भीरभावे कान्ते यस्यां तृतीयम् एकादशाद्यं दशमञ्चाक्षरं ह्रस्वं प्रयुक्तं भवति सप्तभिः पञ्चभिश्चेत्पुनर्विरामो जातस्तदा विद्वद्वरैः सा वाहिनीति तन्नाम-च्छन्दः सङ्गीता संशब्दिता । यथा—पूर्णो यदीयः कोषो नीतिर्विशुद्धा दृष्टिः स्वधर्म्मे रक्षा स्वानाम्प्रजानाम् । यद्वाहिनी सर्व्वाङ्गैर्युक्ता प्रधर्ष्या राज्ञोऽस्य संविज्ञेयं श्रेयः सदैव ॥ ४ ॥

प्रथममगुरवः षड् यत्र कान्ते
सुतनु दशमकश्चापीदृशः स्यात् ।
नगयुगविरतिश्चेच्छान्दसस्तं
प्रकटयति पुटं वा श्रीपुटं वा ॥ ५ ॥

हे सुतनु कान्ते यत्र प्रथममादौ षड् वर्णा गुरवः दशमश्चापि वर्ण एवमेव गुरु स्यात् नगैरष्टभिर्युगैश्चतुर्भिश्च यदि विरतिस्तदा छान्दसश्छन्दोवित् तं पुटं



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



नाम श्रीपुटं वा नाम च्छन्दः प्रकटयति व्यनक्ति। यथा—'न विचलति कथञ्चिन्न्यायमार्गाद्वसूनि शिथिलमुष्टिः पार्थिवो यः। अमृतपुट इवासौ पुण्यकर्म्मा भवति जगति सेव्यस्सर्व्वलोकैः॥ [ हलायुधः ]॥ ५॥

आदौ षड्दीर्घाः सूक्ष्मकौशेयवीते
द्वावन्त्यौ यस्याः सप्तमस्येन्दुवक्त्रे।
श्यामे तद्वच्चैकादशद्वादशौ चे-
द्बाणाश्वैश्छिन्ना वैश्वदेवी भवेत्सा॥ ६॥

हे सूक्ष्माभ्यां कौशेयाभ्यां पट्टवस्त्राभ्यां वीते वेष्टिते परिहितमृदुपट्टवस्त्रयुग्मे इत्यर्थः। हे इन्दुवक्त्रे हे श्यामे पारिभाषिकश्यामोपाधे श्यामवर्णे वा यस्यामाद्याः प्रथमाः षड्वर्णास्तथा सप्तमस्यान्त्यौ द्वौ अष्टमनवमौ एकादशद्वादशौ च दीर्घाः स्युः पञ्चभिः सप्तभिश्च च्छिन्ना स्रयतिका सा वैश्वदेवी नाम छन्दो भवेत्। यथा—'धन्यः पुण्यात्मा जायते क्वापि वंशे तादृक् पुत्रोऽसौ येन गोत्रं पवित्रम्। गोविप्रज्ञातिस्वामिकार्य्ये प्रवृत्ते शुद्धः श्रद्धादौ वैश्वदेवी भवेद्यः'॥ [ हलायुधः ]॥ ६॥

भवेद्यत्र दीर्घं द्वितीयन्तृतीयं
तथा पञ्चमं षष्ठकञ्चाष्टमञ्च।
तदन्त्यन्तथैकादशं द्वादशञ्चे-
द्भुजङ्गप्रयातं स्मृतं कोविदैस्तत्॥ ७॥

यत्र द्वितीयं तृतीयं तथा पञ्चमं षष्ठमष्टमं तदन्त्यमष्टमस्यान्त्यं नवमं तथा एकादशं द्वादशञ्चाक्षरं दीर्घं यदि तर्हि कोविदैः पण्डितैस्तद्भुजङ्गप्रयातं नाम छन्दः स्मृतम् अभिहितम्। यथा—'पुरः साधुवद्भाति मिथ्याविनीतः परोक्षे करोत्यर्थनाशं हताशः। भुजङ्गप्रयातोपमं यस्य चित्तं त्यजेत्तादृशं दुश्चरित्रं कुमित्रम्'॥ [ हलायुधः ]॥ यथा वा—अयन्त्वत्कथामृष्टपीयूषनद्याम् मनोवारणः क्लेशदावाग्निदग्धः तृषार्त्तोवगाढो न सस्मार दावं न निष्क्रामति ब्रह्मसम्पन्नवन्नः॥ पादान्ते यतिः॥ ७॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



आद्यचतुर्थकसप्तमाश्च वर्णा-
श्चेन्नवमो दशमस्यचान्तिमौ द्वौ।
यत्र महाधिषणे भवन्ति दीर्घाः
क्षेमकरः स भवेत्तदा जगत्याम् ॥ ८ ॥

हे महाधिषणे यत्र प्रथमचतुर्थसप्तमा नवमैकादशद्वादशाश्च वर्णा दीर्घाश्चेद्भवन्ति तदा जगत्यां भुवि स क्षेमकरो नाम छन्दो भवेत्। यथा—'काव्यमिदं विहितं मया बलभ्यां श्रीधरसूनुनरेन्द्रपालितायाम्। कीर्त्तिरतो भवतान्नृपस्य तस्य क्षेमकरः क्षितिपो यतः प्रजानाम्' ॥ [ भट्टिः ]। पादान्ते यतिः ॥ ८ ॥

करभोरु तृतीयकमक्षरकं
गुरु यत्र सषष्ठमथो नवमम्।
चरणान्तगतश्च सतां दयितं
वद तन्ननु तोटकमाप्तकृतम् ॥ ९ ॥

हे करभोरु यत्र तृतीयं षष्ठं नवमं पादान्ते स्थितं द्वादशञ्चाक्षरं गुरु भवति सतां पण्डितानां दयितं प्रियं तत् तोटकं नाम छन्द आप्तैः प्रामाणिकैः कृतं निबद्धं वद। यथा—'कुरवाप च सारसकाकुरवान् कुरवाख्यनगोपि तदाङ्कुरवान्। कमलङ्कृतवद्गतपङ्कमलं कमलं न विलोभयितुं कमलम् ॥' [ नलोदयम् २।४ ]। पादान्ते यतिः ॥ ९ ॥

यस्यान्तनुमध्यापादौ सुतनु द्वौ
जातौ यदि षड्भिः षड्भिश्च विरामः।
नीलोत्पलनेत्रे कोदण्डसमभ्रू-
श्छन्दोनिपुणैः सा प्रोक्ता मणिमाला ॥ १० ॥

हे सुतनु हे नीलोत्पलनेत्रे हे धनुःसमानभ्रूः यस्यां तनुमध्यायाः प्रागुक्ताया द्वौ पादौ जातौ षड्भिः षड्भिश्च यदि विरामः स्यात् तदा छन्दोनिपुणैः कविभिः सा मणिमाला नाम छन्दः प्रोक्ता। यथा—'प्रह्वामरमौलौ रत्नोपलक्लृप्ते जातप्रतिविम्बा शोणा मणिमाला। गोविन्दपदाब्जे राजी नखराणामास्ताम्मम चित्ते ध्वान्तं शमयन्तो ॥' [ गङ्गादासः ] ॥ १० ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वरतनु पञ्चममष्टममेका-
दशमपि यत्र भवेद्गुरु सान्त्यम् ।
अभिनवतामरसं त्वथवा
तन्निगदति तामरसं रसविद्वान् ।। ११ ।।

हे वरतनु यत्र पञ्चममष्टममेकादशमपि सान्त्यमन्त्येन सहितमक्षरं गुरु भवेत् रसविद्वान् रसवित्कविस्तत् अभिनवतामरसं नाम अथवा तामरसं नामच्छन्दो निगदति वक्ति । यथा—'स्फुटसुषमामकरन्दमनोज्ञं व्रजललनानयनालिनिपीतम् । तव मुखतामरसं मुरशत्रो हृदयतडागविकाशि ममास्तु ॥' [ गङ्गादासः ] । पादान्ते यतिः ॥ ११ ॥

अयि नवनीतादपि सुकुमारे-
ऽधरजितविम्बे शशिमुखविम्बे ।
द्विगुणितपादा यदि चतुरंसा
कुसुमविचित्रा भवति तदा सा ।। १२ ।।

अयि भो नवनीतादपि सुकुमारे मृदो अधराभ्यां जितं विम्बं तन्नामकफलं यया हे तादृशि यदि पूर्व्वोक्ता चतुरंसा द्विगुणितः पादो यस्यां तथाविधा भवति तदा सा कुसुमविचित्रा नाम छन्दो भवति । यथा—'विगलितहारा सकुसुम-माला सचरणलाक्षा वलयसुलक्षा विरचितवेशं सुरतविशेषं कथयति शय्या कुसुमविचित्रा ॥' [ हलायुधः ] । पादान्ते यतिः ॥ १२ ॥

प्रभवति पञ्चमञ्च गुरु यस्यां
स्मितमुखि सप्तमञ्च दशमाद्वे
वसुयुगवि[श्रम]श्च नवमालि-
न्युत नवमालिका च कथिता सा ।। १३ ।।

हे स्मितमुखि यस्यां पञ्चमं सप्तमं दशमात्परे द्वे एकादशद्वादशे अक्षरे गुरूणि प्रभवन्ति अष्टभिश्चतुर्भिश्च यदि यतिर्भवति तदा सा नवमालिनी नाम उत एवं नवमालिका नाम छन्दो वा बुधैः कथिता । यथा—धवलयशोंशुकेन



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



परिवीता सकलजनानुरागघुसृणाक्ता। दृढगुणबद्धकीर्त्तिकुसुमौघैस्तव नवमालिनीव नृपलक्ष्मीः॥ [ हलायुधः ]॥ १३॥

भवति चेत्सुतनु गुरु चतुर्थं
तदनु कान्तिमति दशमतो द्वे।
मदनचापकुटिलललितभ्रू-
र्ननु तदा द्रुतपदमुदितं ज्ञैः॥ १४॥

हे सुतनु हे कान्तिमति मदनस्य कामस्य चापाविव कुटिले वक्रे ललिते मनोहरे भ्रुवौ यस्या हे तादृशि यदि चतुर्थमक्षरं दशमाद्वर्णात्परे द्वे एकादशं द्वादशञ्च गुरु भवति चेत्तर्हि ज्ञैः बुधैर्द्रुतपदं नाम छन्द उदितमुक्तम्। यथा—उपनते महति सवनयोगे सुकृतिनः सुकृतचयनशीलाः। अविगणय्य विपदमपि लोकाः त्रिपथगां द्रुतपदमभियन्ति॥ पादान्ते यतिः॥ १४॥

प्रथममगुरवः षड्त्र प्रिये
तदनु च दशमान्त्यस्तद्वद्भवेत्।
वसुयुगविरतिश्चेद्वामोरु तत्
ततमिह ललितं वा सङ्कीर्त्तितम्॥ १५॥

हे प्रिये हे वामोरु यत्र प्रथममादौ षड्वर्णा लघवो भवन्ति तदनु दशमान्त्य एकादशश्च वर्णस्तद्वल्लघुर्भवेत्तथाष्टासु चतुर्षु च विरतिश्चेत्तदा तत् ततं नाम ललितं नाम वा छन्दः सङ्कीर्त्तितम्। यथा—'कुरु करुणमियं गाढोत्कण्ठिका यदुतनयचकोरी कामाधिका। विरहदहनसङ्गादङ्गैः कृशा पिबतु तव मुखेन्दोर्बिम्बं दृशा'॥ [ हलायुधः ]॥ १५॥

यत्र कान्ते भवेदादिमं दीर्घकं
चेत्तृतीयश्चतुर्थन्तथा षष्ठकम्।
सप्तमश्चाष्टमान्त्यद्वयं द्वादशं
सा भवेत्स्रग्विणी सैव लक्ष्मीधरः॥ १६॥

हे कान्ते यत्र आदिमं प्रथमं तृतीयं चतुर्थं षष्ठं सप्तमम् अष्टमस्यान्त्यद्वयञ्च नवमं दशमं द्वादशञ्चाक्षरं यदि दीर्घं भवेत्तदा सा स्रग्विणी नाम सैव लक्ष्मीधरो



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



नाम वा छन्दो भवेत्। स्रग्विणीत्यत्र 'अस्मायामेधास्रजो विनि' [ पां ५।२।१११ ] रिति विनिः। 'ऋन्नेभ्यो ङीबि' [ पां ४।१।५ ] ति ङीप्। यथा—'यो रणे युध्यते निर्भरं निर्भयस्त्यागिता यस्य सर्वस्वदानावधिः। तं नरं वीक्ष्य लक्ष्मीर्यशः स्रग्विणी नूनमभ्येति सत्कीर्त्तिशुक्लांशुका' ॥ [ हलायुधः ]। यथा वा—'अङ्गनामङ्गनामन्तरा माधवो माधवं माधवञ्चान्तरा चाङ्गना। इत्थमाकल्पिते मण्डले मध्यगस्सञ्जगौ वेणुना देवकीनन्दनः' ॥ [ वृत्तमाला ] ॥ १६ ॥

प्रभवति गुरु यत्र चेत्सप्तमं
सनवमदशमं तथा द्वादशम्।
प्रमुदितवदना तदा साथवा
प्रमुदितवदनाक्षि मन्दाकिनी ॥ १७ ॥

हे प्रमुदितमुखनयने यत्र सप्तमं नवमं दशमं तथा द्वादशञ्चाक्षरं गुरु चेद्भवति तदा सा प्रमुदितवदना नाम अथवा मन्दाकिनी नाम छन्दो भवेत्। यथा—'अतिसुरभिरभाजि पुष्पश्रियामतनुतरतयेव सन्तानकः। तरुणपरभृतः स्वनं रागिणामतनुत रतये वसन्तानकः' ॥ [ माघः ६।६७ ]। यथा वा—'सहशरधि निजं तथा कार्म्मुकं वपुरतनु तथैव संवर्म्मितम्। निहितमपि तथैव पश्यन्नसिं वृषभगतिरुपाययौ विस्मयम्' ॥ [ भारविः १८।१६ ]। पादान्ते यतिः ॥ १७ ॥

अयि पुनरियमेव विद्युत्प्रभे
मधुरवचनतोषितस्त्रीसभे।
भवति जगति चञ्चलाक्षीति वा
ततमिति च सुगात्रि गौरीति वा ॥ १८ ॥

अस्या अपि नामान्तरमाह—अयीति। अयि विद्युत्प्रभे स्त्रीणां सभा स्त्रीसभं 'सभा संहता' विति क्लीवत्वम्। 'ह्रस्वो नपुंसके प्रातिपदिकस्ये' [ पां १।२।४७ ] ति ह्रस्वः। पुनष्टाप्। मधुरवचनेन मिष्टालापेन तोषितं प्रीणितं स्त्रीसभं यया हे तथाभूते हे सुगात्रि इयमेव प्रमुदितवदनैव जगति चञ्चलाक्षी नाम वा ततं नाम अथवा गौरीनाम छन्दो भवति ॥ १८ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



प्रथममगुरुषट्कमुर्जस्वले
तदनु भवति यत्र कान्तेऽष्टमम् ।
विधुमुखि लघु तद्वदेकादशं
वसुयुगविरतिश्च चेत्सा प्रभा ॥ १९ ॥

हे ऊर्जस्वले हे कान्ते हे विधुमुखि प्रथममादौ यत्र अगुरूणां षट्कं लघुषट्कं तथा अष्टममेकादशञ्चाक्षरं लघु भवति अष्टसु चतुर्षु च विरतिश्चे ज्जायते सा प्रभा नाम छन्दः स्यात् । यथा—नवघनमभितस्तु नित्यस्थिरा यदि विलसति पीतविद्युत्तदा । नियतमनुकरोति गौराम्बरावृतमरकतकान्तकृष्णप्रभाम् ॥ १९ ॥

उपेन्द्रवज्राचरणान्तिमाक्षरात्
पुरोधिकश्चकलघुर्य्यदा प्रिये ।
प्रयुज्यते चम्पककुड्मलाङ्गुले
तदात्र वंशस्थमुशन्ति सूरयः ॥ २० ॥

हे चम्पककुड्मलाङ्गुले प्रिये यदा उपेन्द्रवज्रायाश्चरणानामन्तिमाक्षरात्पुरः पूर्व्वम् एकोऽधिको लघुः प्रयुज्यते स्थाप्यते तदा अत्र जगति सूरयो धीरा वंशस्थं नाम छन्द उशन्ति इच्छन्ति । यथा—'न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम् । न षट्पदोऽसौ न जुगुञ्ज यः कलं न गुञ्जितं तन्न जहार यन्मनः ॥ [ भट्टिः २।१९ ] ॥ २० ॥

तदेव टाबन्तमुशन्त्यधीश्वरा
भुजङ्गमानामपरे कवीश्वराः ।
तदेव वंशस्थविलं प्रमद्वरे
तदेव वंशस्तनितन्तथेतरे ॥ २१ ॥

वंशस्थस्य नामान्तरान्याह—तदिति । हे प्रमद्वरे······भुजङ्गमानां नागानामधीश्वराः पिङ्गलनागपादास्तदेव वंशस्थमेव टाबन्तम् 'अजाद्यतष्टाप्' [ पां ४।१।४ ] विहितप्रत्ययान्तं वंशस्थामिति यावदुशन्ति इच्छन्ति । अपरे कवीश्वरास्तदेव वंशस्थविलं नाम छन्द उशन्ति । तथा इतरे कवयस्तदेव वंशस्तनितं नाम छन्द उशन्ति इच्छन्ति ॥ २१ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वंशस्थपादादिगताक्षराणि चे-
द्दीर्घाणि यस्याम्प्रभवन्ति भोस्तदा ।
उत्फुल्लनीलोत्पलपत्त्रलोचने
तामिन्द्रवंशां ब्रुवते विचक्षणाः ॥ २२ ॥

भो उत्फुल्लनीलोत्पलपत्त्रलोचने यस्यां यत्र वंशस्थपादानामादौ स्थितान्यक्षराणि यदि दीर्घाणि भवन्ति तदा तां विचक्षणा धीरा इन्द्रवंशां नाम छन्दो ब्रुवते । यथा—'कुर्वीत यो देवगुरुद्विजन्मनामुर्वीपतिः पालनमर्थलिप्सया । तस्येन्द्रवंशेऽपि गृहीतजन्मनः सञ्जायते श्रीः प्रतिकूलवर्त्तिनी' ॥ [ हलायुधः ] ॥ पादान्ते यतिः ॥ २२ ॥

ताम्बूलरागारुणिताधरानने
गीर्व्वाणवाणीरचनाविचक्षणे ।
सैवेन्दुवंशेत्यथवा शुचिस्मिते
स्याच्चन्द्रवंशोऽपि च कस्यचिन्मते ॥ २३ ॥

इन्द्रवंशाया नामान्तरे आह—ताम्बूलेति । ताम्बूलस्य रागेण रक्तिम्ना अरुणिते रक्ते अधरानने यस्या हे तथाभूते हे गीर्व्वाणवाण्याः संस्कृतभाषाया रचनायां विचक्षणे पटो तथा शुचि शुद्धं स्मितमीषद्धास्यं यस्यास्तादृशि सैव इन्द्रवंशैव इन्दुवंशा नाम छन्दोऽथवा कस्य चिदाचार्य्यस्य मते सैव चन्द्रवंशो नामच्छन्दोऽपि भवेत् ॥ २३ ॥

यदि गुरु पञ्चममष्टमं भवेत्
सदशममन्तिममक्षरं तदा ।
चिकुरकलापजिताच्छशैवले
ननु यमुनामथवात्थ मालतीम् ॥ २४ ॥

चिकुरस्य केशस्य कलापेन संहतेन जितः पराजितः अच्छः निर्म्मलः शैवलो जलनीली यया हे तथाभूते यदि पञ्चममष्टमं दशमसहितमन्तिमं द्वादशञ्चाक्षरङ्गुरु भवेत्तदा यमुनां नामाथवा मालतीं नाम छन्द आत्थ ब्रूहि ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यथा—'अयि विजहीहि दृढोपगूहनं त्यज नवसङ्गमभीरु वल्लभम्। अरुण-करोद्गम एष वर्त्तते वरतनु सम्प्रवदन्ति कुक्कुटाः॥ [ हलायुधः ]॥ पादान्ते यतिः॥ २४॥

यदि गुरु भीरु सपञ्चमाष्टमं
दशममुदेति तथान्त्यमक्षरम्।
वरतनु यत्र रसर्त्तुभिर्य्यति-
र्वरतनुमाह तदात्र वाक्पतिः॥ २५॥

अस्या यतिमत्त्वेन नामान्तरमाह—यदीति। हे भीरु भयशीले हे वरतनु यदि पञ्चममष्टमन्दशममन्त्यञ्चाक्षरं गुरु दीर्घमुदेति यत्र षड्भिः षड्भिश्च यतिर्भवति तदा तां वाक्पतिर्वागीशो वरतनुं नाम छन्द आह ब्रवीति। यथा—अपि सखि वेत्सि किमद्य माम्प्रिया वरतनुरल्पमपि प्रभाषते। न परि-दधाति विचित्रमंशुकं न मलयजेन वपुश्च लिम्पते॥ २५॥

आद्यं द्वितीयमथ तुर्य्यमष्टमं
दीर्घं हि यत्र दशमम्पतिव्रते।
स्याद्द्वादशञ्च ललिताननाम्बुजे
तां कीर्त्तयन्ति ललितां मनीषिणः॥ २६॥

हे पतिव्रते हे ललिताननाम्बुजे यत्र प्रथमं द्वितीयं चतुर्थम् अष्टमं-दशमं द्वादशञ्चाक्षरं दीर्घमेव स्यात्तां मनीषिणो ललितां नाम छन्दः कीर्त्त-यन्ति। यथा—गोपाङ्गनातिललिता गतिर्हरेश्चित्तं चकर्ष मदयाञ्चकार च। ताभिः सचालिरुत मञ्जुकुञ्जगो रेमे सलीलमथ केलिलालसः॥ २६॥

द्वितीयतुर्य्यषष्ठमष्टमन्तथा-
ष्टमान्तिमान्तिमं सुमध्यमेऽन्तिमम्।
गुरु प्रयोजितं यदा प्रिये तदा
वदन्ति पञ्चचामरं मनीषिणः॥ २७॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे सुमध्यमे शोभनमध्यदेशे प्रिये वल्लभे यदा द्वितीयं तुर्य्यं षष्ठम् अष्टमं तथा अष्टमस्यान्तिमस्य नवमस्यान्तिमं दशममिति यावत् अन्तिमम् पादान्तगतञ्चाक्षरं गुरु प्रयोजितं भवति तदा विचक्षणाः पण्डिताः पञ्चचामरं नामच्छन्दः वदन्ति। यथा—सखे दधत् क्व यासि पञ्चचामरं व्रजाम्यहं नृपाज्ञया ससम्भ्रमम्। प्रसारितानि मित्र देवमन्दिरे वितानकान्यलङ्करिष्णु-रञ्जसा॥ पादान्ते यतिः॥ २७॥

भवति यत्र गुरु तुर्य्यमष्टमं
तदनु तन्वि दशमन्तथान्तिमम्।
वदनकान्तिजितचन्द्रमण्डले
भवति सा प्रियतमे प्रियंवदा॥ २८॥

हे तन्वि हे वदनकान्तिजितचन्द्रमण्डले हे प्रियतमे यत्र चतुर्थमष्टमं दशमं तथान्तिमञ्चाक्षरं गुरु चेद्भवति तदा सा प्रियंवदा नाम छन्दो भवति। यथा—भवति या गुणवती प्रियंवदा स्थिरमतिः सहृदया दयार्द्रधीः। मृदुतरप्रकृतिका च साबला जगदिदम्प्रकुरुते वशंवदम्॥ पादान्ते यतिः॥ २८॥

गुरु चतुर्थकसप्तममक्षरं
सदशमं विरतिप्रभवञ्च चेत्।
द्रुतविलम्बितमाह बुधस्तदा
तदथवा ननु सुन्दरि सुन्दरीम्॥ २९॥

ननु भोः सुन्दरि चतुर्थकं सप्तमं दशमं पादान्तस्थितञ्चाक्षरं यदि गुरु स्यात्तदा बुधस्तद् द्रुतविलम्बितं नामच्छन्दः अथवा सुन्दरीं नाम छन्द आह ब्रवीति। यथा—'वदनसौरभलोभपरिभ्रमद्भ्रमरसम्भ्रमसम्भृतशोभया। चलितया विदधे कलमेखलाकलकलोलकलोलदृशान्यया'॥ [ माघः ६।१४ ]॥ 'ग्रथितमौलिरसौ वनमालया तरुपलाशसवर्णतनुच्छदः। तुरगवल्गनचञ्चल-कुण्डलो विरुरुचे रुरुचेष्टितभूमिषु'॥ 'नवपलाशपलाशवनम्पुरः'॥ [ माघः ६।२ ]। 'पृथुकदम्बकदम्बकराजितं' इत्यादि। पादान्ते यतिः॥ २९॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



आदिमं गुरु तृतीयकममले
सप्तमश्च विमलाननकमले।
द्वादशश्च यदि तर्हि नववय-
श्चन्द्रवर्त्म कथयन्ति सुकवयः ॥ ३० ॥

हे अमले निष्पापे हे विमलाननकमले हे नववयः प्रथमं तृतीयं सप्तमं द्वादशश्च यदि गुरु भवति तर्हि सुकवयश्चन्द्रवर्त्म नाम छन्दः कथयन्ति। यथा—'चन्द्रवर्त्मपिहितं घनतिमिरै राजवर्त्म रहितं जनगमनैः। इष्टवर्त्म तदलं कुरु सरसे कुञ्जवर्त्मनि हरिस्तव कुतुकी' [ गङ्गादासः ] ॥ पादान्ते यतिः ॥ ३० ॥

प्रथममगुरुषट्कमथाष्टमं
लघु नवममथो दशमान्तिमम्।
यदि भवति तदा तिलकोज्ज्वले
वरकविनिकरैः कथितोज्ज्वला ॥ ३१ ॥

हे तिलकोज्ज्वले यदि प्रथममादावगुरूणां षट्कं षड् लघूनि भवन्ति। अथानन्तरम् अष्टमं नवमम् अथो दशमस्यान्तिममेकादशम् अक्षरं यदि लघु भवति, तदा वरकविनिकरैः उज्ज्वला नाम च्छन्दः कथिता। यथा—यदि नरपतिः स्वसुतानिव स्थिरमतिरिह पालयति प्रजाः। सुकृतनिरतमन्त्रिमते स्थितो भवति वसुमती च तदोज्ज्वला ॥ पादान्ते यतिः ॥ ३१ ॥

आद्यचतुर्थं यत्र भवेद्गुरुकं
पञ्चमषष्ठश्चापि तथा नवमम्।
द्वादशकश्चापीन्द्रियवह्निभुजैः
स्याद्विरतिश्चेत्सा ललना ललने ॥ ३२ ॥

हे ललने यत्र आद्यम्प्रथमं चतुर्थं पञ्चमं षष्ठं तथा नवमं द्वादशञ्चाक्षरं गुरु स्यात् पञ्चभिः सप्तभिश्च विरतिश्चेत् भवेत् सा तदा ललना नाम छन्दो भवति। यथा—या स्तनगुर्वी मध्यकृशा सुदती वृत्तनितम्बा



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



पाटलपाणितला । आयतनेत्रा फुल्लसरोजमुखी सा ललना स्याच्छ्रीरिव भाग्यवती ॥ ३२ ॥

प्रमदे तृतीयमथ पञ्चमकं
नवमन्तथा विरतिजं गुरु चेत् ।
दशनत्विषा जितनवेन्दुकले
प्रमिताक्षरेति निगदन्ति तदा ॥ ३३ ॥

हे प्रमदे दशनत्विषा दन्तकान्त्या जिता नवा द्वितीयोदिता इन्दुकला यया हे तथाभूते यदि तृतीयं पञ्चमं नवमं विरतिजं पादान्त्यं द्वादशमिति-यावत् अक्षरं गुरु भवति तदा प्रमिताक्षरां नाम छन्दः प्र-निगदन्ति कवय इति शेषः । यथा—'प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता । अवलम्बनाय दिनभर्त्तुरभून्न पतिष्यतः करसहस्रमपि' ॥ [ माघः ९।६ ] ॥ यथा वा—'रुचिराकृतिः कनकसानुमथो परमः पुमानिव पतिम्पतताम् । धृत-सत्पथस्त्रिपथगामभितः स तमारुरोह पुरुहूतसुतः ॥ [ भारविः ६।१ ] ॥ पादान्ते यतिः ॥ ३३ ॥

द्वितीयमयि चेत्सषष्ठमबले-
ऽष्टमं गुरु तथान्तिमञ्च सरले ।
रसर्त्तुविरतिर्यदोद्धतगति-
स्तदा भवति वा जलोद्धतगतिः ॥ ३४ ॥

अयि सरले अबले यदि द्वितीयं षष्ठमष्टमं तथा अन्तिमं द्वादशञ्च गुरु भवति षड्भिः षड्भिश्च यदा विरतिः तदा उद्धतगतिर्नाम जलोद्धतगतिर्नाम वा छन्दो भवति । यथा—'समीरशिशिरः शिरस्सु वसतां सतां जवनिका निकामसु-खिनाम् । विभर्त्ति जनयन्नयं मुदमपामपायधवला बलाहकततिः' ॥ [ माघः ४।५४ ] यथा वा—'स नाकवनितं नितम्बरुचिरं चिरं सुनिनदैर्नदैर्वृतममुम् । मता फणवतोवतो रसपरा परास्तवसुधा सुधाधिवसति' ॥ [ भारविः ५।२७ ] इत्यादि ॥ ३४ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



आद्यचतुर्थं गुरु तरुणि भवेत्
पञ्चमकञ्चाप्ययि सुतनु तथा।
द्वादशकञ्चाप्यथ शरतुरगै-
र्यत्र यतिस्तां कलयति ललनाम् ॥ ३५ ॥

हे तरुणि हे सुतनु शोभनशरीरे आद्यं प्रथमं चतुर्थं पञ्चमं द्वादशञ्चाप्यक्षरं यत्र गुरु भवेत् पञ्चभिः सप्तभिश्च यतिश्चेत्कविस्तां ललनां नाम छन्दः कलयति उद्भावयति। यथा—आ कुचगुर्व्वी मृगशिशुनयना पीननितम्बा मदकरिगमना। किन्नरकण्ठी सुरुचिरदशना सा तव सौख्यं वितरतु ललना ॥ ३५ ॥

ह्रस्वन्तृतीयं सषष्ठाष्टमान्त्यञ्च
यस्मिँस्तथा द्वादशञ्चापि वामोरु।
विद्वान्सदानन्दसन्दोहदात्रीह
वृत्तन्तदाख्याति सारङ्गनामेति ॥ ३६ ॥

हे वामोरु हे सदा सर्व्वस्मिन् काले आनन्दसन्दोहदात्रि यस्मिन् तृतीयं षष्ठम् अष्टमस्यान्त्यं नवमं द्वादशञ्चाक्षरं ह्रस्वं लघु भवति विद्वान् पण्डितस्तत् सारङ्गनाम वृत्तं छन्द आख्याति प्रकथयति। रे स्वान्त किं बालसारङ्गनेत्रासु भावं समाधाय वाधां सदाप्नोषि। क्रीडान्त्वमश्रान्तमालोक्य कालस्य सद्भावमाधत्स्व काष्ठां प्रतिष्ठस्व ॥ पादान्ते यतिः ॥ ३६ ॥

सुन्दरि यद्यस्य वर्णो द्वितीयो हि
धीमति जायेत नूनं लघुस्तर्हि।
पिङ्गलनागेन तद्रामरम्भोरु
शारदमाभाषि धीमन्मनोहारि ॥ ३७ ॥

हे सुन्दरि हे धीमति हे रामरम्भोरु यदि अस्य सारङ्गवृत्तस्य द्वितीयश्च वर्णो नूनं लघुर्जायेत तर्हि पिङ्गलनागेन धीमतां मनोहरणशीलं तद्वृत्तं शारदमाभाषि कथितम्। यथा—सन्ततचिद्घनन्दात्मजस्यापि शारदशुभ्रांशु-सन्दर्शने नाम। पर्व्वणि चेतोऽन्यथावृत्तितामेति वैषयिकाणां नृणां का कथा मित्र ॥ पादान्ते यतिः ॥ ३७ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



द्वितीयकपञ्चममष्टममेव-
मुपान्तगतं गुरु यत्र तदत्र ।
सुकण्ठविलुण्ठितमौक्तिकहार
उशन्ति बुधा अयि मौक्तिकदाम ॥ ३८ ॥

सुकण्ठे शोभनकण्ठे विलुण्ठितः परिवृत्तो मौक्तिकस्य हारो यस्या अयि तथाभूते यत्र द्वितीयं पञ्चमम् अष्टममक्षरमेवमुपान्तगतमुपान्त्यमेकादशञ्चाक्षरम् गुरु भवति बुधाः पण्डिता अत्र जगति तन्मौक्तिकदाम नाम छन्द उशन्ति इच्छन्ति । यथा—'मया तव किञ्चिदकारि कदापि विलासिनि वाम्यमनुस्मर-तापि । तथापि मनस्तव नाश्वसनाय व्रजामि कुतो भवतीमपहाय' ॥ [ वाणीभूषणम् ] ॥ पादान्ते यतिः ॥ ३८ ॥

आद्यचतुर्थमथो गुरु सप्तम-
मक्षरकन्दशमञ्च भवेद्यदि ।
तत्कवयः प्रवदन्ति तदा ननु
मोटकनाम च मोदकनाम च ॥ ३९ ॥

ननु भोः प्रथमञ्चतुर्थं सप्तमं दशमञ्चाक्षरं यदि गुरु भवेत् तदा कवयस्तत् मोटकनाम मोदकनाम वा छन्दः प्रवदन्ति । यथा—हे प्रिय-मोदक दानवमोटक दुष्टविसर्द्दन शिष्टविवर्द्धन । अर्जुनपातन कल्मषशातन यादव माधव केशव मामव ॥ पादान्ते यतिः ॥ ३९ ॥

द्विगुणितषड्गुरु गुणवति
शशधरमुखि यत उदयति ।
तदतिविशदमतिरयि सति
तरलनयनमिह कथयति ॥ ४० ॥

अयि भो गुणवति हे शशधरमुखि हे सति यतो यस्मिन् द्वाभ्यां गुणिताः षड्गुरवः षड्लघवो यत्र तद्द्विगुणितषड्गुरु द्वादशलघु इत्यर्थः उदयति अतिविशदमतिरत्यन्तनिर्म्मलबुद्धिः कविरिह जगति तत्



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तरलनयनं नाम छन्दः कथयति। यथा—अपहर पुरहर मम दरमभिनवकलियुगभयहर। हिमगिरिविहितशयनवर सुकृतसुलभधृतशशधर ॥ पादान्ते यतिः ॥ ४० ॥

इति जगतीकुसुमम् ॥

---

## १३। अतिजगती।

द्वितीयन्तृतीयञ्च चेत्पञ्चमं षष्ठं
तथा सप्तमान्त्यद्वयञ्चाक्षरन्दीर्घम्।
तथैकादशन्द्वादशञ्चान्तिमं शान्ते
तदा कन्दुकं नाम वृत्तम्भवेत्कान्ते ॥ १ ॥

हे शान्ते हे कान्ते यदि द्वितीयं तृतीयं पञ्चमं षष्ठं सप्तमस्यान्त्यद्वयम् अष्टमनवमम् एकादशं द्वादशमन्तिमम्पादान्तस्थितञ्चाक्षरं दीर्घं भवति तदा कन्दुकं नाम वृत्तम्भवेत्। यथा—चिरात्कन्दुकक्रीड़नोत्पन्नघर्म्माम्बुकणस्निग्धमुग्धाननो वर्हिवर्हेण। लसन्मौलिको बालको मेचकः कोऽपि स्फुरेच्चेन्ममान्तस्तु किम्मुक्तिलाभेन ॥ पादान्ते यतिः ॥ १ ॥

द्वितीयकं गुरु सचतुर्थकं यदा
भवेत्तथा नवममुपान्तगादिमम्।
त्रयोदशं यतिरथ चेद्युगग्रहै-
रुचिप्रदाऽस्मृत रुचिराऽथवा तदा ॥ २ ॥

यदा द्वितीयं चतुर्थं नवममुपान्त्यस्य द्वादशस्य पूर्व्वगतम् एकादशमिति यावत् त्रयोदशञ्चाक्षरं गुरु भवेत् चतुर्भिर्नवभिश्च यतिश्चेत्तदा रुचिप्रदा अथवा रुचिरा नाम छन्दः कविभिरस्मृत। यथा—अभून्नृपो विबुधसखः परन्तपः श्रुतान्वितो दशरथ इत्युदाहृतः। गुणैर्वरं भुवनहितच्छलेन यं सनातनः पितरमुपागमत् स्वयम् ॥ [ भट्टिः १।१ ] ॥ २ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



लघुः प्राच्यो यस्यां स्युस्ततः षट् च दीर्घा-
स्ततश्चैको ह्रस्वो द्वौ ततस्तन्वि दीर्घौ।
पुनश्चैको ह्रस्वो द्वौ ततस्तन्वि दीर्घौ
प्रगीता विद्वद्भिश्चञ्चरीकावली सा ॥ ३ ॥

हे तन्वि यस्यां प्राच्यः प्रथमो वर्णो ह्रस्वस्ततः परे षड् वर्णा दीर्घास्ततः पर एको वर्णो ह्रस्वस्ततः परौ द्वौ वर्णौ दीर्घौ पुनश्चैको वर्णो ह्रस्वस्ततः परौ द्वौ वर्णौ दीर्घौ स्युः सा विद्वद्भिश्चञ्चरीकावली नाम छन्दः प्रगीता शब्दिता। यथा—समाकीर्णञ्चञ्चच्चञ्चरीकावलीभिः समीक्ष्याप्येतस्यां कञ्जजालं सरस्याम्। न तादृङ्मे प्रीतिस्त्वन्मुखाम्भोजमेकं द्विदृग्भृङ्गं दृष्ट्वा जायते तन्वि यादृक्॥ पादान्ते यतिः ॥ ३ ॥

अयि गुरु भवेत् षष्ठकं सप्तमञ्चे-
न्नवमदशमं द्वादशन्तद्वदन्त्यम्।
यतिरपि रसैर्व्वाजिभिर्य्यत्र जाता
विधुमुखि तदा चन्द्ररेखा भवेत्सा ॥ ४ ॥

अयि हे विधुमुखि चन्द्रानने चेद्यदि षष्ठं सप्तमं नवमं दशमं द्वादशमन्त्यं त्रयोदशञ्चाक्षरं गुरु भवेत् यत्र षड्भिः सप्तभिश्च यतिरपि जाता तदा सा चन्द्ररेखा नाम छन्दो भवेत। यथा—सहजसुषमा शैशवी कृष्णमूर्त्तिस्त्रिभुवनजनान् ह्लादयामास सद्यः। नवसमुदिता चन्द्ररेखा सुखाय प्रभवति न किं लोचनानां जनानाम् ॥ ४ ॥

अयि गुरु पञ्चममष्टमञ्च जातं
सदशममन्त्ययुगञ्च यत्र तद्वत्।
सुकविमृगेन्द्रकवृन्दवन्दितन्त-
द्भवति मृगेन्द्रमुखं मृगेन्द्रमध्ये ॥ ५ ॥

हे मृगेन्द्रमध्ये यत्र पञ्चमम् अष्टमं दशमं द्वादशं त्रयोदशञ्चाक्षरं गुरु जातं तत्सुकविसिंहसमूहैर्वन्दितं सेवितं मृगेन्द्रमुखं नाम छन्दो भवति।


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यथा—'गुरु भुजवीर्य्यभरं हरिं मदान्धा युधि समुपेत्य न दानवा जिजीवुः। क्षुधितमृगेन्द्रमुखं मृगा उपेत्य क्व नु खलु बिभ्रति जीवनस्य योगम्' [ गङ्गादासः ] ॥ ५ ॥

आदौ चेत्त्रिगुरव एव कान्तवक्त्रे
सच्छीलेऽष्टमदशमौ तथैव जातौ।
द्वावन्त्यावपि विरतिर्गुणैश्च दिग्भिः
स्याद्यत्तोत्पलमिति तत्प्रहर्षिणी वा ॥ ६ ॥

हे कान्तवक्त्रे हे सच्छीले सत्स्वभावे चेद्यदि आदौ प्रथमं त्रयो गुरव एव जाता अष्टमदशमौ अन्त्यौ द्वावपि द्वादशत्रयोदशौ च तथैव गुरू एव जातौ त्रिभिर्दशभिश्च यत्र विरतिः स्यात्तदा तत् उत्पलं नाम अथवा प्रहर्षिणी नाम छन्दो भवेत्। यथा—त्वं ब्रह्मा पशुपतिरर्य्यमा विधाता धाता त्वं त्रिदशपतिस्समीरणोऽग्निः। तोयेशो धनपतिरन्तकस्त्वमेको भिन्नार्थैर्जगदपि पासि शक्तिभेदैः ॥ ६ ॥

यस्यां षष्ठं सप्तममेवं दशमं स्यात्
ह्रस्वन्तद्वद्व्याक्षरमेकादशकञ्चेत्।
वेदै रन्ध्रैर्यत्र विरामो ब्रुवते ताम्
मायां यद्वा धीरवरा मत्तमयूरम् ॥ ७ ॥

यस्यां षष्ठं सप्तमं दशममेकादशञ्चाक्षरं ह्रस्वम्भवति चतुर्भिर्नवभिश्च विरामश्चेत्तदा धीरवरास्ताम्मायां नाम अथवा मत्तमयूरं नाम छन्दो ब्रुवते। यथा—'व्यूढोरस्कः सिंहसमानानतमध्यः पीनस्कन्धो मांसलहस्तायतबाहुः। कम्बुग्रीवः स्निग्धशरीरस्तनुरोमा भुङ्क्ते राज्यं मत्तमयूराकृतिनेत्रः' ॥ [ हलायुधः ] ॥ 'हा तातेति क्रन्दितमाकर्ण्य विषण्णस्तस्यान्विष्यन् वेतसगूढं प्रभवं सः। शल्यप्रोतं प्रेक्ष्य सकुम्भम्मुनिपुत्रं तापादन्तः शल्य इवासीत्क्षितिपोऽपि' ॥ [ रघु ९।७५ ] ॥ 'दृष्ट्वा दृश्यान्याचरणीयानि विधाय प्रेक्षाकारी याति पदं मुक्तमपायैः। सम्यग्दृष्टिस्तस्य परं पश्यति यस्त्वां यश्चोपास्ते साधु विधेयं स विधत्ते' ॥ [ भारविः १८।२८ ] ॥ इत्यादि ॥ ७ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यदि तोटकपादपरो गुरुरेकः
समुदेत्यरविन्दविनिन्दकवक्त्रे ।
नवपल्लवपाटलिताधरविम्बे
ननु तारकनामकमाह तदा तत् ॥ ८ ॥

हे अरविन्दविनिन्दकवक्त्रे पद्मसदृशवदने नवपल्लवमिव किसलयसदृशं पाटलितं रक्तमधरविम्बं यस्यास्तथाभूते यदि तोटकवृत्तस्य पादात्पर एको गुरुः समुदेति तदा तारकनामकं छन्द आह वक्ति कविरिति शेषः । यथा—'अतिभारतरं हृदि चन्दनपङ्कं मनुते सरसी जवनं विषशङ्कम् । तव दुस्तरतारवियोगपयोधेर्नहि पारमसौ भविता परमाधेः' ॥ [ वाणीभूषणम् ] ॥ ८ ॥

प्रमिताक्षरानुचरणान्तिमवर्णात्
परमेकमेव गुरु यर्हि विधत्ते ।
कलहंसगामिनि तदा कलहंसो
ननु नन्दिनीति कुटजेत्यथवा स्यात् ॥ ९ ॥

हे कलहंसगामिनि प्रमिताक्षरायाश्छन्दसः अनुचरणं प्रतिपादमन्तिमाक्षरात् परमेकमेव गुरु यर्हि विधत्ते स्थापयति तदा कलहंसो नाम नन्दिनीति नन्दिनी नाम अथवा कुटजेति कुटजा नाम छन्दो भवेत् । यथा—'यमुनाविहारकुतुके कलहंसो व्रजकामिनीकमलिनीकृतकेलिः । जनचित्तहारिकलकण्ठनिनादः प्रमदं तनोतु तव नन्दतनूजः' ॥ [ गङ्गादासः ] ॥ यथा वा—'कुटजानि वीक्ष्य शिखिभिः शिखरीन्द्रं समयावनौ घनमदभ्रमराणि । गगनञ्च गीतनिनदस्य गिरोच्चैः समया वनौघनमदभ्रमराणि' ॥ [माघः ६।७३ ] ॥ पादान्ते यतिः ॥ ९ ॥

हरिपादपद्मविगलन्मकरन्द-
प्रतिधोरणिग्रहणचातककान्ते ।
कलहंसमेव कवयः किल केचि-
न्ननु सिंहनाद इति सङ्कथयन्ते ॥ १० ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे हरिपादपद्माद्विगलतो मकरन्दस्य प्रतिधोरणि धाराया धाराया ग्रहणे कान्ता इव कान्ता चातकस्य कान्ते चातकि केचित्कवयः कलहंसं सिंहनाद इति सिंहनादच्छन्दः कथयन्ते किल ॥ १० ॥

नवममरुणमुखि कान्त उपान्त्यं
प्रभवति गुरु सति यत्र तथान्त्यम्।
जगति सुविदितविपश्चिदचण्डि
प्रकटयति सुदति तां ननु चण्डीम् ॥ ११ ॥

हे अरुणमुखि हे कान्ते हे सति हे अचण्डि कोपरहिते हे सुदति शोभनदशने यत्र नवममुपान्त्यञ्चाक्षरं तथा पादान्तस्थञ्चाक्षरं गुरु प्रभवति तां जगति सुप्रख्यातकविश्चण्डीं नाम छन्दः प्रकटयति व्यनक्ति। यथा— 'जयति दितिजरिपुताण्डवलीलाकुपितकवलकरकालियमौलौ। चरणकमलयुग-चापलचण्डी पदनखरुचिजितभोगिमणिश्रीः' ॥ [ गङ्गादासः ] ॥ ११ ॥

द्वितीयमथ षष्ठं यत्र ननु दीर्घं
ससप्तममथो कान्तेऽष्टममपि स्यात्।
ततोऽन्तिमयुगं तद्वत्सुमुखि तज्ज्ञै-
रुपस्थितमुरुप्रज्ञैः कविभिरुक्तम् ॥ १२ ॥

हे कान्ते हे सुमुखि यत्र द्वितीयं षष्ठं सप्तममष्टममन्तिमयुगं द्वादश-त्रयोदशञ्चाक्षरं गुरु स्यादुरुप्रज्ञैर्विपुलमतिभिर्ज्ञैर्विद्वद्भिः कविभिस्तदुपस्थितं नाम छन्द उक्तम्। यथा—उपस्थितवतः प्राज्ञानतिजड़ान्वा यथास्वमतिथीन् काले विबुधबुद्ध्या। प्रपूजयति यः स्वर्गच्छति गृही सोऽन्यथान्धतमसाकीर्णे पतति गर्त्ते ॥ पादान्ते यतिः ॥ १२ ॥

प्रथममरुणकरचरण एका-
दश लघव उत तदनु गुरू द्वौ।
विकसितशातदलमुखि यतः सा
ननु सति मतिमति भवति गौरी ॥ १३ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे अरुणकरचरणे हे विकसितशतदलमुखि हे सति हे मतिमति यतो यस्यां प्रथममादौ एकादश लघुवर्णा उत एवं तदनु द्वौ गुरुवर्णौ प्रयुज्यन्ते सा गौरी नाम छन्दो भवति। यथा—'सकलभुवनजगणनतपादा निजपद-भजनशमितविषादा। विजितसरसिरुहनयनपद्मा भरतुसकलमिह जगति गौरी'॥ [ हलायुधः ]॥ पादान्ते यतिः॥ १३॥

यदि लघवः प्रिये चत्वारः प्राक्तना-
स्तदनु भवन्ति षष्ठस्तद्वद्द्वादशः।
कमलदलाक्षि विद्युन्मालाभासुरे
कुटजगतिस्तदा विद्वद्भिर्भाष्यते॥ १४॥

हे प्रिये हे कमलदलाक्षि हे विद्युन्मालेव भासुरे दीप्तिशीले भासृ दीप्तौ धातुः "भञ्जभासमिदो घुरजि" [ पां ३।२।१६१ ]ति घुरच्। यदि प्राक्तनाः प्रथमाश्चत्वारो वर्णा लघवस्तदनु षष्ठो द्वादशश्च वर्णो लघुर्भवति तदा विद्वद्भिः कुटजगतिर्नाम छन्दो भाष्यते कथ्यते। यथा—'कमलगतिर्यथा भृङ्गेभ्यो रोचते कुटजगतिर्भृशं जातक्षुद्भृङ्गोऽपि नो। उ हरिगतिस्तथा सद्भ्योऽभिप्रीयते विषयगतिः पुनर्भ्रातर्नेति ध्रुवम्॥ पादान्ते यतिः॥ १४॥

प्रथममगुरवः षड्भवन्ति प्रिये
तदनु सनवमो द्वादशस्तादृशः।
तुरगरसयतिर्य्यत्र जायेत तां
कुटिलगतिमिह प्राह वा विद्युतम्॥ १५॥

हे प्रिये प्रथममादौ यत्र षट् अगुरवः लघवो भवन्ति तदनु सनवमः द्वादशश्च वर्णस्तादृशो लघुर्भवेत् सप्तभिः षड्भिश्च यतिः स्यात्ताम् अत्र जगति कुटिलगतिं विद्युतं वा नाम छन्द आह ब्रवीति। यथा—'इह दुरधिगमैः किञ्चिदेवागमैः सततमसुतरं वर्णयन्त्यन्तरम्। अमुमतिविपिनं वेद दिग्व्यापिनं पुरुषमिव परं पद्मयोनिः परम्'॥ [ भारविः ५।१८ ]॥ यथा वा—'अधर-किशलये कान्तदन्तक्षते हरिणशिशुदृशां नृत्यति भ्रूयुगम्। ध्रुवमिदमुचितं यद्विपत्तौ सतामतिकुटिलगतेः स्यान्महानुत्सवः'॥ [ हलायुधः ]॥ १५॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उदितनिजयशश्चन्द्रिकाबोधितो-
भयकुलकुमुदे सैव पूर्व्वोदिता ।
सुकविभिरुदिता चन्द्रिका वा क्षमा
विरलतरबुधैरुत्पलिन्यप्यसौ ॥ १६ ॥

अस्या नामान्तरमाह उदितेति । उदिताभिः स्वीययशोरूपचन्द्रिकाभिर्बोधितं विकाशीकृतमुभयकुलकुमुदं स्वामिकुलपितृकुलरूपकैरवं यया हे तथाभूते सुकविभिः पूर्व्वोक्ता सा एव कुटिलगतिरेव चन्द्रिका क्षमा वा नाम च्छन्द उदिता । अल्पसंख्यकबुधैरसौ कुटिलगतिरुत्पलिनी अपि नाम च्छन्द उदिता ॥ १६ ॥

द्वितीयतुर्य्यं गुरु सपञ्चमं यदा
चकोरनेत्रे नवममक्षरं यतः ।
भवेत्तथैकादशमथ त्रयोदशम्
प्रिये तदा सा भवति मञ्जुहासिनी ॥ १७ ॥

हे चकोरनेत्रे प्रिये यतः यस्यां द्वितीयतुर्य्यं पञ्चमं नवममेकादशं त्रयोदशञ्चाक्षरं यदा गुरु स्यात्तदा सा मञ्जुहासिनी नामच्छन्दो भवति । यथा—वलाहकोऽसि त्वमवनौ हरेऽपरः कथं न तापं हरसि नः स्मरोत्थितम् । इदं वदन्ती सपदि मञ्जुहासिनी करं चकर्षास्य किल कापि गोपिका ॥ पादान्ते यतिः ॥ १७ ॥

सतृतीयपञ्चममजिह्ममानसे
नवमन्तथैव दशमान्त्यमन्तिमम् ।
गुरु यर्हि तर्हि कनकप्रभां बुधा
अथवा ब्रुवन्ति ननु मञ्जुभाषिणीम् ॥ १८ ॥

हे अजिह्ममानसे अकुटिलचित्ते सरलचित्त इति यावत् तृतीयसहितं पञ्चमं नवमं दशमस्यान्त्यमेकादशमन्तिमं त्रयोदशञ्चाक्षरं यर्हि यदा गुरु भवेत् तर्हि तदा बुधाः कवयः कनकप्रभां नाम अथवा मञ्जुभाषिणीं नाम छन्दो



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ब्रुवन्ति। यथा—अथ कोऽयमिन्द्रमणिमेचकच्छविर्ध्वनिनैव दत्तपुलकं करोति माम्। नवनीलनीरधरधीरगर्जितक्षणबद्धकुड्मलकदम्बडम्बरम्॥ यथा वा—न वरीभरीति कवरीभरे स्रजो न चरीकरीति मृगनाभिचित्रकम्। विजरीहरीति न पुरेव मत्पुरो विवरीवरीति न विप्रियं प्रिया॥ पादान्ते यतिः॥ १८॥

इयमेव कैश्चन बुधैः सुनन्दिनी
मृदुमञ्जुभाषिणि सदा सुनन्दिनि।
कनकप्रभे गुरुजनप्रबोधिते
ननु तन्वि कैश्चिदुदिता प्रबोधिता॥ १९॥

अस्या एव नामान्तरमाह—इयमिति। हे मृदुमञ्जुभाषिणि हे सदासुनन्दिनि शश्वज्जीवनानन्दसम्पादयित्रि हे कनकप्रभे हे गुरुजनैः स्वामिश्वशुरादिभिः प्रबोधिते उपदिष्टे तन्वि कृशाङ्गि इयमेव कनकप्रभैव कैश्चन बुधैः सुनन्दिनी नाम प्रबोधिता वा नाम छन्द उदिता॥ १९॥

यस्यां गुरु प्रथममथ द्वितीयकं
तुर्य्यस्थितं नवमकमक्षरम्प्रिये।
एकादशम्भवति तथान्तिमं यति-
र्वेदग्रहैः प्रभवति सा प्रभावती॥ २०॥

हे प्रिये यस्यां प्रथममथ द्वितीयं चतुर्थं नवममेकादशं त्रयोदशञ्चाक्षरं गुरु भवति चतुर्भिर्नवभिश्च यतिरुत्पद्यते सा प्रभावती नाम छन्दो भवति। यथा—'यस्याम्प्रिये प्रथमकमक्षरद्वयं तुर्य्यन्तथा गुरु नवमन्दशान्तिमम्। सान्त्यं भवेद्यतिरपि चेद्युगग्रहैः सा लक्ष्यतामभृतरुते प्रभावती'॥ [ श्रुतबोधः ]॥ २०॥

भुजङ्गप्रयातस्य वृत्तस्य पादस्य
यदान्तेऽधिको ह्रस्व एको भवेत्तस्य।
सदा कोविदानन्दसन्दोहकन्दात्र
तदोदीरितस्तन्वि कन्दः शिवामत्र॥ २१॥

हे सदा शश्वत् कोविदानां कवीनामानन्दसन्दोहस्य हर्षसमूहस्य कन्द मूल हे तन्वि हे शिवस्य कल्याणस्यामत्र भाजन कन्दामत्रशब्दयोरजहल्लिङ्ग-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तया स्त्रीलिङ्गविशेषणत्वेऽपि न स्त्रीलिङ्गत्वम्। अत्र जगति तस्य पूर्वोक्तस्य भुजङ्गप्रयातस्य वृत्तस्य पादस्य चरणस्यान्तेऽवसाने यदा एको ह्रस्ववर्णोऽधिको भवेत् तदा कन्दो नाम छन्द उदीरितः। यथा—'हृतन्ते मनो नन्द-गोपालबालेन नवीनाम्बुवाहावलीचारुदेहेन। सुधावीचिसम्बाधबिम्बाधराग्रेण स्फुरद्बर्हशोभालसत्कान्तिपूरेण'॥ [ वाणीभूषणम् ]॥ पादान्ते यतिः॥ २१॥

सद्गुणमयि गुरुरादिगतस्तत
इन्दुविशदवदनेऽष्टमकोऽपि च।
स्याद्यदि दशमपरश्च तदृषिभि-
रावलिपरमयि पङ्क्मभाष्यत॥ २२॥

हे सद्गुणवति प्रशस्तगुणमयि हे इन्दुनिर्म्मलमुखि यदि आदिगतः प्रथमोऽष्टमो दशमपर एकादशश्च वर्णो यदि गुरुर्भवेत्तर्हि ऋषिभिः पिङ्गला-दिभिरावलिः परा उत्तरा यस्य तादृशं पङ्क पङ्कावलिरित्यर्थश्छन्दः अभाष्यता-कथ्यत। यथा—'शारदविशदनिशामपि निन्दति सम्प्रति हृदयभिदामनुविन्दति। मन्मथविशिखभयेन निमीलति माधव तव विरहेण विषीदति'॥ [ वाणी-भूषणम् ]॥ पादान्ते यतिः॥ २२॥

इत्यतिजगतीकुसुमम्॥

---

## १४। शक्वरी।

यत्र प्राच्याः पञ्च शशिरुचे दीर्घा वर्णा
ह्रस्वाश्चत्वारश्च तदनु दृश्यन्ते कान्ते।
भूयोऽप्यन्ते पञ्च च गुरवो निक्षिप्यन्ते
छन्दोविद्भिः सद्भिरभिहिता वासन्ती सा॥ १॥

अथ शक्वरीं लक्षयति यत्रेत्यादिभिः। हे शशिरुचे चन्द्रद्युते कान्ते मनोरमे यत्र यस्यां प्राच्या आद्याः पञ्च वर्णाः प्रथमद्वितीयतृतीयचतुर्थपञ्चमा



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



दीर्घा दृश्यन्ते तत्पश्चाच्चत्वारो वर्णाः षष्ठसप्तमाष्टमनवमाश्च ह्रस्वा दृश्यन्ते भूयोऽपि पुनरपि अन्ते शेषे पञ्च वर्णा गुरवश्च निक्षिप्यन्ते न्यस्यन्ते छन्दोविद्भिः सद्भिः सा वासन्ती नाम छन्दः कथिता। यथा—'भ्राम्यद्भृङ्गीनिर्भरमधुरालापोद्गीतैः श्रीखण्डाद्रेरद्भुतपवनैर्मन्दान्दोला। लीलालोला पल्लवविलसद्धस्तोल्लासैः कंसारातौ नृत्यति सदृशी वासन्तीयम्' ॥ [ गङ्गादासः ] ॥ पादान्ते यतिः ॥ १ ॥

आद्यं द्वितीयकचतुर्थमथाष्टमञ्चा-
प्येकादशञ्च गुरु यत्र तथान्त्ययुग्मम्।
योषिद्भिरिषेवितपवित्रचरित्रचित्रे
सा स्याद्वसन्ततिलका मुनिपिङ्गलोक्ता ॥ २ ॥

आद्यमिति। हे योषिद्भिः स्त्रीभिर्निषेवितं पवित्रं शुद्धं यत् चरित्रं तेन चित्रे, अद्भुते यत्र यस्याम् आद्यम्प्रथमं द्वितीयं चतुर्थमष्टममेकादशं तथा अन्त्ययुग्मं त्रयोदशञ्चतुर्दशञ्चाक्षरं गुरु स्यात् मुनिना पिङ्गलाचार्य्येण उक्ता अभिहिता सा वसन्ततिलका नाम छन्दो भवति। यथा—'उद्धर्षिणी जनदृशां स्तनभारगुर्वी नीलोत्पलद्युतिमलिम्लुचलोचना च। सिंहोन्नतत्रिकतटी कुटिलालकान्ता कान्ता वसन्ततिलका नृपवल्लभासौ' ॥ [ हलायुधः ] ॥ पादान्ते यतिः ॥ २ ॥

सैवात्र कुण्डलविमण्डितगण्डभागे
सिंहोन्नतेत्यभिहिता मुनिकाश्यपेन।
उद्धर्षिणीत्यभिमता मुनिसैतवेन
प्रोक्तं वसन्ततिलकं किल कालिदासैः ॥ ३ ॥

नामान्तराण्याह सैवेति। हे कुण्डलविमण्डितगण्डभागे अत्र जगति सैव वसन्ततिलकैव मुनिना काश्यपेन सिंहोन्नता नामाभिहिता सैतवेन मुनिना उद्धर्षिणीति नामाभिमता कालिदासैरादरार्थे बहुवचनं वसन्ततिलकं नाम किल प्रोक्तम् ॥ ३ ॥





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सौजन्यजन्ययशसा जगतीषु धन्ये
सिंहोद्धतां विशददन्ति तथाहुरन्ये ।
उद्धर्षिणीमपि च तामितरे पठन्ति
तामेव केचिदपरे सुरसां वदन्ति ॥ ४ ॥

हे सौजन्येन सुजनतया जन्येन उत्पादितेन यशसा कीर्त्या जगतीषु पृथिवीषु धन्ये हे विशददन्ति अन्ये धीरास्तां वसन्ततिलकां सिंहोद्धतां नामाहुः । अपरे तु तामेव उद्धर्षिणीं नाम पठन्ति । अपरे केचित्तामेव सुरसां नाम वदन्ति ॥ ४ ॥

यत्कामरूपचलितश्रुतबोधमात्रे
नेत्राङ्कुशैर्वशितकामसमतङ्गजेन्द्रे ।
इत्येव पाठ उपलभ्यत एव सुभ्रू-
र्नाष्टाभिरिन्दुवदने विरतिश्च षड्भिः ॥ ५ ॥

हे सुभ्रूः यत् यतः कामरूपदेशप्रचलितश्रुतबोधमात्रे नेत्राङ्कुशैर्वशितकामसमतङ्गजेन्द्रे इत्येव पाठस्तृतीयचरणे उपलभ्यते एव न पुनः अष्टाभिरिन्दुवदने विरतिश्च षड्भिरिति ॥ ५ ॥

तस्मान्मुनेर्मतविरोधितया च कान्ते
केदारभट्टमुखपण्डितमण्डलानाम् ।
छन्दस्स्वनुक्तिवशतश्च यतिः कदापि
चान्तर्वसन्ततिलकाचरणस्य नास्ति ॥ ६ ॥

तस्मादिति । तस्मात्कामरूपदेशीयश्रुतबोधग्रन्थेषु तादृशभिन्नपाठदर्शनात् मुनेः पिङ्गलनागस्य मतविरोधितया च केदारभट्टादिपण्डितसमूहानां छन्दोग्रन्थेषु अनुक्तिवशाच्च वसन्ततिलकाचरणस्यान्तर्मध्ये कदापि यतिर्नास्ति न विद्यते पादान्त एव यतिर्भवति । तथा सति पादान्ते यतिरिति हलायुधपादोक्तं साधु सङ्गच्छते कालिदासपादादिमहाकविप्रयोगव्यूहश्च साधु सङ्गच्छते । यथा—"किं शीकरैः क्लमविमर्दिभिरार्द्रवातम्" [ शकु० ३।१९ ], "काशांशुका विकचपद्ममनोज्ञवक्त्रा" [ ऋतु० ३।१ ], "सोन्मादहंसरवनूपुरनाद-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



रस्या" [ ऋतु० ३।१ ], "व्यक्तोदितस्मितमयूखविभासितोष्ठः" [भारविः २।५६ ], "लक्ष्मीमुवाह सकलस्य शशाङ्कमूर्त्तेः" [ भारविः २।५६ ], "तूणीरपट्टपरिणद्ध-भुजान्तरालमापार्ष्णिलम्बिशिखिबर्हकलापधारि", "आपातदुष्प्रसहमाविरभूदनीकम्", "दिक्सुन्दरीवदनचन्दनबिन्दुरिन्दुः", "एतेषु मद्वचनकैरवकोरकेषु" "युष्मत् प्रसादशरदिन्दुरुचः स्फुरन्तु", "दर्भोदराङ्कुरधियः प्रसाद्य", "विज्ञापये यदहमत्र मनो निधत्त" ॥ ६ ॥

यस्यामाद्याः पञ्च किल गुरवो जायन्ते
वर्णाः पञ्च स्युस्तदनु लघवश्चेत्कान्ते ।
चत्वारोऽप्यन्त्या गुरव उत सा स्त्रीरत्न
प्रत्नैश्छन्दोदृश्वभिरभिहिता वासन्ती ॥ ७ ॥

वासन्तीभेदमाह यस्यामिति । हे कान्ते हे स्त्रीरत्न यस्याम् आद्याः पञ्च वर्णाः प्रथमद्वितीयतृतीयचतुर्थपञ्चमा यदि गुरवो जायन्ते तदनु तत्पश्चात्पञ्च वर्णाः सप्तमाष्टमनवमदशमा यदि लघवो जायन्ते अन्त्याश्चत्वारोऽपि एकादशद्वादशत्रयोदशचतुर्दशा अपि गुरवो जायन्ते चेत्तदा प्रत्नैः पुरातनैश्छन्दोदर्शिभिः सा वासन्ती नाम छन्दोऽभिहिता । पादान्ते यतिः । यथा—
वासन्तीवल्लीं विकचकुसुमां लीनालिं वासन्तीं ज्यौत्स्नीं रजनिमपि पश्यन्ती [ सा ] । साबाधा राधा यदुमणिधिया सोल्लासं कुञ्जान्तर्लीनं घनतिमिरमेवाश्लिष्यत् ॥ ७ ॥

आदावन्तेऽपि च शशिमुखि चत्वारश्चे-
द्दीर्घा मध्ये ननु पुनरपि षट् स्युर्ह्रस्वाः ।
वेदस्वादद्द्रुहिणवदनविच्छेदश्चे-
द्यस्यान्तर्हि स्मृतिमति कुटिलाख्या सा स्यात् ॥ ८ ॥

हे शशिमुखि हे स्मृतिमति मेधाविनि यस्यामादावन्तेऽपि च चत्वारो वर्णा दीर्घा मध्ये पुनरपि षड् वर्णा ह्रस्वा यदि स्युश्चतुर्भिः षड्भिर्द्रुहिणो ब्रह्मा तस्य वदनैर्मुखैश्चतुर्भिश्च यदि छेदो विरामो भवेत् तदा सा कुटिला



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



नाम छन्दो भवेत्। कुटिल इति वा। यथा—रूपै रम्याप्यनवमकुल-सम्भूतापि त्यक्तस्वार्थाप्यवगतनयमर्य्यादापि। शुद्धाचाराप्यनुगतजनवात्सल्यापि स्त्री न स्वर्ग्या कुटिलहृदयवृत्तिः सा चेत्॥ ८॥

चत्वारश्चेत् प्रथममलघवो यत्र स्युः
कान्ते भूयस्तदनु दशमतश्चत्वारः।
वेदैर्दिग्भिर्य्यतिरपि यदि सञ्जाता ताम्
मध्यक्षामे ननु निशमय मध्यक्षामाम्॥ ६॥

तस्या एव यतिभेदेन नामान्तरमाह—चत्वार इति। हे मध्यक्षामे क्षीणमध्यदेहे कान्ते यत्र प्रथमम् आदौ चत्वारो वर्णाः प्रथमद्वितीयतृतीय-चतुर्था अलघवो गुरवः स्युस्तदनु भूयः पुनरपि दशमादक्षरात् परे चत्वारो वर्णा गुरवः स्युश्चतुर्भिर्दशभिर्यदि यतिरपि सञ्जाता तदा तां मध्यक्षामां नाम छन्दो निशमय शृणु॥ यथा—नीतोच्छ्रायं मुहुरशिशिररश्मेरस्रैरानी-लाभैर्विरचितपरभागा रत्नैः। ज्योत्स्नाशङ्कामिह वितरति हंसश्येनीमध्यप्यह्नः स्फटिकरजतभित्तिच्छाया॥ ६॥

पञ्चादौ यस्याः शशिमुखि गुरवो वर्णाः
कान्ते सत्स्वान्ते तदनु च लघवः षट् स्युः।
भूयोऽन्ते दीर्घास्त्रय इषुनवविश्रामा-
सम्बाधाख्या सा सुकविभिरिह सङ्गीता॥ १०॥

हे शशिमुखि हे सत्स्वान्ते प्रशस्तहृदये कान्ते यस्या आदौ पञ्च वर्णा गुरवः स्युस्तदनु षड्वर्णा लघवः स्युः भूयः पुनरप्यन्ते त्रयो वर्णा दीर्घाः स्युः पञ्चसु नवसु च विश्रामो भवति इह जगति सा असम्बाधा नाम छन्दः सङ्गीता कीर्त्तिता। यथा—'भङ्क्त्वा दुर्गाणि द्रुमवनमखिलं छित्त्वा हत्वा तत्सैन्यं करितुरगबलं हत्वा। येनासम्बाधा स्थितिरजनि विपक्षाणां सर्व्वोर्वीनाथः स जयति नृपतिर्मुञ्जः॥ [ हलायुधः ]॥ १०॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



आदौ स्युर्गुरवो यत्र त्रयः शशिकान्ते
कान्ते पञ्चमतो वर्णास्त्रयो यदि तद्वत् ।
भुग्नभ्रूर्दशमश्चोपान्तगश्च तथान्त्यो
व्याख्याता कविभिः सा कोमलाङ्गययि लक्ष्मीः ॥ ११ ॥

आदाविति । अयि शशिकान्ते हे भुग्नभ्रूः कुटिलभ्रूः हे कोमलाङ्गि कान्ते यत्रादौ त्रयो वर्णा गुरवः स्युर्यदि पञ्चमाद् अक्षरात् परे त्रयो वर्णास्तद्वत् गुरवः स्युस्तथा दशम उपान्त्यस्त्रयोदशः अन्त्यश्चतुर्दशश्च वर्णस्तथा गुरुः स्यात्कविभिः सा लक्ष्मीर्नाम छन्दो व्याख्याता प्रोक्ता । यथा—यो गोब्राह्मणशिष्टानाथबालकवृद्धान् भृत्यानत्यनुरक्तान् स्वाः प्रजा अपि तद्वत् । सम्यक् पालयते चेच्चञ्चलामपि लक्ष्मीं हस्तेकृत्य स राजा मोदते भुवि शश्वत् ॥ ११ ॥

प्रथममगुरवः षण्णिशाधीशवक्त्रे
स्युरथ सनवमो द्वादशश्चापि वर्णः ।
मुनितुरगयतिर्यत्र नान्दीमुखि स्या-
द्भवति सुनयने तन्वि नान्दीमुखी सा ॥ १२ ॥

हे निशाधीशवक्त्रे चन्द्रानने हे नान्दीमुखि स्तुतिमुखि हे सुनयने यदि प्रथममादौ षड् वर्णाः प्रथमद्वितीयतृतीयचतुर्थपञ्चमषष्ठा नवमसहितो द्वादशश्चापि अगुरवो लघवो भवन्ति । यत्र सप्तभिः सप्तभिर्यतिश्च भवेत्तदा सा नान्दीमुखी नाम छन्दो भवति । यथा—'सरसखगकुलालापनान्दीमुखीयं लहरिभुजलता चारुफेनस्मितश्रीः । मुरहर कलयासक्तिमासाद्य किन्ते प्रमुदितहृदया भानुजा नृत्यतीह' ॥ [ गङ्गादासः ] ॥ १२ ॥

सुललितवचने सप्तममष्टमञ्चेद्-
गुरु सुमुखि तथैकादशमन्त्ययुग्मम् ।
मुनिभिरथ हयर्यत्र भवेद्विरामः
प्रवरकविगणैः सात्र नदी प्रयुक्ता ॥ १३ ॥

हे सुललितवचने हे सुमुखि यत्र सप्तममष्टममेकादशमन्त्ययुग्मं त्रयोदशचतुर्दशञ्चाक्षरं यदि गुरु भवति अथ यदि सप्तभिः सप्तभिर्विरामो भवेत्



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तदा प्रवरकविगणैरिह जगति सा नदी नाम छन्दः प्रयुक्ता। यथा—जननमलभत प्रांशुशिलोच्चयाद्यन्मनुजखगमृगान् प्रीणयति स्वनीरैः। गमयति च दिवं पातकिनोऽन्वहं सा तदिह सुरनदी प्राप पतिं महेशम् ॥ १३ ॥

अयि गुरु पञ्चमेन सह सप्तमञ्चे-
दशमपरं तथान्त्ययुगलञ्च यस्याम्।
वसुभिरथो रसैश्च विरतिर्यदा सा
वरकविभिस्तदा तु कथिता कुमारी ॥ १४ ॥

अयि भो यस्याम्पञ्चमेन सहितं सप्तमं दशमात्परमेकादशन्तथा अन्त्ययुगलं त्रयोदशं चतुर्दशञ्चाक्षरं यदा गुरु स्यात् अथो [ वसुभिः ] अष्टाभी रसैः षड्भिश्च यदा विरतिस्तदा वरकविभिः सा कुमारी नाम छन्दः कथिता। यथा—शरदि तथा वसन्त उदिते कुमारी-कुलमगजार्च्चनस्य समयेऽबुदेशम्। ननु दिवसत्रयं हि लभते सपर्य्यां परमिह सर्व्वदैव किल नीलशैले ॥ १४ ॥

गुरु यस्मिन् कमलमुखि तृतीयतुर्य्यं
तत एकादशमपि पुनरन्त्ययुग्मम्।
यदि वेदैर्दशभिरपि भवेद्विरामः
कवयस्तत्कुटिलमिति तदा वदन्ति ॥ १५ ॥

हे कमलमुखि यस्मिन् तृतीयचतुर्थं तत एकादशमन्त्यद्वयं त्रयोदशचतुर्दशाक्षरं गुरु भवेत् चतुर्भिर्दशभिरपि यदि विरामो भवेत् तदा कवयस्तत्कुटिलमिति कुटिलं नाम छन्दो वदन्ति। यथा—इह योऽतिप्रियमधुरवचोभिरार्य्यान् मृदुगीतैर्मृगयुरिव विमोह्य। छलनायामतिनिपुणमतिर्निहन्ति स्वसुखेच्छुः प्रियमपि कुटिलं तमुज्झेत् ॥ १५ ॥

तुर्य्यम्पञ्चमकञ्चेद्ध्रस्वं स्वर्णसवर्णे
यत्रैकादशमेवम्भद्रे द्वादशकञ्च।
विश्रामश्च मुनिभ्यां सञ्जायेत तदा स-
च्छास्त्रालोचनलोले लोला स्याल्ललने सा ॥ १६ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे स्वर्णसवर्णे हे भद्रे हे सच्छास्त्राणामालोचने लोले सतृष्णे हे ललने यत्र चतुर्थं पञ्चममेकादशं द्वादशञ्चाक्षरं लघु स्यात्सप्तभिः सप्तभिर्विश्रामश्च भवेत्तर्हि सा लोला नामच्छन्दो भवेत्। यथा—'मुग्धे यौवनलक्ष्मीर्विद्युद्वि-भ्रमलोला त्रैलोक्याद्भुतरूपो गोविन्दोऽतिदुरापः तद्वृन्दावनकुञ्जे गुञ्जद्भृङ्ग सनाथे श्रीनाथेन समेता स्वच्छन्दं कुरु केलिम्' ॥ [ गङ्गादासः ] ॥ १६ ॥

आदिगतपञ्चममुदेति नवमञ्च
द्वादशपरस्थितचतुर्दशमपि स्यात्।
यत्र गुरु सेन्दुवदनाथ वरसुन्द-
यत्र सदखण्डविधुमण्डलरुचे वा ॥ १७ ॥

हे प्रशस्तसम्पूर्णचन्द्रमण्डलप्रभे यत्राद्यं पञ्चमं नवमं द्वादशस्य परस्थित-मेकादशं चतुर्दशञ्चाक्षरं गुरु स्यात् अत्र जगति सा इन्दुवसना नाम वर-सुन्दरी नाम वा छन्दो भवति। यथा—स्वादुशिशिरोज्ज्वलसुगन्धिजलपूर्णं वीचिचयचञ्चलविचित्रशतपत्त्रम्। हंसकलकूजितमनोहरतटान्तं पश्य वरसुन्दरि सरोवरमुदारम् ॥ पादान्ते यतिः ॥ १७ ॥

अलिकतिलकजितनवदिनकान्ते
यदि सकलमगुरु गुरुयुगमन्ते।
प्रभवति वसुरसयतिरतिचित्रं
त[त] ऋषिभिरुदितमिह सुपवित्रम् ॥ १८ ॥

अलिकतिलकेन ललाटतिलकेन जितः नवदिनकान्तः प्रभातसूर्य्यो यया हे तथाभूते यदि सकलमक्षरमगुरु लघु अन्ते पादान्ते गुरुयुगं गुरुद्वयं प्रभवति अष्टभिः षड्भिश्च यतिः [ततः तदा इत्यर्थः] ऋषिभिः पिङ्गलादिभिरतिचित्रं सुपवित्रं नाम छन्द इहोदितम्। यथा—विकसितविचकिमरुति विवाति जलधरभरमरवर-तरदीपि। मदयति मन इह शशिनि विभाति तव पदनतजनमव भवदेवि ॥ सुपवित्रेति स्त्रीलिङ्गपाठो ग्रन्थान्तरे स्थितः ॥ १८ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

सतृतीयकं सुतनु पञ्चमञ्चाक्षरं
नवमन्तथा दशमतः परं द्व्यक्षरम् ।
सचतुर्दशं गुरु तथेन्द्रियाङ्कैर्य्यति-
र्यदि मञ्जरी भवति तर्हि पथ्याथवा ॥ १९ ॥

हे सुतनु यदि तृतीयं पञ्चमं नवमं तथा दशमात्परमक्षरद्वयमेकादश-द्वादशं चतुर्दशञ्चाक्षरं गुरु तथा पञ्चभिर्नवभिश्च यतिरुदा मञ्जरी नाम पथ्या नाम वा छन्दो भवति। यथा—स्थगयन्त्यमूः शमितचातकार्त्तस्वरा जलदास्तडित्तुलितकान्तकार्त्तस्वराः। जगतीरिह स्फुरितचारुचामीकराः सवितुः क्वचित्कपिशयन्ति चामी कराः ॥ १९ ॥

आद्यानि स्युः कमलमुखि गुरूणि प्रिये
चत्वार्य्येकादशमपि यदि तद्वत्पुनः ।
यत्रैवं द्वादशमथ चरणान्त्यं तदा
चन्द्रालोके स इह भवति चन्द्रौरसः ॥ २० ॥

हे कमलमुखि हे चन्द्रालोके चन्द्ररुचे प्रिये यत्र यस्मिन्नाद्यानि चत्वारि प्रथमद्वितीयतृतीयचतुर्थान्यक्षराणि गुरूणि स्युः पुनरेकादशमपि तद्वद्गुरु द्वादश-श्चतुर्दशञ्चाक्षरमेवं गुरु यदि स्यात्तदा इह जगति सा चन्द्रौरसो नाम छन्दो भवति। यथा—यः प्रायेण भ्रमति वियति सूर्य्यान्तिके यो युग्मस्थो वितरति सुफलं गोचरे। यो लग्नस्थो जनयति च सुखं तं बुधं प्राहुश्चन्द्रौ-रससुत इति पौराणिकाः ॥ पादान्ते यतिः ॥ २० ॥

अलघु यत्र तुर्य्यमथ षष्ठकं तथा
सदशमन्त्रयोदशपुरःस्थमन्तिमम् ।
विकचकेसरप्रसवचित्रकुन्तले
सुजनवल्लभे भवति तत्सुकेसरम् ॥ २१ ॥

विकचैः फुल्लैः केसरस्य वकुलस्य प्रसवैः पुष्पैर्विचित्राः कर्बुराः कुन्तलाः केशा यस्या हे तथाभूते हे सुजनवल्लभे सज्जनप्रिये यत्र चतुर्थं षष्ठं दशमं


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



त्रयोदशस्य पुरस्थमादिस्थितं द्वादशमित्यर्थः चतुर्दशञ्चाक्षरं गुरु तत् सुकेसरं नाम छन्दो भवति। यथा—विकचनागकेसरघृतान् सुकेसरान् सुरभीनपीह सुरभौ विहाय हि। नवमधूनि पातुमनसो मधुव्रताः सपदि फुल्लतामरसमाश्रयन्त्यमी॥ पादान्ते यतिः॥ २१॥

यदि विधुवदने भवेद्गुरु सप्तमं
नवममपि तथा त्रयोदशपूर्व्वगम्।
मतिमति चरणान्तिमश्च मुनिस्वरै-
यदि यतिरपराजिता कथिता तदा॥ २२॥

हे विधुवदने चन्द्रमुखि हे मतिमति बुद्धिमति यदि सप्तमं नवमं त्रयोदशस्य पूर्व्वगं द्वादशं चरणान्तिमं चतुर्दशञ्चाक्षरं गुरु भवेत्सप्तभिः सप्तभिश्च यतिस्तदा बुधैरपराजिता नाम छन्दः कथिता। यथा-'फणिपतिवलयं जटा-मुकुटोज्ज्वलं मनसिजमथनं त्रिशूलविभूषितम्। स्मरसि यदि सखे शिवं शशिशेखरं भवति तव तनुः परैरपराजिता'॥ [हलायुधः]॥ २२॥

यदि गुरु पञ्चमं भवति सप्तमकं
ननु दशमान्तिमश्च सचतुर्दशकम्।
शिशुहरिणाक्षि काव्यरसिकेऽत्र तदा
सति कुररीरुता भवति वा प्रमदा॥ २३॥

हे शिशुहरिणाक्षि हे काव्यरसिके हे सति यदि पञ्चमं सप्तमं चतुर्दशेन सहितं दशमस्यान्तिममेकादशञ्चाक्षरं गुरु भवति तदा सा अत्र जगति कुररीरुता नाम प्रमदा नाम वा छन्दो भवति। यथा—'अनतिचिरोज्झितस्य जलदेन चिरस्थितबहुबुद्‌बुदस्य पयसोऽनुकृतिम्। विरलविकीर्णवज्रशकला सकला-मिह विदधाति धौतकलधौतमही'॥ [माघः ४।४१]॥ पादान्ते यतिः॥ २३॥

यदि गुरु दयितेऽष्टमपरमनघेऽ-
क्षरकमथ चतुर्दशमपितुरगैः।
विरतिरपि तदा प्रहरणकलिता
भवति सुतनु वा प्रहरणकलिका॥ २४॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे दयिते हे सुतनु अष्टमं परं यस्मात्तत् सप्तममित्यर्थः अथ चतुर्दशमक्षरं गरु भवति सप्तभिः सप्तभिश्च विरतिरपि स्यात्तदा प्रहरणकलिता नाम प्रहरणकलिका नाम वा छन्दो भवति। यथा—'अथ तमुपागतं विदितसुचरितं पवनसुतगिरा गिरिगुरुहृदयः। नृपतिरमदयन्मुदितपरिजनं स्वपुरपतिकरैः सलिलसमुदयैः'॥ [ भट्टिः १२।८७ ] ॥ यथा वा—'सुरमुनिमनुजैरुपचितचरणां रिपुभयचकितत्रिभुवनशरणाम्। प्रणमत महिषासुरतनुकुपिताम् प्रहरणकलिताम्पशुपतिदयिताम्' ॥ [ हलायुधः ] ॥ २४ ॥

> यत्र तु मुखत उदयति गुरुरथ
> द्वादश लघव उडुपनिभवदने।
> अन्तत उत गुरुरमलतनु यदा
> चक्रपदमिति तदुदितमयि तदा ॥ २५ ॥

अयि भो उडुपनिभवदने चन्द्रसदृशवदने हे अमलतनु यत्र तु वृत्ते मुखत आदौ गुरुरेकः अथ द्वादश वर्णा लघवः उत एवमन्ततः अन्ते गुरुरेक उदयति यदा तदा तत् चक्रपदमिति चक्रपदं नाम छन्दः कविभिरुदितम्। यथा—धीरहृदयहरकृतमुरजरवं रागगरिममधुरिमशमितखम्। चक्रपदकुटिलमभिनयकुशलं नर्त्तयति युवतिमिह भरतकुलम् ॥ पादान्ते यतिः ॥ २५ ॥

इति शक्करीकुसुमम्।

---

## १५। अतिशक्वरी।

> कन्दुक्रीडाखेदस्वेदक्षोदस्निग्धास्ये नूनं
> भ्रश्यन्मुक्ताकाञ्चीजाले वर्णेनैकेन न्यूनम्।
> विद्युन्मालापादद्वन्द्वं यस्यान्तां विद्युत्कान्ते
> कामक्रीडां लीलाखेलं सारङ्गों वा भाषन्ते ॥ १ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथातिशक्वरीं लक्षयति कन्दुक्रीडेत्यादिभिः कन्दुक्रीड़या जनितात् खेदादुत्पन्नैः स्वेदक्षोदैर्घर्म्मबिन्दुभिः स्निग्धमास्यं यस्यास्तथा भ्रश्यत् स्खलत् मुक्तागुम्फितं काञ्चीजालम्मेखलाकलापो यस्यास्तथाभूते हे विद्युत्कान्ते तड़ित्प्रभे यस्यामेकेन वर्णेन न्यूनं हीनं विद्युन्मालाया अष्टदीर्घाक्षरचरणायाः पादद्वन्द्वं पादद्वयं नुन्नं क्षिप्तम्भवति कवयस्तां कामक्रीड़ां नाम लीलाखेलं नाम सारङ्गीं नाम वा छन्दो भाषन्ते कथयन्ति। यथा—'मा कान्ते पक्षस्यान्ते पर्य्याकाशे देशे स्याप्सीः कान्तं वक्त्रं वृत्तं पूर्णं चन्द्रम्मत्वा रात्रौ चेत्। क्षुत्क्षामः प्रादंश्चेतश्चेतो राहुः क्रूरः प्राद्यात् तस्माद्धान्ते हर्म्यस्यान्ते शय्यैकान्ते कर्तव्या' ॥ [ कण्ठाभरणम् ] ॥ अस्याः सकृत्पाठात् पलमेकं षष्टिवारपाठान्नाड़िकैका भवति ॥ पादान्ते यतिः ॥ १ ॥

ह्रस्वश्चेत्पञ्चमोऽथ स्यात्तद्वदेकादशाद्यः
सालङ्कारे सुवर्णेऽथ द्वादशान्त्यश्च वर्णः।
विश्रामश्चेत्तुरङ्गैस्तम्बेरमैश्चापि यस्यां
छन्दोविद्भिस्तदा सा गीता ध्रुवं चन्द्रलेखा ॥ २ ॥

हे सालङ्कारे हे सुवर्णे यस्यां पञ्चमएकादशाद्यः दशमः अथ द्वादशस्यान्त्यस्त्रयोदशश्च वर्णो ह्रस्वो यदि सप्तभिरष्टभिश्चापि विश्रामो यतिश्चेद्भवति तदा छन्दोविद्भिराचार्य्यैः सा चन्द्रलेखा नाम छन्दो गीता शब्दिता। यथा—'विच्छेदे ते मुरारे पाण्डुप्रकाशा कृशाङ्गी म्लानच्छायं दुकूलञ्च भ्राजते बिभ्रती सा। राधाम्भोदस्य मध्ये लीना यथा चन्द्रलेखा किञ्चार्त्ता त्वां स्मरन्ती धत्ते ध्रुवं जीवयोगम्' ॥ [ गङ्गादासः ] ॥ २ ॥

यस्यामादौ दीर्घा वर्णाः स्युर्नवैकादशोऽपि
श्लोकध्यानामीलन्नेत्रे द्वादशश्चान्तिमौ द्वौ।
विश्रामश्चेद्दिङ्मातङ्गैर्जायतेऽथो तुरङ्गै-
श्चित्राख्या सा ज्ञेया वीणावाणि धीमन्मनोज्ञा ॥ ३ ॥

श्लोकस्य पद्यस्य ध्यानेन चिन्तया आमीलतीषन्मुद्रिते नेत्रे यस्या हे श्लोकध्यानामीलन्नेत्रे वीणया तुल्या वाणी यस्या हे वीणावाणि 'अम्बार्थे'



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



[ पां ७।३।१०७ ]ति ह्रस्वः । आगमस्यानित्यत्वा'न्नद्यृतश्चे' [ पां ५।४।१५३ ]ति न कप् । यस्यामादौ नव वर्णा एकादशोऽपि द्वादशश्चान्तिमौ द्वौ चतुर्दशपञ्चदशौ च एते दीर्घाः स्युरष्टभिः सप्तभिश्च यदि विश्रामः सा धीमतामनोज्ञा चित्राख्या चित्रा नाम छन्दो ज्ञेया मन्तव्या । यथा—कामक्रोधाद्यस्मातङ्गग्राहकुम्भीरनागैर्दुर्लङ्घ्येऽस्मिन् संसाराब्धौ भोगतृष्णातरङ्गे । मग्ना मर्त्या मृत्यूद्विग्ना हा हरेरङ्घ्रिनावं चित्रां जीवोद्धारायालं नो तथाप्याश्रयन्ति ॥ अपरञ्च—गोपालीलीलालोला यद्वत् कलिन्दात्मजान्ते खेलन्मुक्ताहारारण्यस्रग्लसन्मूर्द्धचित्रा । कंसारातेर्मूर्त्तिस्तद्वन्मे हृदि क्रीडतीयं कोऽन्यः स्वर्गो मोक्षो वास्माद्विद्यते तन्न जाने ॥ [ गङ्गादासः ] ॥ ३ ॥

गुणवति लघवः षट् सन्ति यस्याः पुरस्ता-
त्तदनु दशम इत्थं द्वादशान्त्यश्च वर्णः ।
नगतुरगविरामो जायते चेत्तदा सा
वरतनु तनुमध्ये मालिनी मालिनि स्यात् ॥ ४ ॥

हे गुणवति हे वरतनु हे तनुमध्ये हे मालिनि मालावति यस्याः पुरस्तादग्रे षट् प्रथमद्वितीयतृतीयचतुर्थपञ्चमषष्ठा वर्णा लघवः सन्ति भवन्ति तदनु ततः पश्चाद्दशमो द्वादशस्यान्त्यस्त्रयोदशश्च वर्ण इत्थं लघुर्भवति । अष्टभिः सप्तभिश्च यदि विरामो जायते तदा सा मालिनी नाम छन्दो भवेत् । यथा—'अतिविपुलललाटं पीवरोरःकवाटं सुगठितदशनोष्ठं व्याघ्रतुल्यप्रकोष्ठम् । पुरुषमशनिलेखालक्षणं वीरलक्ष्मीरतिसुरभियशोभिर्मालिनी चाभ्युपैति' ॥ [ हलायुधः ] ॥ ४ ॥

तन्वि यत्रादिमं स्यात्तथा तृतीयश्चतुर्थं
षष्ठकं सप्तमश्चाष्टमान्त्यमेकादशश्च ।
द्वादशश्चापि दीर्घश्चतुर्दशान्तद्वदन्त्यं
वाजिनागैर्यतिश्चेन्निबोध ताश्चन्द्रकान्ताम् ॥ ५ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे तन्वि यत्रादिमं प्रथमं तथा तृतीयं चतुर्थं षष्ठं सप्तममष्टमस्यान्त्यं नवममेकादशं चतुर्दशमन्त्यञ्चाक्षरं पञ्चदशं दीर्घं स्यात् सप्तभिरष्टभिश्च यतिश्चेद्भवति तदा तां चन्द्रकान्तां नाम छन्दो निबोध बुद्ध्यस्व। यथा—भासते यान्तरिक्षे जवाप्रसूनातिरक्ता कृत्तिकापूर्वभागे स्वमण्डलस्यैव कोणे। या हरेर्जन्मतारा स्मृता च या चन्द्रकान्ता ज्यौतिषा निर्विशङ्कं वदन्ति तां रोहिणीति ॥ ५ ॥

सतृतीयपञ्चमसथो नवमञ्च दीर्घं
दशमान्तिमान्तिमचतुर्दशमुल्लसद्भ्रूः।
अयि शोभनाङ्गि यदि पञ्चदशञ्च तद्वत्
कविभिस्तदोक्तमृषभं तदमूल्यशीले ॥ ६ ॥

उल्लसन्त्यौ भ्रुवौ यस्या हे उल्लसद्भ्रूः शोभनमङ्गं यस्या हे शोभनाङ्गि अमूल्यं शीलं स्वभावो यस्या हे अमूल्यशीले यदि तृतीयं पञ्चमं नवमं दशमान्तिमस्यैकादशस्यान्तिमं द्वादशं चतुर्दशं पञ्चदशञ्चाक्षरं यदि दीर्घं भवति तदा कविभिस्तद् ऋषभं नाम छन्द उक्तम्। यथा—इह यस्य नीलमृषभं तनयो ह्यशौचापगमद्वितीयदिवसे प्रविधाय यागम्। स्वयमुत्सृजत्यनु सुवत्सतरीचतुष्कं स समेति नाकममरैरभिनन्द्यमानः ॥ ६ ॥

अयि पञ्चमं प्रभवति गुरु सतृतीयं
सचतुर्दशान्तिममपि यदि सति तद्वत्।
विरतिश्शरैर्दशभिरपि भवति यस्यां
कथयन्ति तामिह सुतनु कवय एलाम् ॥ ७ ॥

अयि भोः सुतनु सति यस्यां तृतीयेन सह पञ्चमं गुरु चतुर्दशेन सहान्तिमं पञ्चदशमप्यक्षरं यदि तद्वद्गुरु प्रभवति उत्पद्यते पञ्चभिर्दशभिरपि विरतिर्भवति तदा कवयस्तामिह जगति एलान्नाम छन्दः कथयन्ति। यथा—ससिताभ्रकं सखदिरसमधुरिकैलाफलनागवल्ल्यमलदलनवलवङ्गम्। उपकुञ्चिकात्वगवियुतमिह सजातीफलचूर्णकं क्रमुकमयतिरुपभुङ्क्ते ॥ ७ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अयि गुरु पञ्चमन्तदनु कान्ते सप्तमं
यदि दशमोत्तरत्रितयमप्येवं पुनः ।
प्रभवति तद्वदन्त्यमपि तर्हि प्रिये
वरकविभिः प्रभद्रकमिति प्रोद्गीयते ॥ ८ ॥

अयि कान्ते प्रिये यदि पञ्चमं ततः सप्तमं दशमोत्तरत्रितयमेकादशद्वादश-त्रयोदशमन्त्यम् पञ्चदशमप्यक्षरं गुरु प्रभवति तर्हि वरकविभिस्तत् प्रभद्रक-मिति प्रभद्रकं नाम छन्दः प्रोद्गीयते प्रकर्षेण उच्चरुच्यते । यथा—अरुण-महोत्पलद्युतिहरं श्रीसेवितं निखिलसुखालयं त्रिविधसन्तापापहम् । हरिचरणं कथञ्चिदपि यत्सञ्चिन्त्यते वद भुवने प्रभद्रकमतः किं विद्यते ॥ पादान्ते यतिः ॥ ८ ॥

यदि भवति षष्ठदशमं गुरु द्वादशं
बुधहृदयतोषिणि चतुर्दशाद्यान्तिमम् ।
ललितकवरीकलितमालतीमालिके
विपिनतिलकं सुदती तर्हि गीतम्बुधैः ॥ ९ ॥

हे बुधहृदयतोषिणि ललितायां कवर्य्यां कलिता गृहीता मालत्या जात्या मालिका यया हे तथाभूते हे सुदति षष्ठं दशमं द्वादशं चतुर्दशस्याद्यं पूर्व्वस्थितमन्तस्थितं त्रयोदशं पञ्चदशञ्चाक्षरं गुरु भवति तर्हि बुधैर्विपिनतिलकं नाम छन्दो गीतमुक्तम् । 'विपिनतिलकं विकसितं वसन्तागमे मधुकृत-मदैर्मधुकरैः क्वणद्भिर्वृतम् । मलयमरुता रचितलास्यमालोकयन् व्रजयुवतिभि-र्विहरति स्म मुग्धो हरिः' ॥ [ गङ्गादासः ] ॥ पादान्ते यतिः ॥ ९ ॥

अयि शशिमुखि यस्याम्भवेद्गुरु सप्तमं
विरचितसितवेशे ततोऽक्षरमष्टमम् ।
तदनु दशममेवं त्रयोदशमन्तिमं
वसुमुनिविरतिः सा भवेदुपमालिनी ॥ १० ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अयि शशिमुखि विरचितो मितः परिमितो वेशो यया हे तथाभूते यस्यां सप्तममष्टमं दशमं त्रयोदशमन्तिमञ्चाक्षरं गुरु भवेत्, [ यस्याञ्च ] वसुष्वष्टसु मुनिषु सप्तसु विरतिः सा उपमालिनी नाम छन्दो भवेत्। यथा—कुलपतिमुनिकण्वप्रतिष्ठित आश्रमे कृतगुरुपरिचर्य्याः सुचीर्णबृहद्व्रताः। किल दशशतशिष्या महत्युपमालिनीतटिनि निखिलवेदान् षडङ्गमथाध्यगुः ॥ १० ॥

आदिमन्तृतीयपञ्चमञ्च यत्र सप्तमं
साष्टमान्तप्रदाशमान्तप्रमक्षरन्त्रयोदशम्।
स्याच्चतुर्दशान्तिमञ्च दीर्घकेशि दीर्घकं
तूणकन्तमामनन्ति केचनेह चामरम् ॥ ११ ॥

हे दीर्घकेशि यत्र प्रथमं तृतीयं पञ्चमं सप्तमम् अष्टमस्यान्त्येन नवमेन सहितं दाशमस्यान्तिममेकादशं तथा त्रयोदशं चतुर्दशस्यान्तिमं पञ्चदशञ्चाक्षरं दीर्घम्भवेत्तं तूणकं नाम छन्द आमनन्ति अभ्यस्यन्ति। केचन कवयश्चामरं नामच्छन्द आमनन्ति। यथा—'सा सुवर्णकेतकं विकाशि भृङ्गपूरितम्पञ्चबाण-बाणजालपूर्णहेमतूणकम्। राधिका वितर्क्य माधवाद्यसाखि माधवे मोहमेति निर्भरन्त्वया विना कलानिधे' ॥ [ गङ्गादासः ] ॥ पादान्ते यतिः ॥ ११ ॥

यदि गुरु पञ्चमं भवति यत्र सप्तमं
ननु दशमान्तिमं तदनु च त्रयोदशम्।
अथ चरणान्तिमञ्च दयितेऽक्षरन्तथा
कथयति तत्तदा कविकुलं सुखेलकम् ॥ १२ ॥

ननु भो दयिते प्रिये यत्र पञ्चमं सप्तमं दशमान्तिममेकादशं त्रयोदशं चरणान्तिमं पञ्चदशञ्चाक्षरम् यदि गुरु भवति तदा कविकुलं तत् सुखेलकं नाम छन्दः कथयति। यथा—बहुविधगीततालल्यमूर्च्छनोल्लसत्सुमधुरवंश-निक्वणविमुग्धगोपिकाः। मुररिपुणा सुखेलकपदं सनूपुराः सह ननृतुर्जगुश्च निशि रासमण्डले ॥ १२ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सतृतीयकं यदि पञ्चमं गुरुसंज्ञकं
नतु साष्टमं दशमन्त्रयोदशमक्षरम् ।
मदिराक्षि पञ्चदशञ्च यत्र तथा तदा
कविभिः स मानसहंस इत्यभिधीयते ॥ १३ ॥

हे मदिराक्षि मत्तखञ्जननयने यत्र तृतीयं पञ्चममष्टमं त्रयोदशं पञ्चदशञ्चाक्षरं यदि गुरुसञ्ज्ञकं भवति तदा कविभिः स मानसहंसो नाम छन्दोऽभिधीयते कथ्यते । प्राकृतपैङ्गले मनोहंस इत्युच्यते । यथा—शरदागमे परिहृत्य वासभुवं स्वकं रभसादहर्दिवजातमुद्दुयनक्रमम् । विगणय्य न खगणैः समं प्रतिपल्वलं निपतन्ति मानसहंसका बिसलोलुपाः ॥ पादान्ते यतिः ॥ १३ ॥

आदिमञ्च गुरु यत्र भवेत्सतृतीयकं
सप्तमञ्च दशमञ्च चतुर्दशपूर्व्वगम् ।
अक्षरन्तु हरिणाक्षि सपञ्चदशम्पुन-
स्ताम्पुरन्ध्रि वद माधवसेविनि माधवीम् ॥ १४ ॥

हे पुरन्ध्रि कुटुम्बिनि हे माधवसेविनि यत्र प्रथमं तृतीयं सप्तमं दशमं चतुर्दशस्य पूर्व्वस्थितं त्रयोदशं पञ्चदशञ्चाक्षरं गुरु भवेत्तां माधवीं नाम छन्दो वद कथय । यथा—मर्त्यलोकदुरवापभवासरसोदयं नूतनत्वमतिरिक्ततयानुपदन्दधत् । श्रीपतिः पतिरसाववनेश्च परस्परं सङ्कथामृतमनेकमसिस्वदतामुभौ ॥ पादान्ते यतिः ॥ १४ ॥

आदिगतपञ्चमकमस्ति नवमञ्च चे-
द्वादशपरञ्च ननु पञ्चदशमक्षरम् ।
यत्र गुरु योजितमनन्तगुणभूषिते
तज्जगति रूपवति विद्धि निशिपालकम् ॥ १५ ॥

हे अनन्तगुणभूषिते हे रूपवति यत्र प्रथमं पञ्चमं नवमं द्वादशपरं त्रयोदशं पञ्चदशञ्चाक्षरं गुरु योजितं भवति जगति तन्निशिपालकं नामच्छन्दो जानीहि । यथा—कृष्णपदकोकनदमुग्रभयभञ्जनम् भक्तजनषट्चरणचित्तपरिरञ्जनम् । खान्त यदि मां सपदि तारयमुमाहतां स्यन्दमकरन्दमविलम्बमवलम्बताम् ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यथा वा—मुञ्च नृप मुञ्च नृप पञ्चमुखकामिनी कुञ्जवनमेति मदमत्तगजगामिनी। पञ्चवदनेन सह खण्डशशिधारिणी ... ... ... ... ॥ पादान्ते यतिः ॥ १५ ॥

दयिते सतृतीयकषष्ठमथो नवमं
दशमान्तगतस्य तथान्तिममक्षरकम्।
गुरु पञ्चदशञ्च भवेद्यदि गौरमुखि
भ्रमरावलिमाह तदा नलिनीमथवा ॥ १६ ॥

हे गौरमुखि दयिते यदि तृतीयं षष्ठं नवमं दशमान्तगतस्य एकादशस्यान्तिमं द्वादशं तथा पञ्चदशञ्चाक्षरं गुरु भवति तदा भ्रमरावलिं नाम अथवा नलिनीं नाम छन्द आह वदति। यथा—विगलन्मकरन्दसुगन्धिपरागचितां दुरदृष्टविचालितधीर्नलिनीवनिकाम्। विजहत्यहहानलतप्तलतास्तवकं भ्रमरावलिरेत्य विचुम्बति तृड्विकला ॥ १६ ॥

यदि हि सकलमगुरु गुरु विरतिजम्
भवति स शरभ इति स तु शशिकला।
स मणिगुणनिकर इभतुरगयतिः
स्रगपि भवति यदि रसनवविरतिः ॥ १७ ॥

हे दयिते यदि हि सकलं प्रथमादिचतुर्दशान्तमक्षरमगुरु लघु विरतिजं पादान्तस्थं पञ्चदशमिति यावत् गुरु तदा स शरभ इति शरभनाम छन्दो भवति। स तु स एव शरभः शशिकला नाम छन्दो भवति। स शरभ इभतुरगयतिः अष्टसप्तविरतिश्चेत् मणिगुणनिकरो नाम छन्दो भवति। रसनवविरतिः षण्णवविरतिश्चेत् स्रगपि स्रङ्नामापि छन्दो भवति। शरभोदाहरणं यथा—'नवविकसितकुवलयदलनयने निशमय नवजलधरमिह गगने। अपनय रुषमनुसर मम सचिवं यदि रतिसुखमभिलषसि बहुविधम्' ॥ [ हलायुधः ] ॥ पादान्ते यतिः। शशिकलोदाहरणं यथा—'पटुजवपवनचलितजललहरीतरलितविहगनिचयरवमुखरम्। विकसितकमलसुरभिशुचिसलिलं विचरति पथिकमनसि शरदि सरः' ॥ [ हलायुधः ] ॥ पादान्ते यतिः। मणिगुणनिकरोदाहरणं यथा—'नरकरिपुरवतु निखिलसुरगतिः, अमितमहिमभरसहजनिवसतिः।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अनवधिमणिगुणनिकरपरिचितः, सरिदधिपतिरिव धृततनुविभवः' ॥ [गङ्गादासः] ॥ स्रगुदाहरणं यथा—'स्वसहजमह उपशमितपरिभवं निखिलभुवनसवितुरमित-विभवम्। शतधृतिरपि न परिगणयितुमलं, धरणितलजमिह किमुत कवि-कुलम् ॥' मालाशब्दो द्विगुरुकः तं छन्दसि प्रवेशयितुमशक्यमतः तत्स्थले स्रगिति कृतम् कविभिः। पिङ्गलसूत्रे 'मालर्त्तुनवकौ' इति लभ्यते। [ सौकर्यार्थं हलायुधप्रदत्तं 'नवविकसिते'त्यादि मालोदाहरणमेवात्र षष्ठाक्षरीय-यतिमविगणय्य शरभोदाहरणत्वेन प्रदत्तम्। तथा यतिभेदाद् भिन्नमपि शशिकलाच्छन्दः सप्तमाक्षरीय-यतिमविगणय्य शरभेनाभिन्नतयात्र प्रदर्शितम्। एवमेव पादान्त-यतिसाधारण्याद् अष्टमाक्षरीय-यतिमप्यविगणय्य मणिगुणनिकरोऽपि शरभ-शशिकला-मालाभिरभिन्नमिति वक्तुं शक्यते ] ॥ १७ ॥

धरणितल उदितसकलशुभवति
यदि सकलमगुरु तनुतनु भवति।
नयनसमितदलदसितकुवलय
इह कुवलयमिति नयवति कलय ॥ १८ ॥

हे धरणितले उदितसमस्तमङ्गलवति हे तनुतनु कृशतनु हे नयनसमानी-कृतप्रफुल्लनीलोत्पले हे नयवति नीतियुक्ते यदि सकलं प्रथमात्पञ्चदशं यावद-क्षरम् अगुरु लघु भवति तर्हि इह जगति कुवलयं नाम छन्दस्त्वं कलयालोचय। यथा—गणनरगणवरकरतरचरण परपदशरणगजनपथकथक। अमदनगतमदगज-करयमल शममय जयभयघनवनदहन ॥ पादान्ते यतिः ॥ १८ ॥

इत्यतिशक्करीकुसुमम्।

## १६ । अष्टिः ।

विद्युद्वर्णोऽष्टद्वैगुण्येनावच्छिन्ना दीर्घा वर्णा
यस्मिञ्जाता भास्वन्नारम्भिभ्रत्यच्छम्मुक्ताहारम्।
छन्दश्शास्त्राभिज्ञैर्विज्ञैः स्वच्छस्वान्ते रूपैः कान्ते
तद्ब्रह्माद्यं रूपं गीतं ब्रह्मज्ञानच्छिन्नभ्रान्ते ॥ १ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथार्द्धं लक्षयति विद्युदित्यादिभिः। हे विद्युद्वर्णे भास्वान् तारो यस्मिन् तं तथा अच्छं मुक्ताहारं बिभ्रति हे स्वच्छस्वान्ते निर्म्मलहृदये हे रूपैः कान्ते रूपमनोरमे हे ब्रह्मज्ञानच्छिन्नभ्रान्ते ब्रह्मज्ञानेन छिन्ना नाशिता भ्रान्तिर्मिथ्यामतिर्यया तथाभूते यस्मिन् अष्टद्वैगुण्येन षोड़शभिरवच्छिन्ना दीर्घा वर्णा जाता भवन्ति तत् छन्दःशास्त्राभिज्ञैश्छन्दोनिपुणैः पण्डितैः ब्रह्म आद्यं यस्य रूपस्य ब्रह्मरूपं नाम छन्दो गीतमुक्तम्। विद्युल्लोलान् जिह्वान्दोलान् भोगान् सर्व्वान् कृत्वा खर्व्वान् पुत्रान्दारान् चोराकारान् यद्वद्दिग्धान् वाणान् क्षिग्धान्। काराकारं चित्रागारं दुग्धप्रख्याः शय्यामुख्याः पूर्णान् कोषांश्चाशु त्यक्त्वाध्याय ब्राह्मं रूपं मुक्त्वा॥ पादान्ते यतिः॥ १॥

लघुर्यस्याद्यः स्यात्तदनु गुरवः पञ्च कान्ते
ततो ह्रस्वाः पञ्च प्रकृतिसरलेऽथो गुरू द्वौ।
ततश्चैको ह्रस्वस्तदनु च गुरू द्वौ यदा तत्
तदा छन्दोविद्भिः प्रवरललितं नाम गीतम्॥ २॥

हे प्रकृतिसरले सहजार्जवसम्पन्ने कान्ते यस्याद्यो वर्णः लघुः स्यात् तदनु पञ्च वर्णा गुरवः स्युः ततः पञ्च वर्णा ह्रस्वा स्युः अथ द्वौ वर्णौ गुरू स्याताम् ततश्च एको वर्णो ह्रस्वः स्यात् तदनु च द्वौ वर्णौ गुरू यदा स्याताम् तदा छन्दोविद्भिराचार्य्यैस्तत् प्रवरललितं नाम छन्दो गीतम् उक्तम्। 'भुजोत्क्षेपः शून्ये चलवलयझङ्कारयुक्तो मुधा पादन्यासः प्रकटित-तुलाकोटिनादः। स्मितं वक्त्रे कस्माद्दृशि पटुकटाक्षोर्मिलीला हरौ जीयादीदृक् प्रवरललितं वल्लवीनाम्'॥ [ गङ्गादासः ]॥ पादान्ते यतिः॥ २॥

प्रभवति पञ्चमोऽञ्चितगते गुरुर्हि यस्यां
तदनु च सप्तमोऽथ दशमान्तिमस्तथा चेत्।
कविकुलमानवर्द्धिनि ततस्त्रयोदशोऽन्त्या-
वपि कथिता तदा कविभिरत्र वाणिनी सा॥ ३॥

हे अञ्चितगते हे कविकुलमानवर्द्धिनि यस्यां पञ्चमः सप्तमश्च वर्णो गुरुर्हि प्रभवति अथ दशमान्तिम एकादशश्च वर्णो यदि तथा गुरुस्ततस्त्रयोदशो



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वर्णः गुरुरन्त्यौ पञ्चदशशोड़शावपि वर्णौं गुरू भवतस्तदात्र जगति कविभिः सा वाणिनी नाम छन्दः कथिता। 'स्फुरतु ममाननेऽद्य ननु वाणि नीतिरम्यं तव चरणप्रसादपरिपाकतः कवित्वम्। भवजलराशिपारकरणक्षमं मुकुन्दं सततमहं स्तवैः स्वरचितैः स्तवोमि नित्यम्' ॥ [ गङ्गादासः ] ॥ पादान्ते यतिः ॥ ३ ॥

शशिमुखि यत्र पञ्चमकसप्तमैकादशा
गुरव उत त्रयोदशाचतुर्दशौ प्रेयसि।
प्रभवति षोड़शोऽपि गरुड़ध्वजार्चारते
गरुड़रुतं वदन्ति वदतां वरास्तन्वि तत् ॥ ४ ॥

हे शशिमुखि हे विष्णुपूजारते हे तन्वि हे प्रेयसि प्रियतमे यत्र पञ्चमसप्तमैकादशास्त्रयोदशचतुर्दशौ षोड़शोऽपि वर्णा गुरवो भवन्ति तत् वदतां वरा वाग्मिनो गरुड़रुतं नाम छन्दो ब्रुवन्ति। 'अमरमयूरमानसमुदे पयोदध्वनिर्गरुड़रुतं सुरारिभुजगेन्द्रसन्त्रासने। धरणिभरावतारविधिडिण्डिमाड़म्बरः स जयति कंसरङ्गभुवि सिंहनादो हरेः' ॥ [ गङ्गादासः ] ॥ पादान्ते यतिः ॥ ४ ॥

शरच्छ्रियोल्लसद्विसप्रसूनतुण्डमण्डले
विलोलहेमकुण्डलोल्लसत्सुगण्डमण्डले।
भवेत्सुकेशि या प्रमाणिकापदद्वयात्मिका
वदन्ति तां महाधियो बुधा महाप्रमाणिकाम् ॥ ५ ॥

शरदि शरत्काले समुल्लसद्विकसद्विसप्रसूनं पद्मन्तद्वत् तुण्डमण्डलं मुखविम्बं यस्याः तथा विलोलाभ्यां हेमकुण्डलाभ्यामुल्लसन्तो सुशोभने गण्डमण्डले यस्यास्तथा सु शोभनाः केशा यस्या हे तथाभूते या प्रमाणिकायाः पूर्व्वोक्तायाः पदद्वयं पादयुगलमात्मा स्वरूपं यस्यास्तां महाधियो बुधा महाप्रमाणिकां नाम वदन्ति। यथा—'मुरारिकायकालिमाललामवारिधारिणी तृणीकृतत्रिपिष्टपा नृलोकशोकहारिणी। मनोऽनुकूलकूलकुञ्जपुञ्जधूतदुर्मदा धुनोतु नो मनोमलं कलिन्दनन्दिनी सदा' ॥ यथा वा—'जगद्विरुञ्गेञ्जगे क्षणे क्षणे मदीयकं



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



कदम्बकोरकद्वयं न गोपि गोपितं कुरु। इदं निगद्य राधिकां पयोधराम्बरं हरन् कलिन्दनन्दिनीतटे ननन्द नन्दनन्दनः' ॥ [ वृत्तमाला ] ॥ ५ ॥

सुकष्टलभ्यविष्टरश्रवोऽङ्घ्रिभक्तिधुर्वहे
सितेतरप्रपञ्चचामरस्फुरच्छिरोरुहे ।
इयञ्च पञ्चचामरं नराचकञ्च वाञ्छ्यते
समञ्चितज्ञसञ्चयैरशेषयोषिदञ्चिते ॥ ६ ॥

अस्या नामान्तरमाह सुकष्टेति। सुकष्टेनातिकृच्छ्रेण लभ्याया विष्टरश्रवसो विष्णोरङ्घ्र्योश्चरणयोर्भक्तेर्धुरं भारं वहति या तत्सम्बोधने, तथा सितेतरं कृष्णं [ प्रपञ्च इव इति ] प्रपञ्चं विस्तीर्णं चामरमिव स्फुरन्तः प्रकाशमानाः शिरोरुहाः केशा यस्यास्तत्सम्बोधने, हे अशेषाभिः योषिद्भिरञ्चिते सम्मानिते इयञ्च [महा]प्रमाणिकैव समञ्चितज्ञसञ्चयैः पूजितप्राज्ञसमूहैः पञ्चचामरं नाम अथवा नराचकं नाम छन्दो वाञ्छ्यते इष्यते। वाछि इच्छायामिदित्त्वान्नुम् कर्म्मणि लडात्मनेपदम् यकि अनिदितामिति विशेषणान्न नुमो नकारस्य लोपः ॥ ६ ॥

यदि गुरु पञ्चमन्ततः सप्तमकन्नवमं
दशममथ त्रयोदशं षोड़शकञ्च तथा ।
प्रभवति पार्व्वणेन्दुविद्वेषिमुखाम्बुरुहे
वरकविभिस्तदा प्रगीता मणिकल्पलता ॥ ७ ॥

पर्व्वणि पूर्णिमायां भवः पार्व्वणः स चासाविन्दुश्चेति तस्य विद्वेषि सदृशं मुखरूपमम्बुरुहं यस्या हे तथाभूते यदि पञ्चमं सप्तमं नवमं दशमं त्रयोदशं षोड़शञ्चाक्षरं गुरु प्रभवति तदा वरकविभिर्मणिकल्पलता नाम छन्दः प्रकथिता प्रोक्ता। यथा—कलिमलसञ्चयातितिग्मातपतापजुषां हरिचरणाब्जमातपत्रं ध्रुवमेव नृणाम्। पुनरिह कामिकामपूर्त्त्यै मणिकल्पलतासममिति तद्भजन्ति सन्तः सुविविच्य बहून् ॥ पादान्ते यतिः ॥ ७ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



आदिगतश्च तुर्य्यमपि षष्ठमथो दशमं
द्वादशकान्त्यषोड़शमुदेति यतो गुरुकम् ।
भूतकुमारवक्त्रशिववक्त्रयतिर्य्यदि सा
शैलशिखेति पद्ममुखि तर्हि बुधैरुदिता ।। ८ ।।

हे पद्ममुखि यतः यस्यां प्रथमं चतुर्थं षष्ठं दशमं द्वादशस्यान्त्यं त्रयोदशं षोड़शञ्चाक्षरं गुरु उदेति पञ्चभिः षड्भिः पञ्चभिश्च यतिर्भवति तर्हि सा शैलशिखा नाम छन्द उदिता उक्ता । 'शैलशिखानिकुञ्जशयितस्य हरेः श्रवणे जीर्णतृणं करेण निदधीत कपिश्चपलः । क्षुद्रवधापवादपरिहारविनीतमतेस्तस्य न तावतैव लघुता द्विपयूथभिदः' ॥ [ हलायुधः ] ॥ ८ ॥

आद्यचतुर्थमथो यदि सप्तमकं दशमं
द्वादशकान्तिमषोड़शमप्यलघु प्रमदे ।
यत्र भवेन्नवपल्लवपाटलपाणितले
नीलमिदन्ननु तर्ह्यथवाश्वगतिं ब्रुवते ।। ९ ।।

नवपल्लवे इव पाटले रक्ते पाणितले यस्यास्तथाभूते ननु हे प्रमदे यत्र प्रथमं चतुर्थं सप्तमं दशमं द्वादशस्यान्तिमं त्रयोदशं षोड़शञ्चाक्षरमलघु गुरु भवेत्तर्हि कवय इदं नीलं नाम अथवा अश्वगतिं नाम छन्दो ब्रुवते वदन्ति ॥ नीलवलाहककान्तिकलापकमोषिशुचिस्वीयकलेवरवैभवकोश्वगतिप्रतिभः । अर्जुन-सारथिराहवचत्वर एष हरिवेणुकपाणिक आत्मनिदेशक आविरभूत् ॥ पादान्ते यतिः ॥ ९ ॥

चत्वारः प्राग्यदि च गुरवः कान्तेऽथ नवमा-
त्तद्वद्वर्णास्त्रय ऋषिवधूसंशुद्धनियमे ।
अन्तश्चैवं श्रुतिषड्तुभिर्यस्याश्च विरति-
स्तर्हि स्यात्सा मदनललिता धीरैरभिहिता ।। १० ।।

हे कान्ते हे ऋषिवधूनामिव संशुद्धो विशुद्धो नियमो यस्यास्तथाभूते यदि प्राक् पूर्वं चत्वारो वर्णा गुरवः अथ नवमात् परास्त्रयो वर्णा गुरवः



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



स्युः अन्त्यश्च वर्ण एवं स्यात् यस्याञ्च चतुर्भिः षड्भिः षड्भिश्च यतिर्भवति तर्हि धीरैरभिहिता सा मदनललिता नाम छन्दः स्यात् भवेत् ॥ यथा—'विभ्रष्टस्रग्गलितचिकुरा धौताधरपुटा ग्लायत्पत्रावलिकुचतटोच्छ्वासोर्मितरला। राधात्यर्थं मदनललितान्दोलालसवपुः कंसारातेरतिरसमहो चक्रेऽतिचटुलम्' ॥ [ गङ्गादासः ] ॥ १० ॥

आद्यचतुर्थषष्ठदशमं मरालगमने
द्वादशषोडशञ्च ननु तन्वि यत्र गुरुकम्।
सागुरुधूपधूमपटलैः सुवासितकचे
सङ्कथितेह धीरनिकरेण धीरललिता ॥ ११ ॥

हे मरालगमने हंसगते हे तन्वि हे अगुरुधूपस्य धूमपटलैः सुवासिताः सुगन्धिकृताः कचाः केशा यया तथाभूते यत्र प्रथमं चतुर्थं षष्ठं दशमं द्वादशं षोडशञ्चाक्षरं गुरु भवति सा जगति धीरसमूहेन धीरललिता सङ्कथिता। यथा—यामुनसैकतस्थलसुसङ्गतस्य [सु]गतिर्गोपवधूजनस्य मदखेलधीरललिता। बाहुलरासकेलिरसलम्पटस्य हृदये सम्मदमातनोत्यतितरां स्म कैटभजितः ॥ पादान्ते यतिः ॥ ११ ॥

आद्यममलशीलाढ्ये दीर्घम्पञ्चमत इह
स्याद्वरतनु वर्णानां षट्कञ्चान्त्यमपि तथा।
यत्र भवति विश्रामो बाले दिग्गजवसुभिः
स्यान्ननु चकिता प्राज्ञि प्राज्ञैः प्राग्भिरभिहिता ॥ १२ ॥

हे अमलशीलाढ्ये निर्म्मलस्वभावसम्पन्ने हे कान्ते हे बाले हे प्राज्ञि यत्र प्रथमं पञ्चमादुत्तरं वर्णानां षट्कं षष्ठं सप्तममष्टमं नवमं दशममेकादशमन्त्यमप्यक्षरं दीर्घं स्यात्, अष्टभिरष्टभिर्विश्रामश्च भवति प्राग्भिः प्राचीनैः प्राज्ञैः सा चकिता नाम छन्दोऽभिहिता कथिता। यथा—'दुर्जयदनुजश्रेणीदुश्चेष्टाशतचकिता यद्भुजपरिघत्राता याता साध्वसविगमम्। दीव्यति दिविषन्माला शश्वन्नन्दनविपिने गच्छत शरणं कृष्णं तं भीता भवरिपुतः ॥ [ गङ्गादासः ] ॥ १२ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



आद्यचतुर्थषष्ठमप्यष्टमसथ नवमं
षोड़शमक्षरञ्च दीर्घं सति भवति यदा ।
छन्दसि पेशलैः प्रगीता ननु वरयुवति
प्रोज्ज्वलमानसे तदा सा खलु वरयुवती ॥ १३ ॥

हे सति हे वरयुवति हे प्रोज्ज्वलमानसे यदा प्रथमं चतुर्थं षष्ठमष्टमं नवमं षोड़शञ्चाक्षरं दीर्घम्भवति तदा छन्दसि पेशलैर्निपुणैः पण्डितैः सा खलु वरयुवती नाम छन्दः प्रगीता। यथा—'कुञ्जरकुम्भपीठपीनोन्नतकुचयुगला पार्व्वणशर्व्वरीशगर्वापहमुखकमला। पीननितम्बबिम्बसंवाहनशिथिलगतिर्मुञ्जनराधिराज भूयात्तव वरयुवती' ॥ [ हलायुधः ] ॥ युवतीत्यत्र यौतेः शत्रन्तात् 'उगितश्चे'[ पां ४।१।६ ]ति ङीप् ॥ १३ ॥

आद्यचतुर्थषष्ठमपि गुरु भवति यतः
षोड़शमक्षरञ्च यदि मुनिनवसु यतिः ।
तर्हि महाकविस्तदृषभगजविलसितम्
प्राह तदेव कोऽपि तुरगगजविलसितम् ॥ १४ ॥

यतो यत्र आद्यं चतुर्थं षष्ठं षोड़शञ्चाक्षरं गुरु भवति सप्तसु नवसु यदि यतिस्तर्हि तन्महाकविर्ऋषभगजविलसितं कोऽपि कविस्तत् तुरगगजविलसितं नाम छन्दः प्राह ब्रवीति। यथा—आयतबाहुदण्डमुपचितपृथुहृदयम् पीनकटिप्रदेशमृषभगजविलसितम्। वीरमुदारसत्त्वमतिशयगुणरसिकं श्रीरतिचञ्चलापि न परिहरति पुरुषम्' ॥ [ हलायुधः ] ॥ १४ ॥

नीरजाक्षि कीरचञ्चुनासिके प्रमोदपात्रि
सूक्ष्मनीलरोमराजिसाधुराजमानगात्रि ।
मल्लिकापदद्वयन्तु यत्र जायतेच्छदन्ति
चित्रमित्ययं तदत्र चञ्चलेति वा वदन्ति ॥ १५ ॥

हे नीरजाक्षि पद्मलोचने हे कीरचञ्चुनासिके शुकत्रोटिनासिके हे प्रमोदपात्रि प्रमोदाधारभूते सूक्ष्माणां रोमाणां राजिभिः साधु यथा भवति राजमानं गात्रं



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यस्या हे तथाभूते हे अच्छदन्ति निर्म्मलदशने यत्र मल्लिकायाः समानिकायाः पदद्वयं चरणद्वयमेव जायते अत्र जगति चित्रमिति चित्रं नाम चञ्चलेति चञ्चलां वा नाम छन्दः कवयो वदन्ति। यथा—'विद्रुमारुणाधरौष्ठशोभि-वेणुवाद्यहृष्टवल्लवीजनाङ्गसङ्गजातमुग्धकण्टकाङ्ग। त्वां सदैव वासुदेव पुण्य-लभ्यपादसेव वन्यपुष्पचित्रकेश संस्मरामि गोपवेश'॥ [ गङ्गादासः ]॥ पादान्ते यतिः॥ १५॥

स्याद्द्वितीय[मु चतुर्थतस्त्रितय]मष्टमञ्च
चारुचामरशिरोरुहे दशमतः परञ्च।
त्र्यक्षरं लघु चतुर्दशं यदि च षोड़शञ्च
तर्हि तन्वि नवनीतमित्युदितमञ्चितञ्च॥ १६॥

हे चारुचामरशिरोरुहे हे तन्वि यदि हि द्वितीयं [ तथा चतुर्थतः चतुर्था-दक्षरादारभ्य त्रितयं चतुर्थं पञ्चमं षष्ठञ्चाक्षरम् ] अष्टमं दशमतो दशमा[दारभ्य] त्र्यक्षरं [ दशमैकादशद्वादशं ] चतुर्दशंच षोड़शञ्चाक्षरं लघु स्यात् तर्हि तदा कविभिर्नवनीतमिति नवनीतं नाम छन्द उदितमुक्तमञ्चितं पूजितञ्च। यथा—'कालकालगलकाल कालमुखकालकाल कालकालघनकाल कालपनकालकाल। कालकालसितकालका ललनिकालकाल कालका लगतु कालकाल कलिकालकाल'॥ [ दण्डी ३।५० ]॥ पादान्ते यतिः॥ १६॥

यदि षड़धिकदशलघुविरचिततनु-
रतिहितसुविदितगुणगणचिततनु।
स्मृतिमति धृतिमति कृतिमति मतिमति
तदचलधृतिरिति कविरवगमयति॥ १७॥

अतिहितेन अत्यर्थहितकरेण सुविदितेन अतिविख्यातेन गुणगणेन चिता आकीर्णा तनुर्यस्या हे तथाभूते हे स्मृतिमति सुमेधः हे धृतिमति धैर्य्यशालिनि सन्तोषवति वा हे कृतिमति यत्नवति कार्य्येष्विति शेषः हे मतिमति बुद्धिमति यदि षड्भिरधिकैर्दशभिः षोड़शभिर्लघुभिर्विरचिता तनुरात्मा यस्याः सा यदि भवति तत्तदा कविः अचलधृतिरिति अचलधृतिं नाम छन्दः



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अवगमयति अवबोधयति ज्ञापयतीत्यर्थः। यथा—'मदकलखगकुलकलरवमुखरिणि। विकसितसरसिजपरिमलसुरभिणि। गिरिवरपरिसरसरसि महति खलु रतिरतिशयमिह मम हृदि विलसति'॥ [ हलायुधः ]॥ पादान्ते यतिः॥ १७॥

इत्यष्टिकुसुमम्॥

## १७। अत्यष्टिः।

व्याकोषेन्दीवरसुनयने प्राक्चतुष्कं गुरु स्यात्
कान्ते यस्यास्तदनु दशमैकादशश्चाक्षरञ्चेत्।
तद्वन्मत्तद्विरदगमने द्वादशान्त्ये तथान्त्ये
मन्दाक्रान्ता श्रुतिरसहयैश्चेद्विरामो भवेत्सा॥ १॥

हे व्याकोपेन्दीवरसुनयने फुल्लनीलोत्पलशोभननयने हे मत्तद्विरदगमने कान्ते यस्याः प्राक्चतुष्कं पूर्व्वचतुष्टयं प्रथमद्वितीयतृतीयचतुर्थं दशमैकादशं द्वादशान्त्ये द्वादशस्यान्त्ये त्रयोदशं चतुर्दशं तथा अन्त्ये द्वे षोड़शं सप्तदशञ्चाक्षरं यदि गुरु स्यात् चतुर्भिः षड्भिः सप्तभिश्च चेद्विरामः स्यात्तदा सा मन्दाक्रान्ता नाम छन्दो भवेत्। यथा—'कुल्याम्भोभिः प्रसृतिचपलैः शाखिनो धौतमूला भिन्नो रागः किसलयरुचामाज्यधूमोद्गमेन। एते चार्व्वागुपवनभुवि च्छिन्नदर्भाङ्कुरायां नष्टाशङ्का हरिणशिशवो मन्दमन्दञ्चरन्ति'॥ [ शकु० ]॥ १॥

सतृतीयकषष्ठमष्टमम्भवति यत्र दीर्घं
दशमञ्च चतुर्दशञ्च हे सुतनु षोड़शञ्च।
अथ सप्तदशञ्च दिक्स्वरैर्भवति चेद्यतिस्तां
वद तर्ह्यतिशायिनीति वा सुमुखि चित्ररेखाम्॥ २॥

हे सुतनु हे सुमुखि यत्र तृतीयं षष्ठम् अष्टमं दशमं षोड़शं सप्तदशञ्चाक्षरं दीर्घं दशभिः सप्तभिश्च यदि यतिर्भवति तर्हि तामतिशायिनीति नाम अथवा चित्ररेखां नाम वा छन्दो वद कथय। यथा—'इति


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



धौतपुरन्ध्रिमत्सरान् सरसि मज्जनेन श्रियमाप्तवतोतिशयिनीमपमलाङ्गभासः। अवलोक्य तदैव यादवानपरवारिराशेः शिशिरेतररोचिषाप्यपां ततिषु मङ्क्तुमीषे'॥ [ माघः ८।७१ ]॥ २॥

यस्यान्दीर्घम्प्रियसहचरि स्यात्प्राक्चतुष्कन्तथा
लीलागामिन्यथ नवमतस्त्रीण्यक्षराणि प्रिये।
फुल्लाम्भोजप्रतिमवदने द्वे षोड़शस्यादिमे
तादृक् चान्त्यं श्रुतिरसहयैश्छेदस्तदा हारिणी॥ ३॥

हे प्रियसहचरि हे लीलागामिनि फुल्लाम्भोजेन प्रतिमं सदृशं वदनं यस्या हे तथाभूते प्रिये यस्याम्, प्राचां चतुष्कं प्रथमद्वितीयतृतीयचतुर्थमक्षरं दीर्घं स्यात्, अथ यदि नवमात् पराणि त्रीणि अक्षराणि दीर्घाणि स्युः षोड़शस्यादिमे द्वे अक्षरे चतुर्दशपञ्चदशे दीर्घे स्याताम् अन्त्यञ्चाक्षरं दीर्घं स्यात चतुर्भिः षड्भिः सप्तभिश्च यदि छेदो यतिः स्यात्तदा हारिणी नाम छन्दो भवति। यथा—'यस्या नित्यं श्रुतिकुवलये श्रीशालिनी लोचने रागः स्वीयोधरकिसलये लाक्षारसाञ्जनम्। गौरी कान्तिः प्रकृतिरुचिरा रम्याङ्गरागच्छटा सा कंसारेरजनि न कथं राधा मनोहारिणी'॥ [ गङ्गादासः ]॥ ३॥

द्वितीयमथ षष्ठकं गुरु तथाष्टमं द्वादशं
त्रयोदशपरद्वयं भवति तद्वदेवान्तिमम्।
यतिश्च वसुभिर्ग्रहैः सुतनु यत्र सञ्जायते
विचक्षणगणास्तु तां प्रकथयन्ति पृथ्वीं प्रिये॥ ४॥

हे सुतनु प्रिये! यत्र द्वितीयं षष्ठं तथा अष्टमं द्वादशं त्रयोदशात्परद्वयं चतुर्दशपञ्चदशं गुरु भवति अन्तिमं सप्तदशञ्चाक्षरं तद्वदेव गुरु भवति अष्टाभिर्नवभिश्च यतिः सञ्जायते भवति विचक्षणसमूहास्तु तां पृथ्वीं नाम छन्दः प्रकथयन्ति। यथा—'अकालघनमण्डली किरतु नाम मुक्तावलीमपर्व्वणि विधुन्तुदस्तुदतु नाम शीतद्युतिम्। इदन्तु बहु मन्महे यदनपायिविद्युल्लताविलम्बिकनकाचलद्वयमधोमुखं नृत्यति'॥ [ वृत्तमाला ]॥ यथा वा— ... ... ... ... ... ... ... ॥ ४॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अयि भवति षष्ठकं गुरु तथाष्टमं द्वादशं
शशिमुखि चतुर्दशं तदनु षोडशस्यादिमम् ।
कनकवलयोल्लसत्करयुगेऽन्तिमश्चाक्षरं
कविमुखसुखाकरं भवति तर्हि मालाधरम् ॥ ५ ॥

अयि शशिमुखि कनकवलयाभ्याम् उल्लसती करयुगे यस्या हे तथाभूते यदि षष्ठमष्टमं द्वादशं चतुर्दशं षोडशस्यादिमं पञ्चदशम् अन्तिमं सप्तदशञ्चाक्षरं गुरु भवति तर्हि तदा कविमुखस्य सुखाकरं सुखस्थानं मालाधरं नाम छन्दो भवति। यथा—रुचिरतनुरोचिषा विजितनीलधाराधरं भुवनजनरञ्जनस्वर-विकाशिवंशीधरम् । स्मरजखरतृष्णया परिनिपीतराधाधरं भज कमपि गोपजं विपिनपुष्पमालाधरम् ॥ पादान्ते यतिः ॥ ५ ॥

जलजवदने पञ्च प्राच्या यदा लघवस्ततो
दशमकपरस्तद्वच्चैकस्त्रयोदशकोऽपि च ।
ललितगमने वर्णस्तद्वच्चतुर्दशषोडशौ
रसविधिमुखैरश्वैर्यस्यां यतिर्हरिणी तदा ॥ ६ ॥

हे जलजवदने पद्ममुखि हे ललितगमने यस्याम्प्राच्या आद्याः पञ्च वर्णा यदि लघवो भवन्ति ततो दशमात्पर एकादशस्त्रयोदशश्चतुर्दशः षोडशश्च वर्णः तद्वत् लघुः षड्भिश्चतुर्भिः सप्तभिश्च यतिस्तदा हरिणी नाम छन्दो भवति। यथा—इति बहुविधं बालक्रीडाविचित्रविचेष्टितं ललितललितं सान्द्रानन्दं मनोहर-माचरन् । अलभत परां वृद्धिं षष्ठे दिने नवयौवनं स किल सकलं शास्त्रं शस्त्रं विवेद विभोरपि ॥ ६ ॥

प्रथममगुरुषट्कञ्चैकादशञ्च भवेत्तयो-
र्दशमपि लघु यस्मिन् कान्ते चतुर्दशषोडशम् ।
रसयुगहयविश्रामश्चाथ कोकिलकाकली-
कलितललितगीते विद्याद्धरिं हरिणाक्षि तम् ॥ ७ ॥

हे कान्ते कोकिलस्य काकलीव सूक्ष्मकलध्वनिरिव कलितं ललितं गीतं यया हे तथाभूते हे हरिणाक्षि मृगलोचने यस्मिन् प्रथममादौ अगुरुषट्कं



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



लघूनां षट्कं प्रथमं द्वितीयं तृतीयं चतुर्थं पञ्चमं षष्ठञ्च लघु भवेत् तथा एकादशं त्रयोदशं चतुर्दशं षोडशञ्चाक्षरं लघु। अथ यदि षड्भिश्चतुर्भिः सप्तभिश्चापि विश्रामो यतिर्भवेत् तर्हि तं हरिं नाम छन्दो विद्याज्जानीयात्। यथा—त्रिभुवनगुरुमनाद्यन्तं श्रुतिप्रतिपादकं प्रकृतिपुरुषनियन्तारं त्रिवृत्प्रतिबोधितम्। विमलहृदययतीनामप्यतीन्द्रियमव्रणं यदि निरुपमसुखेच्छा ते भजस्व तदा हरिम् ॥ ७ ॥

चत्वारः प्राङ्मधुरवचने सुभूषणभूषिते
दीर्घा वर्णा दशमसहितस्त्रयोदशपूर्वगः।
शश्वद्व्रीडासुभगवदने सपञ्चदशोऽन्तिमो
भाराक्रान्ता श्रुतिरसहयैर्यदा विरतिस्तदा ॥ ८ ॥

मधुरं मिष्टं वचनं यस्यास्तथाभूते हे सुभूषणभूषिते शश्वत्सदा व्रीडया लज्जया सुभगं सुन्दरं वदनं मुखं यस्यास्तथाभूते यदा प्रथमाश्चत्वारो वर्णा दशमस्त्रयोदशस्य पूर्वगः द्वादशः पञ्चदशोऽन्तिमः सप्तदशश्च दीर्घा भवन्ति चतुर्भिः षड्भिः सप्तभिश्च विरतिर्विश्रामस्तदा भाराक्रान्ता नाम छन्दो भवति। यथा—'भाराक्रान्ता मम तनुरियं गिरीन्द्रविधारणात् कम्पं धत्ते श्रमजलकणं तथा परिमुञ्चति। इत्याचृण्वन् जयति जलदस्वनाकुलवल्लवीसंश्लेषोत्थं स्मरविलसितं विलोक्य गुरुं हरिः' ॥ [ गङ्गादासः ] ॥ ८ ॥

द्वितीयं स्यादलघु महिले तृतीयचतुर्थकं
स्थितप्रज्ञ दशमसहितं त्रयोदशपूर्वगम्।
तथैवाद्यं परगतमपीह षोडशतोऽक्षरं
भवेत्कान्ता युगरसहयैर्यदा विरतिस्तदा ॥ ९ ॥

हे महिले हे स्थितप्रज्ञे यदा द्वितीयं तृतीयं चतुर्थं दशमं त्रयोदशात्पूर्वगतं द्वादशं षोडशादाद्यं परस्थितमपि सप्तदशञ्चाक्षरं गुरु स्यात् चतुर्भिः षड्भिः सप्तभिश्च विरतिस्तदा कान्ता नाम छन्दो भवेत्। यथा—सुतो मूर्खः कुटिलहृदयाः शठाश्च सनाभयश्चला कान्ता प्रकृतिमुखरा सुहृद्धनलोलुपः



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



नियोज्याश्च प्रतिवचनदाश्चिरेण सुपालितास्तथाप्येतान्प्रति मम मनः कथन्नु न निष्ठुरम् ॥ ९ ॥

> लघुर्यस्यामाद्यस्तदनु गुरवः पञ्च सुरुचे
> ततः पञ्चादीर्घास्तदनु च गुरू द्वौ त्रिलघवः ।
> तथा पादान्तस्थः प्रभवति गुरुर्गौरवदने
> रसैरुद्रैर्भद्रे भवति विरतिः सा शिखरिणी ॥ १० ॥

हे सुरुचे हे गौरवदने हे भद्रे कल्याणि यस्यामाद्यः प्रथमो वर्णो लघुः ततः पश्चात् पञ्च वर्णा गुरवः ततः परं पञ्च वर्णा अदीर्घा लघवः तदनु च द्वौ वर्णौ गुरू तथा त्रिलघवस्त्रयो वर्णा लघवः पादान्तस्थः सप्तदशोऽपि वर्णो गुरुः प्रभवति षड्भिरेकादशैश्च विरतिः सा शिखरिणी नाम छन्दो भवति। यथा—'निवृत्ता भोगेच्छा पुरुषबहुमानोऽपि गलितः समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः। शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने अहो दुष्टः कायस्तदपि मरणोपायचकितः ॥ यथा वा—'यशश्शेषीभूते हृदिगगननाथे गुणनिधौ प्रवृत्ते वैराग्ये विषयरसनिष्क्रान्तमनसाम्। इदानीमस्माकं घनतरुलतां निर्झरवतीं तपस्तप्तुं चेतो भजति गिरिमालां शिखरिणीम्' ॥ [ हलायुधः ] ॥ १० ॥

> अवितथनाम तद्भवति पञ्चमसप्तमकं
> दशमपरं यतो गुरु चतुर्दशसप्तदशम् ।
> कथयति कोऽपि सुन्दरि तदेव हि नर्कटकं
> स्वरदशभिर्यतिर्यदि हि तद्वद नर्दटकम् ॥ ११ ॥

हे सुन्दरि यतो यस्मिन् पञ्चमं सप्तमं दशमात्परम् एकादशं चतुर्दशं सप्तदशञ्चाक्षरं गुरु स्यात् तदवितथं नामच्छन्दो भवति। यथा—श्रुतिपरिपूर्णवक्त्रमतिसुन्दरवाग्विभवं तमखिलजैमिनीयमतसागरपारगतम्। अवितथवृत्तविप्रजनपूजितपादयुगं पितरमहं नमामि बहुरूपमुदारमतिम् ॥ अस्य नामान्तरमाह कोऽपीति। कोऽपि छान्दसः कर्णपूरः तदेव अवितथमेव नर्कटकं नाम



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



छन्दः कथयति ॥ यदि हि सप्तभिर्दशभिश्च यतिस्तर्हि नर्दटकं नाम छन्दो वद। यथा—जय जय जह्यजामजितदोषगृभीतगुणां त्वमसि यदात्मना समवरुद्धसमस्तभगः। अगजगदोकसामखिलशक्त्यवबोधक ते क्वचिदजयात्मना च चरतोऽनुचरेन्निगमः' ॥ [ भाग० १०।८७।१४ ] ॥ ११ ॥

अपि कथयन्ति तत्सुकवयो ननु नर्कुटकं
धृतवति हस्तयोः पुरटनिर्मितसत्कटकम् ।
वसुशरसागरैस्तु विरतिर्यदि कोकिलकं
हयरससागरैर्यतिमपीच्छति सत्तिलकम् ॥ १२ ॥

ननु भोः तन्नर्कटकमेव नर्कुटकं नाम छन्दः कथयन्ति नतु पूर्व्वतो भेदं कुर्व्वन्ति नामान्तरमेव कल्पयन्तीत्यर्थः। हे हस्तयोः सुवर्णनिर्म्मितप्रशस्तवलयं बिभ्रति तु किन्तु अष्टाभिः षड्भिश्चतुर्भिश्च यदि विरतिर्भवति तदा कोकिलकं नाम छन्दो भवति। लक्षणस्यास्य तृतीयचरणमेवोदाहरणम्। इदमपि चरणद्वयम् यथा—'त्वमसि यदन्तराण्डनिचया ननु सावरणाः। ख इव रजांसि वान्ति वयसा सह यच्छ्रुतयः।' इह कोकिलके सत्तिलकं कवीनां तिलकं सप्तभिः षड्भिश्चतुर्भिश्च यतिमिच्छति। लक्षणस्यास्य चतुर्थचरणमेवोदाहरणम्। इदमपि यथा—'लसदरुणेक्षणं मधुरभाषणमोदकरं मधुसमयागमे सरसकेलिभिरुल्लसितम्। अलिललितद्युति रविसुतावनकोकिलकं ननु कलयामि तं सखि सदा हृदि नन्दसुतम्' ॥ [ गङ्गादासः ] ॥ १२ ॥

आद्यचतुर्थषष्ठदशमा ननु यदि गुरव-
स्तद्वदथान्तिमश्च सति दिङ्मुनिषु च विरतिः।
ह्रीमति जायते यदि महाकविमुखगलितं
भावय वंशपत्रपतितं सुकृतवति तदा ॥ १३ ॥

हे सति हे ह्रीमति लज्जावति हे सुकृतवति पुण्यशीले यदि प्रथमचतुर्थषष्ठदशमा वर्णा गुरवो भवन्ति अथ अनन्तरम् अन्तिमश्च सप्तदशश्च वर्णस्तद्वद्गुरुर्जायते दशसु सप्तसु च विरतिः तदा महाकवीनां मुखाद्गलितं निःसृतं



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वंशपत्रपतितं नाम छन्दो भावय चिन्तय। यथा—'सम्प्रति लब्धजन्म शनकैः कथमपि लघुनि क्षीणपयस्युपेयुषि भिदां जलधरपटले। खण्डितविग्रहं बलभिदो धनुरिह विविधाः पूरयितुं भवन्ति विभवः शिखरमणिरुचः'॥ [ गङ्गादासः ]॥ यथा वा—'दर्प्पणनिर्म्मलासु पतिते घनतिमिरमुषि ज्योतिषि रौप्यभित्तिषु पुनः प्रतिफलति मुहुः। व्रीडमसम्मुखोऽपि रमणैरपहृतवसनाः काञ्चनकन्दरासु तरुणीरिह नयति रविः॥ [ माघः ४।६७ ]॥ १३॥

यतो द्वितीयतुर्य्यकं तथा सषष्ठमष्टमञ्च
सदाशमं त्रयोदशान्तिमान्तिमञ्च षोड़शञ्च।
गुरु प्रयुज्यते यदा विशेषशास्त्रदर्शिभिः स
निवेदितः सुगात्रि पञ्चचामरो बुधैस्तदैव॥ १४॥

हे सुगात्रि यतो यस्मिन् द्वितीयं चतुर्थं षष्ठमष्टमं दशममेव दाशमं स्वार्थेऽण् तेन सह वर्त्तमानं त्रयोदशान्तिमान्तिमं द्वादशं चतुर्दशं तथा षोड़शञ्चाक्षरं यदा गुरु प्रयुज्यते तदा विशेषशास्त्रदर्शिभिर्बुधैः स पञ्चचामरो नाम छन्दः निवेदितः विज्ञापितः। यथा—'अधिष्ठितस्य सैंहिकासनं समुच्चकैर्नृपस्य स्वपार्श्ववर्त्तिनोः करप्रपञ्चचामरानिलेन। युधिष्ठिरस्य वीजितस्य वैभवं परं विलोक्य सुयोधनः सुदुर्म्मना अभूदभूतपूर्व्व एव॥ पादान्ते यतिः॥ १४॥

इत्यत्यष्टिकुसुमम्॥

---

## १८। धृतिः।

दीर्घञ्चेत्प्रथमत्रयं मतिमति ज्ञानदुग्धाम्भोधे
षष्ठञ्चाष्टममक्षरं सुवदने द्वादशञ्चाप्येवम्।
यत्र स्यात्तदनु त्रयोदशमथान्यानि चत्वार्य्यङ्घ्रे-
र्मासस्वादयतिर्भवेद्वदति तं कोविदः शार्दूलम्॥ १॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ धृतिं लक्षयति। हे मतिमति हे ज्ञानदुग्धाम्भोधे हे सुवदने यत्र प्रथमत्रयं प्रथमद्वितीयतृतीयं षष्ठम् अष्टमं द्वादशं त्रयोदशम् अङ्घ्रेरन्त्यानि चत्वारि पञ्चदशषोडशसप्तदशाष्टादशानि अक्षराणि गुरूणि भवन्ति द्वादशैः षड्भिश्च यदि यतिर्भवति कोविदः पण्डितस्तं शार्दूलं नाम छन्दो वदति। यथा—शार्दूलं विकटाननं खरनखं तीक्ष्णदंष्ट्रं क्रूरं दृष्ट्वा प्राणहरं सुनिष्ठुरतरं नेह मे भीस्तादृक्। संसारस्य गतिं वितर्क्य कुटिलां जायतेऽलं यादृक् तत्तां वारयितुं भजे स्थिरमनाः कृष्णपादाम्भोजम् ॥ १ ॥

यस्यामाद्याः सप्त स्युर्ननु वर्णाः सुन्दरि दीर्घा दीर्घा-
पाङ्गीदृक् कम्बुग्रीवे दशमश्चैकादश इत्थम्भूयः।
मुक्ताकाञ्चीयुक्ते द्वादश एवश्चान्तगताश्चत्वार-
श्चञ्चच्छिञ्जन्मञ्जीराञ्चितपादेऽगीयत मञ्जीरा सा ॥ २ ॥

हे सुन्दरि हे कम्बुग्रीवे त्रिरेखकण्ठे हे दीर्घापाङ्गि आयतनेत्रान्ते हे मुक्ताकाञ्चीयुक्ते मुक्तामेखलाशालिनि चञ्चद्भ्यां चलद्भ्यां शिञ्जद्भ्यामव्यक्तशब्दं कुर्वद्भ्यां मञ्जीराभ्यां नूपुराभ्याम् अञ्चितौ शोभितौ पादौ यस्यास्तथाभूते यस्याम् आद्याः प्रथमाः सप्तवर्णाः प्रथमद्वितीयतृतीयचतुर्थपञ्चमषष्ठसप्तमास्तथा दशमैकादशद्वादशा अन्तगता अन्त्याश्चत्वारः पञ्चदशषोडशसप्तदशाष्टादशाश्च यदि दीर्घा भवेयुस्तदा कविभिः सा मञ्जीरा नाम छन्दः अगीयत अकथ्यत। यथा—'प्रौढध्वान्तेऽगर्जद्वारि दधाराधारिणि काले गत्वा त्यक्त्वा प्राणानग्रे कौलश्समाचारानपि हित्वा यान्ती। कृत्वा सारङ्गाक्षी साहसमुच्चैः केलिनिकुञ्जं शून्यं दृष्ट्वा प्रागत्राणं भावि कथं वा नाथ वद प्रेयस्याः' ॥ [ वाणीभूषणम् ] ॥ पादान्ते यतिः ॥ २ ॥

चत्वारश्चेत्प्रथममलघवो भवन्ति ततः परो
यस्मिन्नेकादश उदितयशस्त्रयोदशषोडशौ।
तद्वच्चाष्टादश उत भवति श्रुतिस्वरवाजिभि-
र्विश्रामश्चेत्कविकुलतिलकैश्चलन्तदुदीरितम ॥ ३ ॥





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे उदितयशः यत्र प्रथममादौ चत्वारः प्रथमद्वितीयतृतीयचतुर्था एकादश-त्रयोदशषोड़शाष्टादशाश्च वर्णा अलघवो गुरवो भवन्ति चेद्यदि चतुर्भिः सप्तभिः सप्तभिश्च विश्रामः स्यात्तदा कविकुलतिलकैरुत् चलं नाम छन्द उदीरित-मुक्तम्। यथा—यावद्बुद्धिर्विषयसुखपरा न मोहतमस्तरेद्यावच्चित्तं पवनमिव चलं समाधिपराङ्मुखम्। यावच्चात्मा शमदमतपसो व्रजेद्विरतिं परां भ्रातस्तावन्न खलु भवभयाद्भवेत्तव निष्कृतिः॥ ३॥

यस्यां लघु सतृतीयकं स्याच्चतुर्थन्तथा पञ्चमं
षष्ठं सुमुखि तथाष्टमं तद्वदेकादशञ्चाक्षरम्।
तद्वद्यदि च चतुर्दशं षोड़शान्त्यं ग्रहाङ्कैर्यतिः
सिन्दूरतिलकलालसे ज्ञायतां तर्हि सा लालसा॥ ४॥

हे सुमुखि हे सिन्दूरतिलकलालसे यस्यां तृतीयं चतुर्थं पञ्चमं षष्ठमष्टम-मेकादशं चतुर्दशं षोड़शस्यान्त्यं सप्तदशञ्चाक्षरं यदि लघु स्यात् नवभिर्नवभिश्च यतिर्भवेत्तर्हि सा लालसा नाम छन्दो ज्ञायताम्। यथा—कूजत्परभृतसन्ततं सन्ततस्वान्तसन्तोषदं गुञ्जन्मधुकरमञ्जुलं वञ्जुलानां निकुञ्जं घनम्। पश्यन्मदनमदातुरो वल्लवीभिर्यथेच्छं परोऽप्युद्यद्विधुवनलालसायुग्भिरक्रीड़दाद्यो हरिः॥ ४॥

कान्ते यत्र लघु भवति तुर्यन्तथा पञ्चमं षष्ठं
तद्व[त्षष्ठपर]मपि तत[स्तत्परं] भक्तितत्त्वज्ञे।
एवन्तन्वि [नवमदशमान्त्यात्परं] षोड़शाद्यञ्चे-
द्विश्रामश्च जलधिर्निवारैर्भवेच्चित्रलेखा सा॥ ५॥

हे कान्ते हे भक्तितत्त्वज्ञे हे तन्वि यत्र चतुर्थं पञ्चमं षष्ठं सप्तममष्टमं नवमं द्वादशं षोड़शाद्यं पञ्चदशञ्चाक्षरं लघु भवति चतुर्भिः सप्तभिः पुनः सप्तभिर्विश्रामश्च चेत् तदा सा चित्रलेखा नाम छन्दो भवेत्। यथा—आसीद्बाण इति शतदशकबाहुः समस्तासुराधीशः श्रीकण्ठाङ्घ्रियुगलपरिचर्या-समासादितस्वृद्धिः। पुत्र्या तस्य रुचिरमनिरुद्धं वरं चित्रलेखा सुङ्निध्यानीय सपदि निजसख्योपया योजयाञ्चक्रे॥ ५॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यस्यादौ दीर्घा वर्णा यदि जाताः सप्त चारुस्वभावे
सत्काव्यालापप्रीते दशमश्चैकादशो द्वादशश्च ।
एवञ्चेज्जातौ द्वौ षोड़शपूर्वौ तद्वदन्त्यौ च वर्णौ
विश्रामो यस्मिन् बाणर्त्तुहयैः स्यात् सिंहविस्फूर्जितन्तत् ॥ ६ ॥

हे सुचारुस्वभावे हे सत्काव्यालापप्रीते यस्यादौ सप्त वर्णा यदि दीर्घाः स्युः दशम एकादशो द्वादशः षोड़शस्य पूर्व्वौ द्वौ चतुर्द्दशपञ्चदशावन्त्यौ च द्वौ वर्णौ सप्तदशाष्टादशौ यदि तद्वद्दीर्घाः स्युः यत्र पञ्चभिः षड्भिः सप्तभिश्च विश्रामः तत् सिंहविस्फूर्जितं नाम छन्दः स्यात् । यथा—बाहू आस्फोट्या-भीक्ष्णम्प्रतिगन्तुः सिंहविस्फूर्जिताभं श्रुत्वा निर्ह्रादं गोपेश्वरसूनोः सीरपाणेश्च धीरम् । रङ्गे मल्लानां चानूरमुखानां कंसराजस्य चाभूत् सद्यो हृत्कम्पः कर्णाश्च विहीनाः श्रौतशक्त्यातिमात्रम् ॥ ६ ॥

चत्वारः प्राग्वरतनु गुरवः स्युस्तथैकादशश्चे-
द्वर्णः सद्वादश उपचितपुण्ये तथा षोड़शाद्यौ ।
तद्वच्चान्त्यावपि षड्तुरसैः स्याद्विरामश्च यस्यां
छन्दोविद्भिर्ध्रुवमिह कथिता सा तदा चन्द्रलेखा ॥ ७ ॥

हे वरतनु हे उपचितपुण्ये सञ्चितसुकृते चेत् यदि प्राक् प्रथमं चत्वारो वर्णाः प्रथमद्वितीयतृतीयचतुर्था वर्णा गुरवः स्युस्तथा एकादशो द्वादशश्च षोड़शस्याद्यौ चतुर्द्दशः पञ्चदशश्च अन्त्यौ सप्तदशः अष्टादशश्च वर्णा गुरवः स्युः यस्यां षड्भिः षड्भिः षड्भिश्च विरामः स्यात्तदा इह जगति छन्दोविद्भिः कविभिः ध्रुवं सा चन्द्रलेखा नाम छन्दः कथिता । यथा—यस्मिन् कस्मिन्निह सुमहति वस्तून्यसत्कर्याशयानां नाकाङ्क्षाल्पेऽपि च भवति पुनः सेति लोके प्रसिद्धिः । पश्य भ्रातर्विधुमशकलविम्बं विमुञ्चन् विदूरादीशानो मूर्द्धनि तनुमपि धत्ते नवां चन्द्रलेखाम् ॥ ७ ॥

मन्दाक्रान्ताप्रतिचरणसहो तुर्य्यतः पञ्चमादौ
लध्वेकञ्चेदधिकमसितदृग्वीक्षते श्लक्ष्णवाचे ।
कूर्चोन्मीलन्नवदिवसकरस्पर्द्धिसिन्दूरविन्दो
विश्रामश्चेच्छ्रुतिमुनितुरगैः स्यात्तदा चित्रलेखा ॥ ८ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अहो असितदृक् हे कृष्णनयने हे श्लक्ष्णवाचे कोमलवाणीके वाचेत्या-वन्तम् 'आपञ्चैव हलन्तानां यथा वाचा निशा दिशे'ति भागुरिसतदर्शनात्। कूर्चे भ्रुवोर्मध्ये उन्मीलन्दीप्यमानो नवदिवसकरस्पर्द्धी प्राभातिकसूर्य्यसदृशः सिन्दूरविन्दुः सिन्दूरतिलकं यस्याः तथाभूते मन्दाक्रान्तायाः प्रतिचरणं चतुर्षु चरणेषु तुर्य्यतश्चतुर्थवर्णात् परं पञ्चमादौ पञ्चमवर्णस्यादौ यद्येकं लघ्वक्षरम् अधिकं वीक्षते अवलोकयति चतुर्भिः सप्तभिः सप्तभिश्च यदि विश्रामस्तदा चित्रलेखा नाम छन्दः स्यात्। यथा—"शङ्केऽमुष्मिन् जगति मृगदृशां साररूपं यदासीदाकृष्येदं व्रजयुवतिसभा वेधसा सा व्यधायि। नैतादृक् चेत् कथमुदधिसुतामन्तरेणाच्युतस्य प्रीतं तस्यां नयनयुगमभूच्चित्रलेखाद्भुतायाम्' ॥ [ गङ्गादासः ] ॥ ८ ॥

मन्दाक्रान्तायाश्चरणपुरतो दीर्घ एकोऽधिकश्चे-
द्वाणस्वादाश्वैर्भवति विरतिर्यत्र कान्ते तदास्मिन्।
मालामालाभिर्विलसितगले बन्धुजीवारुणोष्ठि
प्राग्भिर्विद्वद्भिः कुसुमितलतावेल्लिता भाषिता सा ॥ ९ ॥

हे कान्ते हे मालामालाभिर्विलसितगले मालाश्रेणीदेदीप्यमानकण्ठे हे बन्धुजीवारुणोष्ठि बन्धूकपुष्पारुणाधरे मन्दाक्रान्तायाश्चरणानां पादानां पुरतः अग्रे यद्येको दीर्घोऽधिकः प्रयुज्यते यत्र च पञ्चभिः षड्भिः सप्तभिश्च विरतिर्भवति तदा प्राग्भिर्विद्वद्भिराद्यैः कविभिरस्मिन् जगति सा कुसुमितलतावेल्लिता नाम छन्दो भाषिता कथिता। यथा—'क्रीडत्कालिन्दीललितलहरीवारिभिर्दाक्षिणात्यैर्वातैः खेलद्भिः कुसुमितलतावेल्लिता मन्दमन्दम्। भृङ्गालीगीतैः किसलयकरोल्लासितैर्लास्यलक्ष्मीं तन्वाना चेतो रभसतरलं चक्रपाणेश्चकार' ॥ [ गङ्गादासः ] ॥ ९ ॥

प्रथममगुरुकाणि षट् चेत् प्रियेऽथाष्टमैकादशं
भवति सति चतुर्दशश्चाक्षरं षोडशस्यान्तिमम्।
दशमुखमुखदिग्गजैः स्याद्यतिर्यत्र च प्राक्तनैः
कविकुलतिलकैः सुशीले स नाराच उच्छब्दितः ॥ १० ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे प्रिये हे सति हे सुशीले यदि प्रथममादौ षट् प्रथमद्वितीयतृतीय-चतुर्थपञ्चमषष्ठानि अक्षराणि अगुरुकानि लघूनि भवन्ति अथ एकादशं चतुर्दशं षोडशस्यान्तिमं सप्तदशञ्चाक्षरं लघु भवति यत्र च दशमुखस्य रावणस्य मुखैर्दशभिर्दिग्गजैरष्टाभिश्च यदि यतिर्व्विरतिः स्याच्चेत्तदा प्राक्तनैः पूर्व्वजैः कविकुलतिलकैः स नाराचो नाम छन्द उच्छन्दितः कथितः। यथा—कृतसकलजगद्विबोधोऽवधूतान्धकारोदयः क्षयितकुमुदतारकश्रीर्वियोगं नयन् कामिनः। बहुतरगुणदर्शनादभ्युपेताल्पदोषः कृती तव वरद करोतु सुप्रातमह्नामयं नायकः॥ यथा वा—'रघुपतिरपि जातवेदो विशुद्धां प्रगृह्य प्रियां प्रियसुहृदि बिभीषणे सङ्गमय्य श्रियं वैरिणः। रविसुतसहितेन तेनानुयातः सौमित्रिणा भुजविजितविमानरत्नाधिरूढः प्रतस्थे पुरीम्' ॥ [ रघु १२।१०४ ] ॥ १० ॥

चत्वारश्चेत्प्रथममलघवो यत्र प्रबालाधरे
सञ्जायन्ते त्रय उ दशमतः पश्चान्मनोहारिणि।
एवञ्चातुर्दशपरसहितौ द्वौ षोडशाष्टादशौ
वेदैरश्वैर्मुनिभिरपि यतिस्तत्केसराख्यम्मतम् ॥ ११ ॥

हे प्रबालाधरे नवपल्लवोष्ठि हे मनोहारिणि चित्ताकर्षिणि यत्र प्रथममादौ चत्वारो वर्णा अलघवो गुरवः सञ्जायन्ते भवन्ति एवं दशमतः दशमात्पश्चात्परे त्रयः एकादशद्वादशत्रयोदशा वर्णाः चतुर्दश एव चातुर्दशः स्वार्थेऽण् तस्मात् परः पञ्चदशस्तेन सहितौ षोडशाष्टादशौ पञ्चदशषोडशाष्टादशाश्च वर्णा यत्र-लघवः चतुर्भिः सप्तभिः सप्तभिश्च यतिः तदा कविभिस्तत्केसराख्यं केसर-नाम छन्दो मतम्। यथा—अग्रे मूलेऽप्यतिशयधवलं मध्ये तु गौरारुणं वर्णं बिभ्रत्सितकमलदलान्तर्वीजकोषाद्बहिः। फुल्लाब्जानां ललितपरिमलं लीनालि सम्पश्यतः कस्य प्रीतिर्न भवति हृदये वातेरितं केसरम् ॥ ११ ॥

स्मितसुभगमुखाम्बुजे यत्र सञ्जायते सप्तमं
सनवमदशमं तथा द्वादशं तत्परश्चाक्षरम्।
गुरु तदनु चतुर्दशान्त्यं तथा षोडशाष्टादशे
सुतनु भवति सा महामालिनी वा महामालिका ॥ १२ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



स्मितेन ईषद्धास्येन सुभगं सुन्दरं मुखाम्बुजं मुखपद्मं यस्या हे तथाभूते हे सुतनु यत्र सप्तमं नवमं दशमं द्वादशं तत्परं द्वादशतत्परं त्रयोदशं चतुर्दशान्त्यं पञ्चदशं षोड़शम् अष्टादशश्चाक्षरं गुरु भवति सा महामालिनी नाम महामालिका नाम वा छन्दो भवति। यथा—चरणनिहितनूपुरा श्रोणिदेशस्फुरन्मेखला भृगुपदपदशोभिवक्षा गलालम्बिसत्कौस्तुभा। मणिमयमुकुटत्विषाश्लिष्टमूर्द्धा महामालिनी परिहिततड़िदम्बरा श्रीहरेर्मूर्त्तिरव्याज्जगत्॥ पादान्ते यतिः॥ १२॥

प्रथमसगुरवः प्रिये यत्र षट् स्युस्ततश्चाष्टम-
स्तदनु सुतनु तद्वदेकादशश्चेत्सुवर्णप्रभे।
[वरयुवति] चतुर्दशः षोड़शान्त्योऽथ वर्णस्तथा
त्र्यधिकदशशरैर्यतिश्चेत्तदा सा स्मृता तारका॥ १३॥

हे प्रिये हे सुतनु हे सुवर्णप्रभे हे [वरयुवति युवतीश्रेष्ठे] प्रथमसमादौ यत्र षड्वर्णा अगुरवो लघवः स्युस्ततश्चाष्टमस्तदनु एकादशस्तद्वत् लघुः चतुर्दशः अथ षोड़शस्त्वान्त्यः सप्तदशश्च वर्णस्तथा लघुश्चेत् त्रिभिरधिकैर्दशभिस्त्रयोदशभिः पञ्चभिश्च यदि यतिस्तदा सूरिभिः सा तारका नाम छन्दः स्मृताभिहिता। यथा—अधिगतसरहस्यवेदात्मतत्त्वं दयाम्भोनिधिं शमदमनिरतं परब्रह्मनिष्ठं विना श्रीगुरुम्। न दवयितुमलं नृणां मोहराशिं विपश्चित्तर्त रजनीकरमृते किमीशा विहन्तुं तमस्तारकाः॥ १३॥

गुणवति यदि सप्तमः स्याद्गुरुर्भव्यभूषाञ्चिते
सनवमदशमश्च वर्णस्तथा नव्यकाव्यप्रिये।
श्रृत[जरति] चतुर्दशस्यादिमावन्तिमौ चान्तिमो
दशगजविरतिश्च यस्यां तदा कीर्त्तिता सा लसा॥ १४॥

हे गुणवति हे भव्याभिर्मङ्गलीभिर्भुषाभिरञ्चिते शोभिते नव्यं यत्काव्यं कवित्वं काव्यशास्त्रं वा प्रियं यस्या हे नव्यकाव्यप्रिये हे श्रृत[जरति] क्षीराज्यादिपाके [वृद्धे] दक्षे इत्यर्थः यदि सप्तमः नवमेन सहितो दशमश्च वर्णो गुरुः स्यात्तथा तद्वत् चतुर्दशस्यादिमौ द्वादशत्रयोदशौ अन्तिमौ पञ्चदशषोड़शौ च तथा



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अन्तिमोऽष्टादशश्च वर्णो गुरुः स्यात् यस्यान्दशभिरष्टाभिश्च विरतिस्तदा सा लसा नाम छन्दः कीर्त्तिता। यथा—अभिनवशिखिपिच्छगुच्छच्छटाबद्धचूला लसा विमलकुटिलनीलकेशा सुवेशास्तवंशा हरेः। व्रजयुवतिरतस्य मूर्त्तिर्नवीनाभ्रनीलच्छविर्भवतु भवविधीन्द्रवन्द्या पुनर्जन्मनाशाय मे ॥ १४ ॥

अयि यदि पञ्चमः प्रियतमे सप्तमैकादशो
भवति गुरुस्त्रयोदशयुतौ चतुर्दशाद्दावपि।
अथ चरणान्तिमोऽपि च तथा महेश्वरैः सप्तभि-
र्भवति यतिर्यदा कविगणैः स्मृतं तदा नन्दनम् ॥ १५ ॥

अयि भोः प्रियतमे यदि सप्तम एकादशत्रयोदशयुतौ त्रयोदशसहितौ चतुर्दशात् परौ द्वावपि पञ्चदशषोडशावपि अथ चरणान्तिमोऽष्टादशोऽपि वर्णो यदि गुरुर्भवति एकादशैः सप्तभिश्च यदा यतिर्भवति तदा सा कविगणै र्नन्दनन्नाम छन्दः स्मृतम् अभिमतम्। यथा—अहत धनेश्वरस्य युधि यः समेतमायोधनं तमहमितो विलोक्य विबुधैः कृतोत्तमायोधनम्। विभयमदेन निह्नुतभियातिमात्रसम्पन्नकं व्यथयति सत्पथादधिगताथवेह सम्पन्नकम् ॥ [भट्टिः १०।३६] ॥ १५ ॥

प्रथमसगुरव. प्रिये षग् ननु साष्टमैकादशः
सततरचितगद्यपद्ये सुमते तथा द्वादशः।
अपि तदनु चतुर्दशः स्यादथ षोड़शान्त्यस्तथा
दशसु वसुषु चावसानं किल यत्र सा स्याल्लता ॥ १६ ॥

हे प्रिये हे सततरचितगद्यपद्ये सततं सर्व्वदा रचिते गुम्फिते गद्यपद्ये यया इति विग्रहः। हे सुमते यत्र प्रथममादौ षड्वर्णा लघवो भवन्ति अष्टम एकादशः द्वादशस्तथा लघुः तदनु चतुर्दशोऽपि लघुः अथ षोड़शस्यान्त्यः सप्तदशश्च वर्णस्तथा तद्वल्लघुः स्यात् दशसु अष्टसु चावसानं विश्रामः स्यात्सा लता नाम छन्दो भवेत्। यथा—सखि हरिचरितं पुरस्ते कथयामि किं पूर्व्वतः सकलमवगतं त्वया यः सुविदन्नपीहैवसाम्। हरिहरि विजने निकुञ्जे प्रतिपालयन्तीं प्रियं किल निखिलनिशामनैषील्ललितालतामण्डपे ॥ १६ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



भवति यत्र गुरु चतुर्थनवमकश्चतुर्दशं
तदनु सप्तदशकपूर्व्वपरगतन्तथाक्षरम् ।
कमलपत्रसदृशनेत्र उरुमते सदीलितं
सुदति चित्रमतिभिरत्र मरकतन्तदीरितम् ॥ १७ ॥

हे कमलदलतुलितलोचने हे विपुलबुद्धे हे सुदति यत्र चतुर्थं नवमं चतुर्दशं सप्तदशस्य पूर्व्वगतं षोडशं परगतमष्टादशञ्चाक्षरं गुरु भवति अत्र जगति चित्रमतिभिः विचित्रबुद्धिभिः सद्भिः कविभिरीलितं स्तुतं तत् मरकतं नाम छन्द ईरितमुक्तम् । यथा—मरकताश्मरुचिहरेण मृदुतरेण वर्ष्मणा कलितवंशचलवतं-सविमलपीतवाससा । स्वरुणपाणिपदतलेन शिखिशिखण्डमौलिना रसमवेत्य हरिरुपेत्य हृदय आविरस्तु मे ॥ १७ ॥

तन्वि स्यात्प्रथमत्रयं गुरु षष्ठकाष्टमसक्षरं
यत्रैकादशमीदृशं तदनु त्रयोदशषोडशम् ।
अन्त्यश्चाष्टभिरिन्द्रियैर्विशिखैर्यदा विरतिस्तदा
धीरास्तद्धरिणप्लुतं ब्रुवतेऽथवा हरिणप्लुताम् ॥ १८ ॥

हे तन्वि यत्र प्रथमत्रयं प्रथमद्वितीयतृतीयं षष्ठम् अष्टममेकादशं त्रयोदशं षोडशम् अन्त्यमष्टादशञ्चाक्षरं गुरु स्यात् अष्टभिः पञ्चभिः पञ्चभिश्च यदा विरतिर्जायते तदा बहुदर्शिनो विद्वांसस्तत् हरिणप्लुतं नाम अथवा हरिणप्लुतां नाम छन्दो ब्रुवते भाषन्ते । यथा—हासं सन्दधतं मनाग्घरिणप्लुतस्य विलोकनाद् गोपीशास्तनपायिनं व्रजवासिनां सुखदायिनम् । धृत्वा तर्णकबालधिं सहसोत्थितं पतितं पुनर्जानुभ्यामजिरेचरं कमपि श्रये परतः परम् ॥ १८ ॥

चेत्प्रथमकमक्षरमथ षष्ठकसहितन्तथै-
कादशमथ षोडशमपि चाञ्चितनयनाञ्चले ।
यत्र सुदति कङ्कणवति धीमति गुरु जायते-
ष्टादशमपि तर्हि तदिह हीरकमिति भाषते ॥ १९ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अञ्चितौ नयनाञ्चलौ नेत्रप्रान्तौ यस्यास्तथाभूते हे सुदति हे कङ्कणवति हे धीमति यत्र प्रथमं षष्ठमेकादशं षोडशमष्टादशमप्यक्षरं गुरु जायते भवति इह जगति कविस्तत् हीरकमिति हीरकं नाम छन्दो भाषते कथयति। यथा—'ध्यानमटत साम पठत नाम रटत केशवं धर्म्ममयत शर्म्म भजत कर्म्म सृजत शैशवम्। द्वारभवनदाररमणसारचयनवासना तावदयति नावतरति कालनृपतिशासना'॥ [वाणीभूषणम्]। पादान्ते यतिः॥ १९॥

आदिमं सतृतीयकं ननु षष्ठमष्टममक्षरं
द्वादशादिगतान्तिमे अपि तद्वदेव हि षोडशम्।
यत्र सप्तदशान्तिमश्च गुरु प्रयोजितमीक्ष्यते
चर्च्चरीरचनापटीयसि चर्च्चरीति वदन्ति ताम्॥ २०॥

हे चर्च्चर्यास्तन्नामकगीतेस्तन्नामकच्छन्दसो वा रचनायां निर्म्मितौ पटीयसि पटुतरे यत्र प्रथमं तृतीयं षष्ठम् अष्टमं द्वादशस्य आदिगतम् एकादशम् अन्तिमं त्रयोदशं षोडशम् सप्तदशस्य अन्तिमम् अष्टादशञ्चाक्षरं गुरु प्रयोजितम् ईक्ष्यते अवलोक्यते तां कवयश्चर्चरीति चर्चरी नाम छन्दो वदन्ति। यथा—'कोकिलाकलकूजितं न शृणोषि सम्प्रति सादरं सन्यसे तिमिरापहारिसुधाकरं न सुधाकरम्। दूरमुज्झसि भूषणं विकलासि चन्दनमारुते कस्य पुण्यफलेन सुन्दरि मन्दिरं न सुखायते'॥ [वाणीभूषणम्]। यथा वा—रत्नसानुशरासनं रजताद्रिशृङ्गनिकेतनं शिञ्जिनीकृतपन्नगेश्वरमच्युतानलसायकम्। क्षिप्रदग्धपुरत्रयं त्रिदशालयैरभिवन्दितं चन्द्रशेखरमाश्रये मम किङ्करिष्यति वै यमः॥ पादान्ते यतिः॥ २०॥

आद्यचतुर्थषष्ठसहितमलघु भवति यदा-
ष्टादशमक्षरं वरतरुणि सकरुणहृदये।
धर्म्मपरायणे भुवनविदितचरितकवय-
स्तद्ब्रुवते तदा भ्रमरपदकममलचरिते॥ २१॥

हे वरतरुणि हे सदयहृदये हे धर्म्मपरायणे धार्म्मिकि यदा प्रथमचतुर्थषष्ठसहितमष्टादशमक्षरमलघु भवति तदा भुवनेषु विदितं ख्यातं चरितं येषां ते कवयः



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तत् भ्रमरपदकं नाम छन्दः सम्ब्रुवते सङ्कथयन्ते। यथा—प्रस्फुटमालती-कुसुममति मृदुलमिति मृषा काव्यकृतो वदन्त्यविदितपदछनिहितगुणाः। भ्रातरिदं विभावय मनसि यदि हि तदनृतं तर्हि कथं दृढभ्रमरपदकमिह वहति तत् ॥ पादान्ते यतिः ॥ २१ ॥

तुर्य्यम्पञ्चमसप्तमञ्च नवमं ह्रस्वं सदशमं
यत्रैकादशकञ्चतुर्दशपरत्रीणि प्रियतमे।
आदित्यैश्शिखिवाहनस्य वदनैः स्यात्तन्वि विरति-
स्तद्वृत्तं कथयन्ति पूर्व्वकवयः शार्दूलललितम् ॥ २२ ॥

हे प्रियतमे यत्र चतुर्थं पञ्चमं सप्तमं नवमं दशममेकादशञ्चाक्षरं ह्रस्वं स्यात् तथा चतुर्दशपरत्रीणि चतुर्दशात् पराणि त्रीण्यक्षराणि पञ्चदशषोडशसप्तदशानि ह्रस्वानि स्युः हे तन्वि द्वादशभिः षड्भिश्च विरतिस्तद्वृत्तं पूर्व्वकवयः शार्दूलललितं नाम कथयन्ति। यथा—'कृत्वा कंसमृगे पराक्रमविधिं शार्दूलललितं यश्चक्रे क्षितिभारकारिषु दरं चैद्यप्रभृतिषु। सन्तोषम्परमन्तु देहनिवहे त्रैलोक्यशरणं श्रेयो नः स तनोत्वपारमहिमा लक्ष्मीप्रियतमः' ॥ [ गङ्गादासः ] ॥ २२ ॥

यदि प्राच्यो ह्रस्वः कमलनयने पञ्चाथ गुरव-
स्ततो ह्रस्वाः पञ्च प्रणयिणि पुनर्दीर्घास्त्रय इतः।
परे ह्रस्वा वर्णास्त्रय उत गुरुश्चैकः सति यतौ
रसैस्तर्कैस्तर्कैर्भवति विरतिः सा स्यान्ननु सुधा ॥ २३ ॥

हे कमलनयने हे प्रणयिनि प्रणयवति हे सति यदि प्राच्यः प्रथमो वर्णो ह्रस्वः अथानन्तरं पञ्च वर्णा द्वितीयतृतीयचतुर्थपञ्चमषष्ठा गुरवस्ततोऽनन्तरं पञ्च वर्णाः सप्तमाष्टमनवमदशमैकादशा ह्रस्वाः पुनश्च त्रयो वर्णा द्वादशत्रयोदशचतुर्दशा दीर्घाः इतः चतुर्दशात्परे त्रयो वर्णाः पञ्चदशषोडशसप्तदशा ह्रस्वा उत एवम् एकः अष्टादशश्च वर्णो गुरुः षड्भिः षड्भिः षड्भिश्च यत्र विरतिस्तदा सा सुधा नाम छन्दो भवति। यथा—विसृष्टे विण्मूत्रे विशदकरणे देहे च सुलघौ विशुद्धे



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



चोद्गारे हृदि सुविमले वाते च सरति। तथान्नश्रद्धायां क्षुदुपगमने कुक्षौ च शिथिले प्रदेयस्त्वाहारो भवति भिषजा कालः स तु मतः॥ २३॥

आदिगतञ्च चतुर्थकमप्यथ सप्तमदशमं
द्वादशतश्च परस्थितमन्तगतञ्च सुनयने।
यत्र भवेद्गुरु कोकिलनादिनि सत्कृतसवय-
स्तां ननु हंसगते ब्रुवतेऽश्वगतिं वरकवयः॥ २४॥

हे सुनयने हे कोकिलनादिनि हे हंसगते सत्कृता आदृता सवयाः वयस्या यया सा हे सत्कृतसवयः यत्र यस्यामादिगतं प्रथमं चतुर्थं सप्तमं दशमं द्वादशात्परस्थितं त्रयोदशम् अन्तगतं पादान्तस्थमष्टादशञ्चाक्षरं यत्र गुरु भवेत् वरकवयस्ताम् अश्वगतिं नाम छन्दो ब्रुवते। यथा—मौञ्ज्युपवीतककृष्ण-मृगाजिनसूत्रकुशधरस्तीर्थपयः परिपूर्णकमण्डलुशोभिवरकरः। द्वारवतीं हरिदश्व-गतिप्रतिजित्वरगमनः सात्त्वतसुसुपवीणयितुं किल देवमुनिरगात्॥ पादान्ते यतिः॥ २४॥

इति धृतिकुसुमम्।

---

## १६। अतिधृतिः।

विहितौ यत्र प्रथमौ ह्रस्वावयि निर्द्वन्द्वे द्वौ स्वच्छन्दे
गुरवो वर्णास्त्रय उद्भासिन्यथ वर्णौ द्वौ ह्रस्वौ स्याताम्।
रुचिरापाङ्गि त्रय उद्धर्षिण्यथ दीर्घाः स्युर्ह्रस्वौ च द्वा-
वथ सप्त स्युर्गुरवश्चान्ते स्मर तं शम्भुं नाम्ना कान्ते॥ १॥

अथातिधृतिं लक्षयति विहितावित्यादिभिः। हे निर्द्वन्द्वे अकलहे अथवा सुखदुःखादि-विकाररहिते हे स्वच्छन्दे स्वाधीने हे उद्भासिनि उद्भासनशीले रुचिरोपाङ्गो नेत्रान्तो यस्याः सा हे रुचिरापाङ्गि हे उद्धर्षिणि उत्सववति हे कान्ते यत्र प्रथमौ द्वौ प्रथमद्वितीयौ वर्णौ ह्रस्वौ विहितौ अथ त्रयो वर्णास्तृतीय-चतुर्थपञ्चमा गुरवो विहिता अथ द्वौ वर्णौ षष्ठसप्तमौ ह्रस्वौ भवेताम् अथ त्रयो वर्णा अष्टमनवमदशमा दीर्घाः स्युः अथ द्वौ वर्णौ एकादशद्वादशौ ह्रस्वौ स्याताम्



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ अन्ते शेषे सप्त वर्णास्त्रयोदशचतुर्दशपञ्चदशषोडशसप्तदशाष्टादशोनविंशा गुरवः स्युस्तं नाम्ना [ संज्ञया ] शम्भुं शम्भुन्नाम छन्दः स्मर भावय । यथा—'जय मायामानवमूर्त्ते दानववंशध्वंसव्यापारी बलमाद्यद्रावणहत्याकारण लङ्का-लक्ष्मीसंहारी। कृतकंसध्वंसनकर्म्मशंसन गोगोपीगोपानन्दी बलिलक्ष्मीनाशन-लीलावामन दैत्यश्रेणीनिष्कन्दी॥ [ वाणीभूषणम् ] । पादान्ते यतिः ॥ १ ॥

लघुर्यस्यामाद्यः कमलवदने पञ्च दीर्घा भवेयु-
स्ततः पञ्चादीर्घास्तदनु च गुरू द्वौ ततो ह्रस्व एकः ।
प्रियेथ द्वौ दीर्घौ लघुरपि ततो द्वौ गुरू चापि कान्ते
रसर्त्वश्वैश्छिन्ना मसृणचिकुरे कीर्त्तिता विस्मिता सा ॥ २ ॥

हे कमलवदने हे प्रिये हे कान्ते हे मसृणचिकुरे स्निग्धकेशे यस्यां प्रथमो वर्णो ह्रस्वो भवेत् ततः परे पञ्च वर्णा दीर्घा भवेयुः ततः पराः पञ्च वर्णा अदीर्घा ह्रस्वाः तदनु च द्वौ वर्णौ गुरू ततः पर एको वर्णो ह्रस्वः अथ द्वौ वर्णौ दीर्घौ एको वर्णो लघुरपि ततः परौ द्वौ वर्णौ गुरू षड्भिः षड्भिः सप्तभिश्च यदि छिन्ना विरतियुता तदा सा विस्मिता नाम छन्दः कीर्त्तिता । यथा—श्रिया जुष्टं दीव्यैः सपटहरवैरन्वितं पुष्पवर्षैर्वपुष्टश्चैद्यस्य क्षणमृषिगणैः स्तूयमानं निरीय । प्रकाशेनाकाशे दिनकरकरान् विक्षिपद्विस्मिताक्षैर्नरेन्द्रैरौपेन्द्रं वपुरथ विशद्धा-सवीक्षाम्बभूवे' ॥ [ माघः २०।७६ ] । यथा वा—'उदञ्चत्कावेरीलहरीषु परिष्वङ्गरङ्गे लुठन्तः कुहूकण्ठीकण्ठीरवरवलवत्रासितप्रोषितेभाः । अमी चैत्रे मैत्रावरुणितरुणीकेलिकङ्केल्लिमल्लीचलद्वल्लीहल्लीसकसुरभयश्चण्डि चञ्चन्ति वाताः' ॥ [ गङ्गादासः ] ॥ २ ॥

सतृष्णं श्रीविष्णोर्मनसि चरणौ शोणिमानन्दधानौ
दधाने गोपेश्याः सरुचि धयतश्चूचुकम्मन्दमन्दम् ।
कुशाग्रीयप्रज्ञे सुनयनयने भव्यकाव्यार्थविज्ञे
ब्रुवन्तीमामेवाभिनवकवयो मेघविस्फूर्जिताख्याम् ॥ ३ ॥

ग्रन्थान्तरेऽस्या नामान्तरमाह—सतृष्णमिति । हे सरुचि साभिलाषं यथा स्यात्तथा गोपेश्या यशोदायाश्चूचुकं स्तनाग्रं मन्दमन्दं शनैः शनैर्धयतः पिबतः



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



श्रीविष्णोः श्रीकृष्णस्य शोणिमानन्दधानौ अरुणतां धारयन्तौ चरणौ मनसि हृदये सतृष्णं सस्पृहं दधाने धारयन्ति 'कुशाग्राच्छ' [ पां ५।३।१०५ ] इति छः 'आयन्नेयी'[ पां ७।१।२ ]त्यादिना छस्येयादेशः कुशाग्रीया प्रज्ञा यस्या हे कुशाग्रीयप्रज्ञे कुशाग्रसदृशतीक्ष्णबुद्धे सुनयः सुनीतिरेव नयनं चक्षुर्यस्याः हे सुनयनयने हे भव्यकाव्यार्थविज्ञे सत्काव्यार्थनिष्णाते अभिनवाः पिङ्गलादिमुने-रर्वाचीनाः कवय इमामेव विस्मितामेव मेघविस्फूर्जिताख्यां ब्रुवन्ति। सर्वमन्यत्-पूर्ववत् ॥ ३ ॥

यत्र स्युर्ह्रस्वाः शशधरवदने पञ्चमादक्षरात् षट्
वर्णाः कान्ते चेदरुणकरतले तन्वि चातुर्दशश्च।
आसीनश्चाष्टादशपुर उरुधीस्तर्हि तत्पुष्पदाम
स्याद्बाणैरश्वैर्मुनिभिरथ यतिश्चाथवा फुल्लदाम ॥ ४ ॥

हे शशधरवदने हे कान्ते हे अरुणकरतले हे तन्वि हे उरुधीर्विपुलप्रज्ञे यत्र पञ्चमादक्षरात्परे षड् वर्णा ह्रस्वाः स्युः षष्ठसप्तमनवमदशमैकादशा लघवो भवेयुः चतुर्दश एव चातुर्दशः स्वार्थेऽण् स च वर्णो ह्रस्वः स्यात् अष्टादशस्य पुरः अग्रे आसीनः स्थितः सप्तदश इति यावत् वर्णश्च ह्रस्वः भवेच्चेत् अथ यदि पञ्चभिः सप्तभिः सप्तभिश्च यतिस्तर्हि तत् पुष्पदाम फुल्लदाम नाम वा छन्दो भवेत्। यथा—'शश्वल्लोकानां प्रकटितकदनं ध्वस्तमालोक्य कंसं हृष्यच्चेतोभिस्त्रिदिव-वसतिभिर्व्योमसंस्थैर्विमुक्तम्। सुग्धामोदेन स्थगितदशदिगाभोगमाहूतभृङ्गं मौलौ दैत्यारेर्न्यपतदनुपमं स्वस्तरोः फुल्लदाम' ॥ [ गङ्गादासः ] ॥ ४ ॥

गुरु यत्र तृतीयकषष्ठमथो नवमञ्च तथा द्वा-
दशपञ्चदशं व्रतचारिणि सप्तदशान्तिमयुग्मम्।
नवपल्लवपाणितले शतपत्रदलायतनेत्रे
नरसिंहमिह प्रवदन्ति बुधास्तमगाधविबोधे ॥ ५ ॥

हे व्रतचारिणि हे नवपल्लवपाणितले हे शतपत्रदलायतनेत्रे कमलदलदीर्घ-नयने हे अगाधविबोध अपरिच्छिन्नविज्ञाने यत्र तृतीयं षष्ठं नवमं द्वादशं पञ्चदशं



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सप्तदशस्यान्त्यद्वयम् अष्टादशमूनविंशञ्चाक्षरं गुरु भवति इह जगति बुधास्तं नरसिंहं नाम छन्दः प्रवदन्ति। यथा—उररीकृतयज्ञवराहतनोर्दशनोद्धृतभूमेः समरेऽग्रजजीवहरस्य हरेः खसुतस्य च नाशे। कृतयत्नकयाधुपतिर्नखरेण दृढोरो दधता नरसिंहतनुं हरिणाशु विदार्य्य निजघ्ने॥ पादान्ते यतिः॥ ५॥

यस्याद्यत्रयमक्षरं गुरु भवेत्प्रेष्ठे सषष्ठाष्टमं
तद्वद्द्वादशकं त्रयोदशमथो चातुर्दशं षोड़शम्।
तद्वत्सप्तदशोनविंशमपि तच्छार्दूलशाटं यदि
च्छेदो द्वादशसप्तभिर्भवति वा शार्दूलविक्रीड़ितम्॥ ६॥

हे प्रेष्ठे प्रियतमे यस्य आद्यत्रयं प्रथमद्वितीयतृतीयं षष्ठमष्टमं द्वादशं त्रयोदशञ्चतुर्दशं षोड़शं सप्तदशम् ऊनविंशमप्यक्षरं गुरु भवेत् द्वादशभिः सप्तभिश्च यदि छेदो विरामस्तदा तत् शार्दूलशाटं नाम अथवा शार्दूलविक्रीड़ितं नामच्छन्दो भवति। यथा—'चञ्चत् पञ्चशिखण्डमण्डलमसौ मुग्धप्रगल्भः शिशुर्गम्भीरश्च मनोहरश्च सहजश्रीलक्ष्मरूपन्दधत्। दृग्दृष्टोऽपि हरत्ययं मम मनः सौन्दर्य्यसारश्रिया हन्तव्यस्तु तथापि नाम धिगहो वीरव्रतक्रूरताम्॥ ६॥

लघुर्यस्यामाद्यस्तदनु गुरवः पञ्चानवद्याङ्गि चेत्
ततो ह्रस्वाः पञ्च त्रय इह पुनर्दीर्घास्तथैको गुरुः।
पुनश्च द्वौ दीर्घौ तदनु च लघुश्चैकस्तथैको गुरु-
रसैस्तर्कैरश्वैर्भवति विरतिश्छाया तदा सा भवेत्॥ ७॥

अनवद्यमनिन्द्यमङ्गं यस्या हे अनवद्याङ्गि यस्यां प्रथमो वर्णो लघुस्तदनु पञ्च वर्णा गुरवस्ततः पश्चात्पञ्च वर्णा ह्रस्वाः पुनस्त्रयो वर्णा दीर्घास्तथा एको वर्णो गुरुः पुनश्च द्वौ वर्णौ दीर्घौ तदनु तत्पश्चादेको वर्णो लघुस्तथा एको वर्णो गुरुश्चेत् भवति षड्भिः षड्भिः सप्तभिश्च विरतिस्तदा सा छाया नाम छन्दो भवेत्। यथा—'अभीष्टं जुष्टो यो वितरति लसद्धोश्चारुशाखोज्ज्वलः स्फुरन्नानारत्नस्तवकिततनुश्चित्रांशुकालम्बितः। न यस्याङ्घ्रेश्छायामुपगतवतां संसारतीव्रातपस्तनोति प्रोत्तापं जयति जगतां कंसारिकल्पद्रुमः'॥ [गङ्गादासः]।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



गुरू रसैरित्यत्र गुरुः रसैरिति स्थिते 'रो री'[ पा ८।३।१४ ]ति रलोपः 'ढ्रलोपे पूर्वस्य दीर्घोऽण' [ पा ६।३।१११ ] इति दीर्घः ॥ ७ ॥

यत्राद्या वर्णा वरतनु गुरवः पञ्च प्रयुक्ताः प्रिये
सत्स्रग्धम्मिल्ले तदनु ननु तथैवैकादशाच्चेत्त्रयः ।
राजन्नेपथ्ये यदि भवत उभावष्टादशाद्यौ तथै-
वान्त्यश्च च्छेदः शरमुनितुरगैस्तत्तर्हि बिम्बम्भवेत् ॥ ८ ॥

हे वरतनु प्रिये सत्स्रजः समाल्या धम्मिल्लाः संयतकेशा यस्या हे सत्स्रग्धम्मिल्ले राजद्दीप्यमानं नेपथ्यं प्रसाधनं यस्या हे राजन्नेपथ्ये यत्र आद्याः पञ्च वर्णास्तथा एकादशात्परे त्रयो द्वादशत्रयोदशचतुर्दशा वर्णा गुरवः प्रयुक्ता भवन्ति अष्टादशस्य आद्यौ पूर्वौ द्वौ च षोडशसप्तदशौ गुरू भवतः अन्त्य ऊनविंशश्च वर्णो यदि गुरुरेव भवति पञ्चभिः सप्तभिः सप्तभिश्च छेदो विश्रामस्तर्हि तत् बिम्बं नाम छन्दो भवेत् । यथा—कस्तूरीपत्त्रावलिललितकलङ्कोल्लासि सत्तारकं वृत्तं ग्लौबिम्बं विशदसकलं शुद्धस्मितज्योत्स्नकम् । राधाया वक्त्रं विनिमिषनयनं कृष्णस्य सम्पश्यतो रात्रिं व्युष्टामप्यनधिगतवतो रात्रिभ्रमोऽभूत्पुनः ॥ ८ ॥

अलघु भवति सप्तमं तथाष्टमान्तिमञ्च यत्र चे-
दपि ननु दशमान्तिमं त्रयोदशञ्चतुर्दशान्तिमम् ।
तदनु सुतनु षोडशान्तिमं तथोनविंशमक्षरं
कुसुमशबलकुन्तले तदा स पञ्चचामरो भवेत् ॥ ९ ॥

ननु भोः सुतनु कुसुमैः पुष्पैः शबलाश्चित्राः कुन्तलाः केशा यस्याः हे तथाभूते यदि सप्तमम् अष्टमस्यान्त्यं नवमम् अथ दशमस्यान्तिमम् एकादशं त्रयोदशं चतुर्दशस्यान्तिमं पञ्चदशं षोडशस्यान्तिमं सप्तदशं तथा ऊनविंशञ्चाक्षरम् अलघु गुरु भवति तदा स पञ्चचामरो नाम छन्दो भवेत् । यथा—घनमसृणतमासितप्रपञ्चचामरोत्तमाङ्गजा मदकलगजराजगामिनी शरन्मरालनादिनी । अतिनिविडकलिन्दनन्दिनीतटाटवीविहारिणी व्रजकुलपतिसूनुना समं जगत्पुनातु राधिका ॥ पादान्ते यतिः ॥ ९ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



द्वितीयं यत्र गुरु भवति तद्वत्तृतीयचतुर्थकं
तथैवैकादशमपि च तदन्त्यन्तथैव चतुर्दशम् ।
तथा चेत्सप्तदशासहितमष्टादशान्त्यमयि प्रिये
यतिश्चेन्मासमुनिभिरपि सा स्यात्तदा मणिमञ्जरी ॥ १० ॥

भोः प्रिये यत्र द्वितीयं तृतीयं चतुर्थम् एकादशं तस्य एकादशस्यान्त्यं द्वादशं चतुर्दशं सप्तदशम् अष्टादशस्यान्त्यमूनविंशञ्चाक्षरं गुरु भवति द्वादशभिः सप्तभिरपि यदि यतिः तदा सा मणिमञ्जरी नाम छन्दः स्यात् । यथा—प्रणामावर्जित-सुरपतिभास्वच्छिखामणिमञ्जरीमयूखापिञ्जरितचरणपद्मः पितामहमोहनः । दध-द्गोवर्द्धनगिरिमतिभारं शिलीन्ध्रमिवार्भकः स्वगोपीद्गोकुलनिखिलजनान् यः सः नोऽवतु सर्व्वतः ॥ १० ॥

भवत्याद्यो ह्रस्वस्तदनुगुरवः प्रिये ननु पञ्च चेत्
ततः पञ्चादीर्घा अथ गुरुरथो लघुश्च ततो गुरु ।
ततश्च द्वौ ह्रस्वावथ गुरुरथो लघुश्च ततो गुरु-
रसत्वंश्वैर्य्यस्यां विरतिरपि सा तदा मकरन्दिका ॥ ११ ॥

यदि प्रथमो वर्णो ह्रस्वो भवति तदनु पञ्च वर्णा गुरवः ततः परे पञ्च वर्णा अदीर्घा लघवः अथ एको वर्णो गुरुः अथ एको वर्णो लघुस्ततः पर एको गुरुस्ततः-परौ द्वौ ह्रस्वौ अथ एको गुरुः अथ एको लघुस्तत एको गुरुश्च भवति षड्भि षड्भिः सप्तभिरपि यस्यां विरतिस्तदा सा मकरन्दिका नाम छन्दो भवति । यथा—अहो पश्यान्याय्यं स्फुटकमलिनीस्रवन्मकरन्दिकामनास्वाद्योन्मुग्धो मधु-करपतिः सुरूपविलोकनात् । प्रसूने पालाशे प्रकृतिचपलः पतन्नलब्धमधुः हताशः सन्तप्तो गुरुतरतृषा शुचा च विनिर्गतः ॥ ११ ॥

द्वितीयमथ षष्ठकं गुरु भवेद् यत्राष्टमञ्च ततो
विलोचनजितासितोत्पलदले चेद्वादशञ्च तथा ।
त्रयोदशाचतुर्दशन्तदनु चेत्तद्वच्च षोडशकं
तथान्तगतमष्टभिः श्रुतिहयैश्छेदः समुद्रतता ॥ १२ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



विलोचनाभ्यां जितम् असितोत्पलस्य नीलोत्पलस्य दलं पत्रं यया हे तथाभूते यत्र यस्यां द्वितीयं षष्ठम् अष्टमं द्वादशं त्रयोदशञ्चतुर्दशं षोड़शम् अन्तगतम् ऊनविंशञ्चाक्षरं यदि गुरु भवेत् अष्टभिश्चतुर्भिः सप्तभिश्च यदि विश्रामस्तदा समुद्रतता नाम छन्दो भवति। यथा—पुरन्दररिपून् घ्नतोऽखिल-जगत्कार्य्याणि साधयतस्त्रिलोकमवतो भयात् स्वसुहृदं राज्ये निवेशयतः। मृतं द्विजसुतं पुनस्त्वसुयुतं कृत्वा समर्पयतो रथोत्त यदोः कुलाम्बुजरवेः कीर्त्तिः समुद्रतता ॥१२॥

यत्र स्यात्प्राक्चतुष्कं गुरु सुतनु तथा षष्ठसहितं
सच्छीले सप्तमम्भो नवरसरचनैकान्तनिपुणे।
द्वे तद्वत् षोड़शाद्ये अथ रुचिररुचेऽष्टादशपरं
विश्रामश्चेत्तुरङ्गैर्मुनिभिरथ शरैः सेह सुरसा॥ १३॥

हे सच्छीले सत्स्वभावे हे नवानां रसानां शृङ्गारवीरकरुणादीनां रचनाया-मेकान्तनिपुणे अतीव दक्षे हे रुचिररुचे मनोहरद्युते यत्र यस्यां प्राक्चतुष्कं प्रथमचतुष्कं प्रथमद्वितीयतृतीयचतुर्थमिति यावत् तथा षष्ठं सप्तमं षोड़शस्य आद्ये चतुर्दशपञ्चदशे द्वे अक्षरे अष्टादशात्परम् ऊनविंशञ्चाक्षरं गुरु भवति सप्तभिः सप्तभिः पञ्चभिश्च यदि विश्रामः सा सुरसा नाम छन्दो भवति। यथा—'कामक्रीड़ासतृष्णो मधुसमयसमारम्भरभसात् कालिन्दीकूलकुञ्जे विहरण-कुतुकाकृष्टहृदयः। गोविन्दो वल्लवीनामधररसमुधां प्राप्य सुरसां शङ्के पीयूष-पानैः प्रचुरकृतसुखं व्यस्मरदसौ॥' [ गङ्गादासः ]॥ १३॥

प्रथममगुरव उरुमते दश तदनु च ननु
सततजपितमनु गुरुरेक उड़परुचितनु।
अमलकमलमुखि लघवोऽष्ट च पुनरपि सति
यत इह तमभिदधति चन्द्र इति विभववति॥ १४॥

हे उरुमते विपुलबुद्धे सततं सर्व्वदा जपितो मनुर्मन्त्रो यया हे तथाभूते उड़पस्य नक्षत्रेशस्य रुचिरिव रुचिर्य्यस्यास्तादृशी तनूर्यस्या हे उड़ुपरुचितनु





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे अमलकमलमुखि हे सति हे विभववति सम्पत्तिशालिनि यतो यत्र प्रथममादौ दश अगुरवः लघवः तदनु च एको वर्णो गुरुः पुनरपि अष्ट च वर्णा गुरवो भवन्ति इह जगति तं कवयश्चन्द्र इति चन्द्रो नाम छन्दः अभिदधति कथयन्ति। यथा—अनुपहतकुसुमरसतुल्यमिदमधरदलममृतमयवचनमिदमालि विफलयसि चल। यदपि यदुरमणपदमीशमुनिहृदि लुठति तदपि तव रति-वलितमेत्य वनतटमटति ॥' [ वाणीभूषणम् ] ॥ पादान्ते यतिः ॥ १४ ॥

प्रथमत उदयति यदि सति गुणवति लघुकं
द्विगुणितनवविमितमथ तु गुरु विरतिभवम्।
निजरुचिविरचितसुरुचिरमृगमदतिलके
सुमुखि तत ऋषय इह समभिदधति धवलाम् ॥ १५ ॥

हे सति हे गुणवति निजरुच्या स्वाभिलाषेण विरचितं सुरुचिरं मृगमद-तिलकं कस्तूरीतिलकं यया हे तथाभूते हे सुमुखि यदि प्रथमत आदौ द्विगुणितैर्द्विगुणीकृतैर्नवभिरष्टादशभिरित्यर्थः मितं लघुकं लघु अक्षरम् उदयति अथ विरतिभवमूनविंशमक्षरं गुरु ततः तदा ऋषयः पिङ्गलादय इह जगति धवलां नाम छन्दः समभिदधति ब्रुवन्ति। यथा—'उपगत इह सुरभिसमय इति सुमुखि वदे निधुवनमधि सह पिब मधु जहि रुषमपदे। कमलनयनमनुसर सखि तव रभसपरं प्रियतमगृहगमनमुचितमनुचितमपरम्॥' [ वाणी भूषणम् ] ॥ १५ ॥

इत्यतिधृतिकुसुमम्।

---

## २०। कृतिः।

लघु यत्र प्रथमद्वयं स्थिरवचः स्यात्पञ्चमं षष्ठकं
स्थिरचित्तेऽक्षरमष्टमं सदशमञ्चैकादशं द्वादशम्।
ललने षोड़शमूनविंशमपि तन्मत्तेभविक्रीड़ितं
विरतिश्चेद्भवति त्रयोदशहयैर्मत्तेभलीलागते ॥ १ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



स्थिरं वचो यस्या हे स्थिरवचः हे स्थिरचित्ते हे ललने हे मत्तेभलीलागते मत्तमातङ्गलीलागमने यत्र प्रथमद्वयं प्रथमं द्वितीयं तथा पञ्चमं षष्ठम् अष्टमं दशमम् एकादशं द्वादशं षोडशम् ऊनविंशमप्यक्षरं लघु स्यात् त्रयोदशैः सप्तभिश्च यदि विरतिस्तदा तत् मत्तेभविक्रीडितं नाम छन्दो भवति। यथा—पथि कंसाय वहन्तमग्र्यवसनान्यभ्येत्य निर्णेजकं विनयेनार्थितयोग्य-धौतवसनो नन्दात्मजोऽभीक्ष्णशः। अथ तद्भर्त्सनवाणविद्धहृदयो हत्वैन-माच्छादनं सुविचित्रं परिधाय रङ्गमगमन्मत्तेभविक्रीडितम्॥ १॥

सतृतीयकं यदि पञ्चमं भवति प्रिये गुरु साष्टमं
दशमन्त्रयोदशकञ्च पञ्चदशञ्च सप्तदशान्तिमम्।
अपि विंशकं श्रुतसत्कथे श्रुतिगामिदृक् श्रुतिशर्मदा-
ध्ययनक्लमालसलोचने ननु गीतिका कथिता तदा॥ २॥

हे प्रिये श्रुता आकर्णिता सत्कथा यया तथाभूते श्रुतिगामिन्यौ श्रवण-पर्य्यन्ते दृशौ चक्षुषी यस्यास्तथाभूते अध्ययनक्लमेनालसे लोचने यस्यास्तथाभूते यदि तृतीयं पञ्चमम् अष्टमं दशमं त्रयोदशं पञ्चदशं सप्तदशस्यान्तिमम् अष्टादशं विंशञ्चाप्यक्षरं गुरु भवति तदा श्रुतिशर्म्मदा श्रवणसुखदा गीतिका गीता नाम छन्दः कथिता। यथा—'करतालचञ्चलकङ्कणस्वनमिश्रणेन मनोरमा, रमणीयवेणुनिनादरङ्गिमसङ्गमेन सुखावहा। बहुलानुरागनिवासरासससमुद्भवा तव रागिणं, विदधौ हरिं खलु वल्लवीजनचारुचामरगीतिका॥' [ गङ्गादासः ]॥ यथा वा—'अलमीश पावकपाकशासन वारिजासनसेवया, [ गमितं जनु-र्जनकात्मजापतिरप्यसेव्यत नो मया। करुणापयोनिधिरेक एव सरोजपत्र-विलोचनः, स परं करिष्यति दुःखमोषमशेषदुर्गतिमोचनः॥' वाणीभूषणम् ]॥ २॥

चत्वारो यत्र दीर्घाः प्रथममथ चेत्षष्ठकः सप्तमोऽपि
द्वौ तद्वद्द्वादशान्त्यौ शशिमुखि ततोऽष्टादशाद्यौ तथान्त्यौ।
रम्भास्तम्भोरु फुल्लाम्बुजसुवदने देवविप्रानुरक्ते
विद्वद्वृन्दैस्तदा सा सुतनु भणिता शुद्धवंश्ये सुवंशा॥ ३॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे शशिमुखि रम्भायास्तन्नामककदल्याः स्तम्भौ काण्डौ इव ऊरू यस्या हे तथाभूते 'ऊरूत्तरपदादौपम्ये' [ पां ४।१।६९ ] इत्यूङ् 'अम्बार्थनद्यो' [ पां ७।३।१०७ ] रिति ह्रस्वः। फुल्लमम्बुजमिव सुशोभनं वदनं यस्यास्तथाभूते देवाश्च विप्राश्च तेषु अनुरक्ते अनुरागान्विते हे सुतनु शुद्धवंशे भवा इत्यर्थे यत्। हे शुद्धवंश्ये यत्र प्रथमम् आदौ चत्वारो वर्णा दीर्घा अथ षष्ठः सप्तमो द्वादशस्यान्त्यौ द्वौ त्रयोदशचतुर्दशौ ततोऽष्टादशस्य आद्यौ पूर्व्वौ षोडशसप्तदशौ तथा अन्त्यौ ऊनविंशविंशौ च यदा दीर्घा भवन्ति तदा विद्वद्वृन्दैः सा सुवंशा नाम छन्दः भणिता शब्दिता। यथा—'आकर्ण्य श्रीमुरारेर्मधुमधुरिमस्पर्द्धमानं सुवंशादुत्पन्नाया मुरल्याः क्वणितमसकृन्नामसङ्केतवल्याः। मुक्ताकाञ्चीप्रपञ्चाञ्चितवरकुचश्रोणिभारावनम्रा श्रीराधा मन्दमन्दं मनसिजरुजाजर्जराऽगान्निकुञ्जम्॥ पादान्ते यतिः॥ ३॥

अविश्रान्तं कान्ते हरिचरणरते श्लक्ष्णगम्भीरभाषे
सदा पातिव्रत्यव्रतधुतदुरिते स्मेरमुग्धाननश्रीः।
यदैकः षष्ठान्ते ननु लघुरधिको जायते विस्मितायाः
रसष्यश्वैर्यस्यां भवति च विरतिस्तर्हि शोभा भवेत्सा॥ ४॥

हे कान्ते अविश्रान्तमनवरतं हरेश्चरणयो रतिः आसक्तिर्य्यस्या हे तथाभूते श्लक्ष्णा कोमला गम्भीरा धीरा भाषा वाणी यस्याः तथाभूते सदा शश्वत् पातिव्रत्यरूपव्रतेन धुतम् उत्सारितं कल्मषं यथा तथाभूते स्मेरेण ईषद्धासेन मुग्धा मनोहरा आननस्य श्रीर्मुखशोभा यस्यास्तथाभूते यदा विस्मितायाः पूर्व्वोक्तायाश्छन्दसः षष्ठान्ते षष्ठवर्णस्यावसाने एको लघुवर्णः अधिको जायते यस्याञ्च षड्भिः सप्तभिः सप्तभिश्च विरतिर्भवति तर्हि सा शोभा नाम छन्दो भवेत्। यथा—सदा मूलोन्मीलत्सरसिजयुगला मध्यनम्रा फलाभ्यां, तयोरूर्द्ध्वं राजत्तरलकिसलयाश्लिष्टसुस्निग्धशाखा। लसन्मुक्तारक्तोत्पलकुवलयवच्चन्द्रविम्बाञ्चिताग्रा, महाशोभा मौलौ मिलदलिपटलैः कृष्ण सा कापि वल्ली॥ [ गङ्गादासः ]॥ ४॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यस्याम्भोः पञ्चमः स्याल्लघुरलघुमते पूर्णेन्दुविशदे
वर्णाः षट् सप्तमाच्चेत्सहजमधुरवागम्भोजवदने।
एवञ्चेत्षोड़शाच्च त्रय इह विरतिर्द्वीपाम्बुधिरसै-
र्विद्वद्वृन्दन्तदा तां वदति सुवदनां वा सौम्यवदनाम्॥ ५॥

भोः अलघुमते गुरुप्रज्ञे हे पूर्णचन्द्रनिर्म्मले सहजा स्वाभाविकी मधुरा मिष्टा वाक् वाणी यस्यास्तथाभूते हे अम्भोजवदने पद्ममुखि यस्यां पञ्चमो वर्णो लघुःस्यात्सप्तमाद्वर्णात्परे षड्वर्णा अष्टमनवमदशमैकादशद्वादशत्रयोदशा लघवः स्युः षोड़शाच्च परे त्रयो वर्णाः सप्तदशाष्टादशोनविंशा यदि एवं लघवः स्युः सप्तभिः सप्तभिः षड्भिश्च इह विरतिर्भवति तदा विद्वत्समूहस्तां सुवदनां नाम सौम्यवदनां वा नाम छन्दो वदति। यथा—उत्तुङ्गास्तुङ्गकूलं स्रुतमदसलिलाः प्रस्यन्दिसलिलं, श्यामाः श्यामोपकण्ठद्रुममलिमुखराः कल्लोल-मुखरम्। स्रोतः खातावसीदत्तटमुरुदशनैरुत्सादिततटाः, शोणं सिन्दूरशोणा मम गजपतयः पास्यन्ति शतशः॥ ५॥

चञ्चलाङ्घ्रिशेषतो गुरूत्तरं लघु क्रमेण चाक्षरस्य
चेच्चतुष्कमब्जगन्धितुण्डमण्डले विभाति तन्वि यत्र।
काव्यपुण्डरीकषण्डबोधनप्रचण्डभानुपण्डितैस्त-
दुक्तमञ्जनाक्तनेत्रि वृत्तनाम गण्डकाथ वा सुगात्रि॥ ६॥

अब्जस्य पद्मस्य गन्ध इव गन्धो यस्येति बहुव्रीहौ 'उपमानाच्चे' [ पां ५।४।१३७ ]ति गन्धस्य इदन्तादेशः। अब्जगन्धि तुण्डमण्डलं मुखबिम्बं यस्यास्तथाभूते हे सुगात्रि यत्र चञ्चलाया अङ्घ्रिशेषतः पादशेषे गुरोरुत्तरं लघु इति क्रमेण चेद्यदि अक्षरस्य वर्णस्य चतुष्कं विभाति तत्काव्यरूपपद्मबोधने सूर्य्यसदृशपण्डितैः वृत्तनाम अथवा गण्डका नाम छन्द उक्तम् अभिहितम्। यथा—'चित्रवृत्तलीलया निसर्गरम्यदेहरूपविभ्रमेण, राजमानसद्वयोविलाससम्पदा कलाकुतूहलेन। यः समं व्रजाबलाजनैः सुराङ्गनानिभैः सुखं समेत्य, विष्णुरुल्ललास चित्तपद्मकोषषट्पदः स मे सदास्तु॥' [ गङ्गादासः ]॥ पादान्ते यतिः॥ ६॥

इति कृतिकुसुमम्।

---



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

## २१ । प्रकृतिः ।

यत्र स्यात्पञ्चमश्चेज्जलजमुखि लघुः सप्तमादुत्तरस्था
वर्णाः षण्मुग्धमुग्धे मणिमयरशने षोड़शश्चोनविंशः ।
विश्रामः कान्तकान्ते त्रिमुनिषु ललितावेल्लितभ्रूलते स्या-
च्छन्दोविद्भिस्तदोक्ता प्रकृतिमधुरवाक् स्रग्धरे स्रग्धरा सा ॥१॥

हे जलजमुखि पद्मवदने हे मुग्धमुग्धे अतिसुन्दरि मणिमयी रत्नमयी रशना यस्यास्तथाभूते हे कान्तकान्ते मनोहरच्छवे ललिते कोमले आवेल्लिते ईषद्वक्रे भ्रूलते यस्याः तथाभूते प्रकृत्या निसर्गेण मधुरा वाक् यस्यास्तथाभूते हे स्रग्धरे मालाधारिणि यत्र यस्यां पञ्चमो वर्णो लघुर्यदि भवेत्सप्तमाद्वर्णा-दुत्तरस्थाः परस्थाः षड्वर्णा लघवः षोड़श ऊनविंशश्च वर्णो लघुः त्रिमुनिषु सप्तसु सप्तसु सप्तसु च विश्रामश्चेत्तदा छन्दोविद्भिः छान्दसैः सा स्रग्धरा नाम छन्द उक्ता । यथा—शीर्णघ्राणाङ्घ्रिपाणीन् व्रणिभिरपघनैर्घर्घराव्यक्तघोषै,-र्दीर्घाघ्राता नघौघैः पुनरपि घटयत्येक उल्लाघयन् यः । धर्म्मांशोस्तस्य वोन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्तेर्दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमङ्घो विघातम् ॥ यथा वा—गौराङ्गी क्षीणमध्यारुणकरचरणा सान्द्रसिन्दूरविन्दूर-क्तोष्ठी रक्तकण्ठी घनकुचयुगला चारुजङ्घा निरङ्घाः । श्रीभारा हारिहारा प्रकटकटितटा रामरम्भोपमोरूश्चापभ्रूः शुभ्रहासा तव भवतु सखे स्रग्धरा कापि मुग्धा ॥ १ ॥

आद्यचतुर्थषष्ठमथ यदि गुरु शुद्धसुवर्णसवर्णे
तन्वि पुनश्चतुर्दशममलतनु सप्तदशञ्च तथा चेत् ।
विंशमथो तदन्तिममपि भवति यत्र तथाक्षरमाद्यै-
र्धीरवरैस्तदा जगति मतिमति सङ्कथितः स नरेन्द्रः ॥ २ ॥

शुद्धस्य निर्म्मलस्य सुवर्णस्य समानो वर्णो यस्याः तथाभूते 'ज्योतिर्जन-पदे' [ पां ६।३।८५ ] त्यादिना वर्णे उत्तरपदे समानस्य सः । हे तन्वि हे



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अमलतनु हे मतिमति यत्र आद्यं चतुर्थं षष्ठं चतुर्दशं सप्तदशं विंशं तदन्तिमं विंशस्यान्तिममप्यक्षरम् एकविंशमिति यावत् गुरु भवति चेत्तदा जगति धीरवरैः स नरेन्द्रो नाम छन्दः सङ्कथितः। यथा—पङ्कजकोषपानपर-मधुकरगीतमनोज्ञतडागः पञ्चमनादवादपरभृतकाननलसत्परभागः। वल्लभविप्र-युक्तकुलवरतनुजीवनदानदुरन्तः, किङ्करवाणि वक्षि मम सहचरि सन्निधिमेति वसन्तः॥ पादान्ते यतिः॥ २॥

अयि गुरु पञ्चमं भवति चेत् कमलाक्षि तथैव सप्तमं
ननु दशमान्तिमञ्च सचतुर्दश सप्तदशोनविंशकम्।
अपि च तथैकविंशतितमं यदिरुद्रहरिद्यतिस्तदा
स्फुटसरसीरुहोपममुखीह बुधैः सरसीति गीयते॥ ३॥

हे कमलाक्षि हे स्फुटसरसीरुहोपममुखि विकसितपद्मसदृशवदने यदि पञ्चमं सप्तमं दशमान्तिमम् एकादशं चतुर्दशं सप्तदशम् ऊनविंशम् एकविंशञ्चाक्षरं गुरु चेद्भवति तदा बुधैः इह सरसी इति सरसी नाम छन्दो गीयते। यथा—'तुरगशताकुलस्य परितः परमेकतुरङ्गजन्मनः, प्रमथितभूभृतः प्रतिपथं मथितस्य भृशम्महीभृता। परिचलतो बलानुजबलस्य पुरः सततं धृत-श्रियश्चिरगलितधियो जलनिधेश्च तदाभवदन्तरम्महत्॥' [ माघः ३।८२ ]॥३॥

अभिदधतेऽत्र सिद्धकमिमां बधु सिद्धविशुद्धलालसे
सलिलनिधिं सुधाधिककथाधुरधारिणि वा धृतश्रियम्।
शशिवदनाञ्च काञ्चनरुचे ननु केचन पञ्चकावलीं
ललितपदावलीविरचनाचतुरे चतुराननोपमाः॥ ४॥

अस्या नामान्तराण्यप्याह अभिदधते इत्यादिना। हे बधु सिद्धा निर्वृत्ता विशुद्धा लालसा महतीच्छा यस्यास्तथाभूते कथाया धूर्भारः कथाधुरः 'ऋक्पुरब्धु [ पां ५।४।७४ ] रित्यकारः सुधाया अपि अधिकायाः कथाया धुरं भारं धारयितुं शीलमस्याः 'सुप्यजातौ णिनिस्ताच्छील्य' [ पां ३।२।७८ ]



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



इति णिनिः 'ऋन्नेभ्यो ङीबि'[ पां ४।१।५ ]ति ङीप् 'अम्बार्थनद्यो' [ पां ७।३।१०७ ]रिति ह्रस्वः हे सुधाधिककथाधुरधारिणि हे काञ्चनरुचे स्वर्णद्युते हे ललितायाः पदावल्या विरचनायां निर्म्माणे दक्षे चतुरे चतुराननोपमा ब्रह्मणा तुल्याः केचन कवयः इमां सरसीं सिद्धकं नाम सलिलनिधिं नाम धृतश्रियं नाम शशिवदनां नाम पञ्चकावलीं वा नाम अत्र जगति अभिदधते कथयन्ति ॥ ४ ॥

इति प्रकृतिप्रकरणम् ।

---

## २२ । आकृतिः ।

सतृतीयपञ्चमोऽपि प्रभवति हि गुरुः सप्तमोऽथाष्टमश्चे-
दयिते चतुर्दशान्त्यावपि सुतनु तथाष्टादशश्चोनविंशः ।
पुनरेकविंश इत्थन्तरुणि सकरुणेऽन्त्यश्च यस्यां विरामो
वसुसप्तवाजिभिश्चेत्कविभिरभिहिता सा महास्रग्धराख्या ॥ १ ॥

हे दयिते हे सुतनु हे तरुणि हे सकरुणे सदये यस्यां तृतीयः पञ्चमः सप्तमः अष्टमः चतुर्दशस्य अन्त्यौ पञ्चदशषोडशौ अष्टादश ऊनविंश एकविंशः अन्त्यः द्वाविंशश्च वर्णो यदि गुरुर्भवति अष्टभिः सप्तभिः सप्तभिश्च यदि विरामस्तदा कविभिः सा महास्रग्धराख्या महास्रग्धरा नाम छन्दः अभिहिता । यथा—लसदुन्नसारुणाङ्घ्रिः सरसिजनयना पीतकौशेयवासा नवबर्हिबर्हचूड़ा स्मितसुभगमुखा लोलकर्णावतंसा । मणिशोभिकण्ठहस्ता मणिमयरशना मूर्त्तिराभीरविष्णोरुपजानुरलिरस्या नवजलदरुचिर्वो महास्रग्धराव्यात् ॥ १ ॥

आदौ यस्यामष्टौ दीर्घास्तदनु ललितगतिविजितमराले
ह्रस्ववर्णाः सद्वृत्ते द्वादश सहचरि ननु तदनु गुरु द्वौ ।
यत्र स्याद्विश्रामस्थानं वसुमनुविलसितममलमते सा
छन्दोविद्भिर्विद्वद्वृन्दैः समकथि शशधरसममुखि हंसी ॥ २ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ललितया गत्या विजितो मरालो हंसो यया तथाभूते हे सद्वृत्ते सच्चरित्रे हे सहचरि सध्रीचि हे अमलमते हे शशधरमुखि यस्याम् आदौ अग्रे अष्टौ वर्णा दीर्घास्तदनु द्वादश वर्णा ह्रस्वाः भवन्ति तदनु द्वौ वर्णौ गुरू भवतः यत्र विश्रामस्थानम् अष्टभिश्चतुर्दशभिश्च विलसितं शोभितं स्यात् छन्दोविद्भिर्विद्वद्वृन्दैः सा हंसी नाम छन्दः समकथि संकथ्यते स्म। यथा—'सार्द्धं कान्तेनैकान्तेऽसौ विकचकमलमधु सुरभि पिबन्ती, कामक्रीडाकूतस्फीत-प्रमदरसरभसमलघु रसन्ती। कालिन्दीये पद्मारण्ये पवनपतनपरितरलपरागे, कंसाराते पश्य स्वेच्छं सरभसगतिरिह विलसति हंसी॥' [ गङ्गादासः ] ॥ २ ॥

आद्यचतुर्थषष्ठसहितो गुरुर्दश[मगस्त]था सुनयने
द्वादश उन्नतप्रकृतिकेऽथ षोड़श[गतश्च कम्र]ललने।
सप्तदशान्तिमोऽन्तिमगतो हरि[त्तपनयो]र्यतिर्भवति चे-
न्मद्रकनामकम्भवति तत्तदा ननु [च भद्रकाख्य]मथवा ॥३॥

हे सुनयने उन्नता उच्चैः प्रकृतिः स्वभावो यस्या हे तथाभूते हे [कम्र] ललने प्रथमश्चतुर्थः षष्ठः दशमो द्वादशः षोड़शगतः सप्तदशस्यान्तिमः अन्तिमगतो द्वाविंशश्च वर्णो यदि गुरुर्भवति दशभिर्द्वादशभिश्च यतिः तदा तत् मद्रक-नामकम् अथवा [भद्रकाख्यं] भद्रक-नामकं छन्दो भवति। यथा—'मद्रकगीतिभिः सकृदपि स्तुवन्ति भव ये भवन्तमभवं, भक्तिभरावनम्रशिरसः प्रणम्य तव पादयोः सुकृतिनः। ते परमेश्वरस्य पदवीमवाप्य सुखमाप्नुवन्ति विपुलं, मर्त्त्यभुवं स्पृशन्ति न पुनर्मनोहरसुराङ्गनापरिवृताः॥' [ हलायुधः ] ॥ ३ ॥

यत्राद्यत्रितयन्दीर्घमेव तथा षष्ठञ्च ससप्तमनवमं
तद्वद्द्वादशमेवं त्रयोदशमित्थन्तन्वि चतुर्दशमपि चेत्।
एवं सप्तदशञ्चाक्षरं सुतनु द्वाविंशमपि प्रकृतिमृदो
सञ्जातं यदि कान्ते तदा वद तल्लालित्यमरालकचनिचये॥ ४॥

हे तन्वि हे सुतनु हे प्रकृत्या मृदो कोमले हे कान्ते हे अराल-कचनिचये कुटिलकेशकलापे यत्र आद्यत्रितयं प्रथमद्वितीयतृतीयं षष्ठं सप्तमं



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



द्वादशं चतुर्दशं सप्तदशं द्वाविंशमप्यक्षरं दीर्घमेव सञ्जातं चेत्तदा तत् लालित्यं नाम छन्दो वद। यथा—गुञ्जत्पट्पदकूजद्वनप्रियपुष्पद्वह्लिसनाथरविसुतातीरासन्ननिकुञ्जे सुखेन समासीनो यदुवंशखनिमणिः। आलीभिः सवयोभिः [समं] समवेतायाः सलिलाहरणकृते राधायाश्चलितायाश्चिरं गतिलालित्यं प्रसमीक्ष्य स मुमुदे ॥ पादान्ते यतिः ॥ ४ ॥

---

## २३। विकृतिः।

सतृतीयकषष्ठं यदि गुरुकं मेधाविनि सप्तममप्यनघे
मृदुलाङ्गि तथैकादशात इह स्युस्त्रीण्यथ सप्तदशश्च तथा।
अथ विंशमपि प्रोज्ज्वलवदने यस्यां जलजाक्षि तथान्तगतं
वरसुन्दरि सा तर्हि निगदिता प्राग्भिः कविभिर्ननु सुन्दरिका ॥१॥

हे मेधाविनि हे अनघे निष्पापे हे मृदुलाङ्गि कोमलाङ्गि हे प्रोज्ज्वलमुखि हे जलजाक्षि हे वरसुन्दरि यस्यां तृतीयं षष्ठं सप्तममक्षरं गुरु तथा एकादशात् पराणि त्रीण्यक्षराणि गुरूणि अथ सप्तदशं विंशम् अन्तगतं त्रयोविंशमप्यक्षरं तथा गुरु यदि भवेयुः तर्हि प्राग्भिः कविभिः सा सुन्दरिका नाम छन्दो निगदिता। यथा—विधिवत्परिगोपायितनियमा यं बोद्धुमलं न महर्षिगणाः अतियत्ननिरुद्धेन्द्रियपवना नो रोद्धुमलं हृदि योगविदः। परिरन्धितकृत्स्नाशयशमला हंसाश्च न लब्धुमलं यमजं तमहो प्रणयात्मार्पणवशगं गोधुग्वरसुन्दरिका विदधुः ॥ पादान्ते यतिः ॥ १ ॥

प्रथमनिवेशिताल्लघुचतुष्टयाद्गुरु ततो जलोद्धतगते-
रतुलमते पदार्द्धसहितं पदम्भवति चेत्पदाङ्गदयुते।
धनचिकुरे महेशमिहिरैर्यतिर्यदि भवेन्महाकविगणै-
र्ननु कथितं तदाद्रितनयाथवाश्वललितं प्रिये सुललितम ॥२॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे अतुला मतिर्य्यस्या हे अतुलमते हे पदाङ्गदयुते नूपुरयुक्ते घना निविड़ा मेघा इव वा चिकुराः केशा यस्या हे घनचिकुरे हे प्रिये प्रथममादौ निवेशितात्संस्थापितात् लघुचतुष्टयात् चतुर्भ्यो लघुभ्यः परम् एकं गुरु ततः पश्चात् यदि पूर्व्वोक्ताया जलोद्धतगतेः पदार्द्धेन अर्द्धपादेन सहितं पदं चरणम्भवति एकादशभिर्द्वादशभिश्च यदि यतिर्भवेत् तदा महाकविगणैः अद्रितनया नाम अथवा सुललितम् अतिमनोहरम् अश्वललितं नाम छन्दः कथितम्। सुललितं कथितमित्यनयो'र्नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्या'[ पां १।२।६९ ] मिति क्लीवत्वमेकवचनञ्च। यथा—'विलुलितपुष्परेणुकपिशं प्रशान्तकलिकापलाशकुसुमं कुसुमनिपातचित्रवसुधं सशब्दनिपतद्द्रुमोत्कशकुनम्। शकुननिनादनादितककुब्विलोलविपलायमानहरिणं हरिणविलोचनाधिवसतिं बभञ्ज पवनात्मजो रिपुवनम्॥' [ भट्टिः ८।३१ ]॥ २॥

प्राग्यत्राष्टौ दीर्घा वर्णा वदननयनजितकमलकुवलये
द्विस्सप्ताथो ह्रस्वाश्चान्ते गुरुरुदयति यदि वसुतिथिविरतिः।
छन्दोदक्षे गेहाध्यक्षे नखरकिरणजितफणिफणजमणे
मत्ताक्रीड़ा सा सङ्गीतादितिजदितिजगुरुसमकविनिवहैः॥ ३॥

वदननयनाभ्यां जिते अभिभूते यथाक्रमं कमलकुवलये यया हे तथाभूते अत्र पाणिनेः स्मरणम् 'यथासंख्यमनुदेशः समाना'[ पां १।३।१० ]मिति। नखराणां नखानां किरणेन अंशुना जितः पराजितः फणिनः सर्पस्य फणजः फणाजातो मणिर्यया हे तथाभूते हे छन्दोदक्षे छन्दसि निपुणे हे गेहाध्यक्षे गृहस्वामिनि यत्र प्राक् पूर्व्वम् अष्टौ वर्णा दीर्घा अथो अनन्तरं द्विःसप्त चतुर्द्दश ह्रस्वाश्च उदयन्ति अन्ते अवसाने एको गुरुश्च उदयति अष्टसु पञ्चदशसु च यदि विरतिर्भवति तदा अदितिजा देवा दितिजा दानवास्तेषां गुरुभ्यां जीवशुक्राभ्यां समैस्तुल्यैः कविनिवहैः कविवृन्दैः सा मत्ताक्रीड़ा नाम छन्दः सङ्गीता सङ्कथिता। यथा—'हृद्यम्मद्यम्पीत्वा नारी स्खलितगतिरतिशयरसिकहृदया, मत्ताक्रीड़ालोलैरङ्गैर्मुदमखिलविटजनमनसि कुरुते। वीतव्रीड़ाश्लीलालापैः



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



श्रवणसुखसुभगसुललितवचना, नृत्यैर्गीतैश्च विक्षेपैः कलमणितविविधविहगकुलरुतैः ॥'
[ हलायुधः ] ॥ ३ ॥

द्विगुणितदशविमितलघुत उदयति लघु च वरनारि
तदनु सुतनु गुरु च लघु च यदि सुजनगणहितकारि ।
लसदशकलविदलितदलदशशतदलमुखि विचित्र-
मसितदृगतिमहितचरितकृतिभिरुदितमयि तदात्र ॥ ४ ॥

हे वरनारि हे सुतनु सुजनानां सज्जनानां हितम् अनुकूलं करोतीति वाक्ये 'कर्म्मण्यण्णि'[पां ३।२।१]त्यण् 'अचो ञ्णिती'[ पां ७।२।११५ ]ति वृद्धिः 'उरण् रपर'[ पां १।१।५१ ]इति रपरः ततः समासः 'टिड्ढाणञि'[ पां ४।१।१५ ]ति ङीप् 'अम्बार्थनद्योरि'[ पां ७।३।१०७ ]ति ह्रस्वः हे तथाभूते लसद्दीप्यमानम् अशकलम् अखण्डं विदलितानि विकसितानि दलानि पलाशानि यस्य तादृशं यद्दशशतदलं पद्मं तद्वन्मुखं यस्यास्तथाभूते हे असितदृक् कृष्णनयने यदि द्वाभ्यां गुणितैः पूरितैः दशभिर्विमितेभ्यो विंशत्या परिच्छिन्नेभ्यो लघुतः लघुभ्यः परम् एकं लघु तदनु एकं गुरु तत एकं लघु चाक्षरम् उदयति तदा अत्र जगति अतिशयं महितं पूजितं चरितं कर्म्म येषां तैः कृतिभिः कविभिः विचित्रं नाम छन्द उदितमुक्तम् । यथा—त्रिपुरमथनमदनदहन गरलगिलन भुजगभूष, पवनभवन शमनसदन वरणभरण मरणराज । अशित-विजय निहितविजय विजय विजय विजयमूल, प्रणतविनत सदयहृदय सफलय मम यतनमीश ॥ ४ ॥

इति विकृतिकुसुमम् ।

---

## २४ । सङ्कृतिः ।

आद्यचतुर्थं यदि गुरु महिले पञ्चमकञ्च विचलदलकास्ये
तद्वदथैकादशपरयुगलं षोड़शमन्त्ययुगलमपि यस्याम् ।
वाणमुनीनैर्यदि रचितयतिः काञ्चनकङ्कणलसितकराब्जे
काव्यरसज्ञैः कविभिरभिहिता तन्वि तदा हि कमलमुखि तन्वी ॥१॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे महिले विचलन्तोऽलकाश्चूर्णकुन्तला यत्र तथाभूतमास्यं मुखं यस्याः हे तथाभूते काञ्चनकङ्कणाभ्यां सुवर्णकरभूषणाभ्यां लसिते कराब्जे पाणिपद्मे यस्या हे तथाभूते हे तन्वि हे कमलमुखि यस्याम् आद्यं चतुर्थं पञ्चमम् एकादशात्परयोरुत्तरयोर्युगलं युग्मं द्वादशत्रयोदशं षोडशम् अन्त्ययुगलम् अन्त्य-द्वयम् त्रयोविंशचतुर्विंशञ्चाक्षरं गुरु भवति पञ्चभिः सप्तभिर्द्वादशभिश्च यदि यतिर्भवति तदा काव्यरसज्ञैः कविभिः सा तन्वी नाम छन्दोऽभिहिता कथिता। यथा—'चन्द्रमुखी सुन्दरघनजघना कुन्दसमानशिखरदशना या, निष्कलवीणाश्रुतिसुखवचना त्रस्तकुरङ्गतरलनयनान्ता। निर्मुखपीनोन्नतकुचकलसा मत्तगजेन्द्रललितगतिभावा, निर्भरलीला निधुवनविषये मुञ्जनरेन्द्र भवतु तव तन्वी ॥' [ हलायुधः ] ॥ १ ॥

ललितालकजालचलालिकुलाकुललालितवक्त्रसहस्रदले
करभोरु विभातविभातविभाकरजुष्टमहोत्पलपाणितले।
जलदालिसमागमकालनिशाविलसच्चपलातुलिताङ्गलते
यदि तोटकपादयुगेन युतं किल दुर्मिलमत्र तदा ब्रुवते ॥ २ ॥

ललितमलकजालमेव चलालिकुलं भ्रमद्भ्रमरसमूहस्तैराकुलं लालितञ्च वक्त्रसहस्र-दलं मुखकमलं यस्यास्तथाभूते हे करभोरु विभाते प्रभाते विभातस्य उद्दीप्तस्य विभाकरस्य सूर्य्यस्य करेण किरणेन जुष्टं सेवितं महोत्पलं पद्ममिव पाणितलं यस्यास्तथाभूते जलदालीनां मेघपङ्क्तीनां समागमो यस्मिन् स चासौ कालश्चेति वर्षासमय इत्यर्थः तस्य निशायां रात्रौ विलसन्त्या स्फुरन्त्या चपलया विद्युता तुलिता अङ्गलता यस्यास्तथाभूते यदि पूर्वोक्ततोटकपादयुगेन युतं सम्बद्धं भवति तदा अत्र जगति किल निश्चये दुर्म्मिलं नाम कवयो ब्रुवन्ति। यथा—निखिलत्रिदशालयमौलीलसन्मणिकल्पपलाशिदलत्सुमनःपरिगुम्फितमाल्यकलाप-पतत्सुपरागसुपिञ्जरितप्रपदः। भुवनत्रयमङ्गलजागरिता निजभक्तजने पुरुकारुणिको यदि नन्दसुतो हृदि सन्निहितो मम तर्हि कियत्पुरुहूतपदम् ॥ पादान्ते यतिः ॥ २ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



आदिमतुर्य्यकसप्तमकं दशमञ्च चतुर्द्दशपूर्व्वगतं यदि
षोड़शमप्यथ विंशकपूर्व्वगमन्तिमयोरपि पूर्व्वगतं गुरु ।
निर्म्मलकोमलफुल्लमहोत्पललोचन उत्पलमालिनि मानिनि
शुद्धधियः सुधियः सति तर्हि किरीटमिदं कथयन्ति किरीटिनी ।।३।।

निर्मले कोमले फुल्ले महोत्पले इव लोचने यस्यास्तथाभूते हे उत्पल-मालिनि हे मानिनि हे सति हे किरीटिनि मुकुटवति प्रथमं चतुर्थं सप्तमं दशमं चतुर्द्दशस्य पूर्व्वस्थितं त्रयोदशं षोड़शं विंशस्य पूर्व्वस्थितम् ऊनविंशम् अन्तिमयोः पादान्ते स्थितयोः त्रयोविंशचतुर्विंशयोः पूर्व्वगतम् एकविंशञ्चाक्षरं यदि गुरु भवति तर्हि तदा शुद्धधियः सुधिय इदं किरीटं नाम छन्दः कथयन्ति । यथा—'मल्लिलते मलिनासि किमित्यलिना रहिता भवती वत यद्यपि, सा पुनरेति शरद्रजनी तव या तनुते धवलानि जगन्त्यपि । षट्पदकोटिविघट्टितकुड्मलकोटिविनिर्गतसौरभसम्पदि, न त्वयि कोऽपि विधास्यति सादरमन्तरमुत्तरनागरसंसदि ॥' [ वाणीभूषणम् ] ॥ पादान्ते यतिः ॥ ३ ॥

इति सङ्कृतिकुसुमम् ।

---

## २५ । अतिकृतिः ।

आद्यचतुर्थं पञ्चमषष्ठं नवमदशममपि मृगमदतिलके
तन्वि तथान्त्यं यत्र गुरु स्यात् कलितललिततरमणिमयरशने ।
इन्द्रियबाणैर्द्दिग्गजलोकैः पुनरिह धृतिमति यदि भवति यतिः
क्रौञ्चपदा सा स्वल्पितजल्पे भुवनविदितगुणकविभिरभिहिता ।।१।।

अथातिकृतिं लक्षयति—आद्येत्यादिना । हे मृगमदतिलके हे तन्वि कलिता परिहिता ललिततरा अतिमनोज्ञा मणिमयरशना रत्नरचितमेखला यया हे तथाभूते हे धृतिमति धैर्य्यशालिनि स्वल्पितः अतीव अल्पीकृतो जल्पो



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



भाषणं यया हे स्वल्पितजल्पे मितभाषिणि यत्र यस्यां प्रथमं चतुर्थं पञ्चमं षष्ठं नवमं दशमं तथा अन्त्यं पञ्चविंशमप्यक्षरं गुरु भवेत् तथा पञ्चभिः पञ्चभिः अष्टभिः सप्तभिश्च यदि यतिर्भवति तदा सा भुवनेषु विदिता विख्याता गुणा येषां तैः कविभिः क्रौञ्चपदा नाम छन्दोऽभिहिता कथिता। यथा—'या कपिलाक्षी पिङ्गलकेशी कलिरुचिरनुदिनमनुनयकठिना, दीर्घतराभिः स्थूलशिराभिः परिवृतवपुरतिशयकुटिलगतिः। आयतजङ्घा निम्नकपोला लघुतर-कुचयुगपरिचितहृदया, सा परिहार्य्या क्रौञ्चपदा स्त्री ध्रुवमिह निरवधि सुखमभिलषता॥' [ हलायुधः ] ॥ पादान्ते यतिः ॥ १ ॥

इत्यतिकृतिकुसुमम्।

---

## २६। उत्कृतिः।

पादाद्यत्रयमयि गुरु भवति सुतनु शुचिकुलजनु [विशद]प्रज्ञे
पादान्त्यत्रयमपि ननु विविधकुसुमरचितरुचिरकवरीवेशे।
मध्ये विंशतिरगुरव इह नवदलकमलतुलितवदने यस्मिन्
जायेत ग्रहगुहमुखरसशरयतिरपि तदुदितमपवाहाख्यम्॥ १॥

हे सुतनु शुचिकुले शुद्धवंशे जनुर्जन्म यस्यास्तथाभूते [ विशदा ] अमला प्रज्ञा बुद्धिर्यस्यास्तथाभूते विविधैः कुसुमैर्नानाविधपुष्पैः रचितः कल्पो रुचिरो मनोहरः कवरीवेशो यया तथाभूते नवदलेन कमलेन तुलितं सम्मितं वदनं यस्यास्तथाभूते यस्मिन् पादस्याद्यत्रयं प्रथमद्वितीयतृतीयं पादस्यान्त्यत्रितयं चतुर्विंशम्पञ्चविंशं षड्विंशमपि गुरु भवति मध्ये विंशतिरगुरवो लघवो भवन्ति नवसु षट्सु षट्सु पञ्चसु च यतिरपि जायेत इह जगति तत् अपबाहाख्यम् अपबाह-नाम छन्द उदितम् उक्तम्। अपबाहक इति पैङ्गले। यथा—'श्रीकण्ठं त्रिपुरदहनममृतकिरणशकलकलितशिरसं रुद्रं, भूतेशं हतमुनिमखमखिलभुवननमित-चरणयुगमीशानम्। सर्व्वज्ञं वृषभगमनमहिपतिकृतवलयरुचिरकरमाराध्यं, तं वन्दे भवभयभिदमभिमतफलवितरणगुरुमुमया युक्तम्॥' [ हलायुधः ] ॥ १ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यत्र स्युः प्रागष्टौ दीर्घा नवकिसलयनिभदशनांशुके विमलांशुके
विंशाद्यान्त्यौ चातुर्विंशः कुसुमसमयपिकललनाकलस्वननादिनि ।
पादान्तस्थश्चैतादृक्षो वसुशिवमुनिषु च विरतिर्यदा प्रभवेत्तदा
गायन्ति च्छन्दोनिष्णातास्तदिह करकलितकमले भुजङ्गविजृम्भितम् ॥२॥

नवकिसलयस्य निभे सदृशे दशनांशुके ओष्ठौ यस्यास्तथाभूते विमले अंशुके वस्त्रे यस्यास्तथाभूते कुसुमसमयस्य वसन्तस्य पिकललनायाः कोकिलायाः कलस्वनमिव अव्यक्तमधुरध्वनिमिव नदितुं शीलमस्यास्तथाभूते करेण कलितं गृहीतं कमलं यया हे करकलितकमले यत्र प्राक् पूर्वस्मिन् अष्टौ वर्णा दीर्घा भवेयुः तथा विंशस्य आद्यान्त्यौ ऊनविंशैकविंशौ च यदि दीर्घौ भवेतां तथा चातुर्विंशश्चतुर्विंशतितमः पादान्तस्थश्च षड्विंशश्च वर्ण एतादृक्षः एतादृक् दीर्घः भवेत् अष्टसु एकादशसु सप्तसु च यदा विरतिर्भवेत्तदा छन्दोनिष्णाताश्छन्दःकुशलाः कवय इह जगति भुजङ्गविजृम्भितं नाम छन्दो गायन्ति शब्दायन्ते। यथा—स्थूलं दत्से सूक्ष्मं धत्से भुवि भवसि नभसि रमसे रमे दिवि मोदसे, छिन्त्से वाढं भिन्त्से गाढं रुषि मिषसि धनुषि मनुषे जये पुरि जृम्भसे। स्वल्पं शेपे कल्पं प्रेपे चिति चरसि यशसि यतसे चले युधि गल्भसे ब्रूषे वामं सूषे कामं हृदि विशसि वचसि सचसे रुचे दृशि दीप्यसे॥ यथा वा—'ध्यानैकाग्रा लम्बा दृष्टिः कमलमुखि लुलितमलकं करे स्थितमाननं, चिन्तासक्ता शून्या बुद्धिर्द्विरदगति पतितरसना तनुस्तनुतां गता। पाण्डुच्छायं क्षामं वक्त्रं मदजननिरहसि सरसां करोषि न सङ्कथां, को नामायं रम्यो व्याधिस्तव कथय सुतनु किमिदं न खल्वसि नातुरा॥' [ हलायुधः ] ॥ २ ॥

यदि गुरु पञ्चमम्भवति सप्तमकं दशमान्तिमं सहचतुर्दशकम्
सुमुखि ततश्च सप्तदशमक्षरकं सुतनूनविंशतितमञ्च तथा ।
त्रिसमधिकञ्च विंशतितमं कलभाषिणि पञ्चविंशतितमान्त्यमथा-
वितथमनोरथे सुरगुरुप्रतिमाः कवयो वदन्ति हि तदा हरिणम् ॥३॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे सुमुखि हे सुतनु हे कलभाषिणि अवितथः सफलो मनोरथः अभिलाषो यस्यास्तथाभूते यदि पञ्चमं सप्तमं दशमस्यान्तिमम् एकादशं चतुर्दशं सप्तदशम् ऊनविंशं तथा त्रिभिः समधिकं विंशतितमं त्रयोविंशं पञ्चविंशतितमस्यान्त्यं षड्विंशश्चाक्षरं गुरु भवति तदा सुरगुरुप्रतिमा बृहस्पतिसदृशाः कवयो हरिणं नाम छन्दो वदन्ति। यथा—नखमुखपाणिकण्ठचिकुरैर्गतिभिः सहसा स्मितेन ललितेषुदृशाः, मणिपद्मकम्बुचमराः करिणः सुतनोः सुधावहसिता हरिणः। फणिगणसिद्धसाध्यदयिता न समाः सकलास्त्वया च खभुवश्छलिता, स्तवबलरूपदर्पविजिता नितरां विबुधाश्चिराय चरितैश्चतुरैः॥ पादान्ते यतिः॥ ३॥

इत्युत्कृतिकुसुमम्।

## २७। दण्डकः।

प्रथममगुरुषट्कमेवाष्टमैकादशञ्चाथ चातुर्दशं षोड़शान्त्यं तथा
तदनु भवति विंशमप्यक्षरं चेत्त्रयोविंशकं सप्तविंशादिसंस्थं लघु।
वरकविनिकरैस्तदा दण्डकोऽयं समाख्यायते चण्डवृष्टिप्रपाताह्वयो
विमलकुलसमुद्भवे साम्प्रतञ्चेतसा निश्चलेन त्वमालोचय श्रेयसे ॥१॥

अथ दण्डकं लक्षयति प्रथममित्यादिना। हे विमलकुलसमुद्भवे चेद्यदि प्रथममादौ अगुरुषट्कं लघूनां षट्कं भवति प्रथमद्वितीयतृतीयचतुर्थपञ्चमषष्ठं लघ्वेव इत्यर्थः। अथ अष्टमम् एकादशं चतुर्दशं षोड़शस्यान्त्यं सप्तदशं पुनर्लघु भवति तदनु विंशं त्रयोविंशं सप्तविंशस्य आदिसंस्थं षड्विंशश्चाक्षरं लघु भवति तदा वरकविनिकरैः अयं चण्डवृष्टिप्रपातनामा दण्डकः समाख्यायते कथ्यते। साम्प्रतमधुना त्वं श्रेयसे क्षेमाय निश्चलेन स्थिरेण चेतसा हृदयेन आलोचय। यथा—'प्रलयघनघटामहारम्भमेघावलीचण्डवृष्टिप्रपाताकुलं गोकुलं, सपदि समवलोक्य सव्येन हस्तेन गोवर्द्धनं नाम शैलं दधल्लीलया। कमलनयन रक्ष रक्षेति [जल्पत्]सन्मुग्धगोपाङ्गनालिङ्गनानन्दितो, गलदभिनवधातुधाराविचित्राङ्गरागो मुरारातिरस्तु प्रमोदाय वः॥ [ गङ्गादासः ]॥ पादान्ते यतिः॥ १॥





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अयि यदि दशमवर्णस्य पूर्व्वौ परौ चापि वर्णौ गुरू उल्लसद्भ्रूमनोज्ञे
तदनु च करिकरोरुप्रयुक्ताद्भुजङ्गप्रयातैकपादात्परो ह्रस्व एकः ।
अथ पुनरपि गुरू द्वौ सदा भक्तिसंवाहितस्वामिपादे मृदुभ्यां कराभ्याम्
प्रचित इति कथितो दण्डकोऽयं तदा ज्ञानसिन्धोऽधुना सत्प्रबन्धे
प्रयोज्याः ॥ २ ॥

अयि भोः उल्लसन्तीभ्यां भ्रूभ्यां मनोज्ञे करिणः हस्तिनः करौ शुण्डादण्डौ इव ऊरू यस्याः हे करिकरोरु सदा शश्वत् मृदुभ्यां कराभ्यां भक्त्या संवाहितौ स्वामिनो भर्तुः पादौ यया तथाभूते हे ज्ञानसिन्धो यदि दशमवर्णस्य पूर्व्वौ परौ चापि वर्णौ गुरू भवतः तदनु च भुजङ्गप्रयातस्य वृत्तस्य एकपादात्पर एको वर्णो ह्रस्वो भवति पुनरपि द्वौ वर्णौ गुरू भवतस्तदायं दण्डकः प्रचित इति प्रचितो नाम कविभिः कथितः । अधुना इदानीं सत्प्रबन्धे सत्काव्ये त्वयायं प्रयोज्यः प्रयोक्तव्यः । यथा—'मुरहर यदुकुलाम्भोधिचन्द्र प्रभो देवकीगर्भरत्न त्रिलोकैकनाथ, प्रचितकपटस्फुरारिव्रजोद्दामदन्तावलस्तोमविद्रावणे केशरीन्द्र । चरणनखरसुधांशुच्छटोन्मेषनिःशेषितध्यायिचेतोनिविष्टान्धकार, प्रणतजनपरितापोग्रदावानलच्छेदमेघ प्रसीद प्रसीद प्रसीद' ॥ [गङ्गादासः] ॥ पादान्ते यतिः ॥२॥

त्रिबलीवलयाञ्चितमध्यतनो दशनालिविड़म्बितदाड़िमबीजतते
कमनीयककङ्कणजुष्टकरे मणिनूपुरयावकशोभितपादयुगे ।
यदि तोटकपादयुगस्य परम्भवति द्विलघूत्तरमेकगुरु प्रमदे
मुखसौरभलोभितभृङ्गकुले कवयः कथयन्ति तदा कुसुमस्तवकम् ॥३॥

त्रिबल्यस्तिस्रो रेखा वलयानीव तैरञ्चिता मध्यतनुर्यस्यास्तथाभूते दशनालिभ्यां दन्तपङ्क्तिभ्यां विड़म्बिता सदृशीकृता दाड़िमस्य करकस्य बीजानां ततिः श्रेणिर्यया तथाभूते कमनीयकाभ्यां कङ्कणाभ्यां करभूषणाभ्यां जुष्टौ सेवितौ करौ यस्यास्तथाभूते मणिनूपुराभ्यां रत्नमञ्जीराभ्यां यावकैरलक्तैश्च शोभितं पादयुगं यस्यास्तथाभूते मुखस्य सौरभेन लोभितं भृङ्गकुलं भ्रमरसमूहो यया तथाभूते हे प्रमदे यदि तोटकस्य वृत्तस्य पादयुगात् चरणद्वयात्परम् उत्तरं द्विलघूत्तरं लघुद्वयात्परम् एकगुरु भवति तदा कवयः कुसुमस्तवकं नाम दण्डकं कथयन्ति ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यथा—'विरराज यदीयकरः कनकद्युतिबन्धुरवामदृशः कुचकुट्मलगः, भ्रमरप्रकरेण यथावृतमूर्त्तिरशोकलताविलसत्कुसुमस्तवकः। स नवीनतमालदलप्रतिमच्छवि बिभ्रदतीव विलोचनहारि वपुः, चपलारुचिरांशुकवल्लिधरो हरिरस्तु मदीयहृदम्बुजमध्यगतः' ॥ [ गङ्गादासः ] ॥ पादान्ते यतिः ॥ ३ ॥

शम्बरारिप्रियारम्यरूपच्छटे सन्ततं सेवया प्रीणितश्रोत्रियस्वान्तके
मालतीमल्लिकापाटलीनीलिकायूथिकाचम्पकाकल्पितानल्पकाकल्पके।
यत्र सन्दृश्यते स्रग्विणि स्रग्विणीपादयुग्मात्परं त्र्यक्षरं ह्रस्वमध्यं यदा
दण्डकोऽयन्तदा कीर्त्तितश्छान्दसैर्मत्तमातङ्गलीलाकरो नाम
सीमन्तिनि ॥ ४ ॥

शम्बरारेः कामस्य प्रिया रतिः सा इव रम्या रमणीया रूपच्छटा यस्यास्तथाभूते सन्ततं शश्वत्सेवया शुश्रूषया प्रीणितं तर्प्पितं छन्दोऽधीते श्रोत्रियः श्रोत्रियश्छन्दोऽधीत' [ पां ५।२।८४ ] इति घः 'आयनेयी' [ पां ७।१।२ ] ति घस्येयः छन्दसः स्थाने श्रोत्रादेशश्च निपातितः तस्य स्वान्तं मानसं यया तथाभूते स्वस्वनामप्रसिद्धैः मालतीमल्लिकापाटलीनीलिकायूथिकाचम्पकैराकल्पितो विरचितः अनल्पको बहुः आकल्प आभरणं यया तथाभूते हे स्रग्विणि हे सीमन्तिनि यत्र यस्मिन् स्रग्विण्याश्छन्दसः पादयुग्मात् चरणद्वयात्परं ह्रस्वमध्यं त्र्यक्षरं यदा दृश्यते तदा छान्दसैश्छन्दोऽधीयानैः अयं मत्तमातङ्गलालाकरो नाम दण्डकः कीर्त्तित उक्तः। यथा—'हेमगौरं वसानोऽशुकं शक्रनीलासिते वर्ष्मणि स्पष्टदिव्यानुलेपाङ्किते, तारहारांशुवक्षोनभश्चित्रमालाञ्चितो भव्यभूषोज्ज्वलाङ्गः समं सीरिणा। अञ्जनाभास्वरेणेन्दुकुन्दाभदेहेन लीलापरीहासहासोर्मिकौतूहलैः, कंसरङ्गाद्रिगः पातु नश्चक्रपाणिर्गतिक्रीड़या मत्तमातङ्गलीलाकरः' ॥ [ गङ्गादासः ] ॥ पादान्ते यतिः ॥ ४ ॥

---



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

## २८। दण्डकः।

प्रौढकेतकीदलेन क्लृप्तकण्ठभूषणे प्रफुल्लनीपपुष्पयुग्मकर्णिकेऽङ्ग,
मालतीप्रसूनजालमालिकासनाथक्लृप्तवेशकेशगुच्छके सुकोमलाङ्गि।
यत्र सम्भवन्ति चेद्गुरूत्तरं लघु क्रमेण चाष्टविंशतिस्तु वल्लभेऽक्षराणि
कीर्त्तयन्ति तर्हि काव्यसिन्धुपारदर्शिनेत्रे तन्वि तामशोकपुष्पमञ्जरीति॥१॥

अथाष्टाविंशत्यक्षरकं दण्डकमाह प्रौढेति। प्रौढेन केतकीदलेन क्लृप्तं रचितं कण्ठभूषणं ग्रैवेयकं यया तथाभूते प्रफुल्लं नीपपुष्पयुग्मं कदम्बकुसुमद्वयं कर्णिका कर्णभूषणं यस्याः हे तथाभूते हे मालतीप्रसूनजालस्य जातीपुष्पसमूहस्य मालिकया मालया सनाथो क्लृप्तवेशो रचितशोभाविन्यासः केशगुच्छको यस्यास्तथाभूते हे सुकोमलाङ्गि हे तन्वि हे वल्लभे प्रिये यत्र यस्यां गुरोरुत्तरं लघु इति क्रमेण अष्टाविंशतिरेवाक्षराणि चेत्सम्भवन्ति सञ्जायन्ते तर्हि काव्यसिन्धुपारदर्शिनो धीरा अत्र जगति तामशोकपुष्पमञ्जरीति अशोकपुष्पमञ्जरीन्नाम दण्डकं कीर्त्तयन्ति। यथा—मूर्ध्नि चारुचम्पकस्रजा सलीलवेष्टनं लसल्लवङ्गचारुचाक्रिका कचेषु, कर्णयोरशोकपुष्पमञ्जरीवतंसको गले च कान्तकेशरोपक्लृप्तदाम। फुल्लनागकेशरादिपुष्परेणुरूषणं तनौ विचित्रमित्युपात्तवेश एष, केशवः पुनातु नः सुपुष्पभूषितः स मूर्त्तिमानिवागतो मधुर्विहर्त्तुमत्र'॥ [ गङ्गादासः ]॥ पादान्ते यतिः॥ १॥

बलीभृदुच्चलालकैः सनाथवक्त्रदीधितिव्रजैस्तिरस्कृतौषधीशमण्डले
प्रसूनभूषणप्रिये प्रियाल्यनुष्ठितप्रहासरंहसा पदे पदे स्खलद्वचः।
सदा सदर्थभाषिके तिलप्रसूननासिके सुकेशि कुङ्कुमाक्तगण्डमण्डले
यदेच्छया प्रयुज्यते लघुर्गुरुः क्रमात्तदा स दण्डको भवेदनङ्गशेखरः॥२॥

बलीभृदिति। बलीभृद्भिर्बलीयुक्तैरुच्छलैरतिलोलैरलकैश्चूर्णकुन्तलैः सनाथस्य शोभितस्य वक्त्रस्य दीधितीनां व्रजैः प्रभामण्डलैस्तिरस्कृतमोषधीशमण्डलं चन्द्रबिम्बं यया हे तथाभूते प्रसूनभूषणं पुष्पाभरणं प्रियं यस्या हे तथाभूते प्रियालिभिः प्रियसखीभिरनुष्ठितस्यारब्धस्य प्रहासस्य परिहासस्य रंहसा रयेण पदे पदे प्रतिपदं



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



स्खलत् प्रकृतादन्यथाभवद्वचो यस्या हे तथाभूते सदा सर्व्वस्मिन् काले सदर्थं सत्प्रयोजनं भाषते इति वाक्ये 'ण्वुल्तृचा' [ पां ३।१।१३३ ] विति कर्त्तरि ण्वुल् ततष्टाप् 'प्रत्ययस्थात्कात्पूर्व्वस्यात इदाप्यसुप' [ पां ७।३।४४ ] इति इत् हे सदर्थभाषिके तिलप्रसूनं वज्रपुष्पमिव नासिका यस्या हे तथाभूते हे सुकेशि शोभनचिकुरे कुङ्कुमेनाक्तं म्रक्षितं गण्डमण्डलं यस्या हे तथाभूते…………… क्रमात्……………ण यावत् लघुर्गुरुर्व्वर्णः प्रयुज्यते निवेश्यते तदा स दण्डकोऽनङ्गशेखरो नाम भवेत्। यथा—'उदेत्यसौ सुधाकरः पुरो विलोकयाद्य राधिके विजृम्भमानगौरदीधितिः, रतिस्वहस्तनिर्म्मितः कलाकुतूहलेन चारुचम्पकै-रनङ्गशेखरः किमु। इति प्रमोदकारिणीं प्रियाप्रसादलक्षणां गिरं समुद्गिरन् मुरारिरद्भुतां, प्रदोषकालसङ्गमोल्लसन्मना मनोज्ञकेलिकौतुकी करोतु नः कृतार्थताम्' ॥ [ गङ्गादासः ] ॥ पादान्ते यतिः ॥ २ ॥

---

## २६। दण्डकः।

यस्यामाद्याः पञ्च भवेयुर्दीर्घा यदि तदनु कमलमुखि सप्तमान्मृगलोचने
वर्णाश्चत्वारो ननु तद्वत्कान्ते दशनवसनसमितसुपक्वविम्बफलप्रभे।
तद्वद्द्वाविंशोऽथ चतुर्विंशोऽपि स्थिररुचिरसरलतरमानसेन्द्रियवृत्तिके
ष्टाविंशाद्यन्त्यावपि तद्वत्तर्हि प्रवरकवय इह सति तां ब्रुवन्ति धुरन्धराम्॥१॥

अथोनत्रिंशदक्षरपादं दण्डकं लक्षयति यस्यामिति। ननु भोः कमलमुखि हे भृगलोचने हे कान्ते दशनवसनाभ्यां समिता सुपक्वविम्बफलस्य प्रभा यया हे तथाभूते स्थिररुचिरसरलतरा मानसेन्द्रियवृत्तिर्य्यस्या हे तथाभूते हे सति यस्यामाद्याः पञ्च प्रथमद्वितीयतृतीयचतुर्थपञ्चमा वर्णा दीर्घा भवेयुः तदनु सप्तमाद्वर्णात्परे चत्वारः अष्टमनवमदशमैकादशा वर्णास्तद्वद्दीर्घाः द्वाविंशः अथ चतुर्विंशोऽपि वर्णस्तद्वद्दीर्घः अष्टाविंशस्याद्यान्त्यौ सप्तविंशोनत्रिंशावपि वर्णौ तद्वद्दीर्घौ तर्हि इह जगति प्रवरकवयस्तां धुरन्धरां नाम छन्दो ब्रुवन्ति। यथा—वन्द्या



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



देवी पर्व्वतपुत्री नित्यं मधुमधुरकमलवदना पुरन्ध्र्यधिदेवता, देवैः स्तुत्या किन्नरगेया भक्त्या वरचरितमहिषमथनी जगत्त्रयनायिका । सिद्धैर्ध्येया केशरियाना काम्या रणचतुररसिकहृदया त्रिलोचनवल्लभा, धीरैः पूज्या दर्पणपाणिर्न्यूनं गुणनिलयलटनललिता सतीषु धुरन्धरा ॥ पादान्ते यति ॥ १ ॥

यत्रादिगतयुगलमथ विकसितदशशातदलमुखि गुरु भवति तथा-
ष्टाविंशतितमपरमपि च शिशिरकरकरविदलितकुवलयनयने ।
दिग्दन्तिवसुषु यदि सति रचयति यतिमनुपदमयि पुनरवसितितः
शालूर इति भवति स जगति सुखयति नरपतिकुलमपि सपदि तदा ॥२॥

हे विकसितदशशतदलमुखि प्रफुल्लपद्मवदने शिशिरकरस्य चन्द्रस्य करेण रश्मिना विदलिते विकसिते कुवलये इव उत्पले इव नयने नेत्रे यस्यास्तथाभूते हे सति यत्र आदिगतयुगलमाद्यद्वयं गुरु भवति अथ अष्टाविंशात्परम् ऊनत्रिंशमक्षरं तथा गुरु भवति अनुपदं प्रतिचरणे यदि अष्टभिः अष्टभिः अवसितौ पादान्ते त्रयोदशसु इत्यर्थः पुनर्यति रचयति कल्पयति तदा स जगति शालूर इति शालूरो नाम छन्दो भवति स शालूरो नरपतिकुलमपि सपदि सद्यः सुखयति । यथा—'गोवर्द्धनगिरिधरमुपचितदितिसुतपरमहृदयमदशमनकरं, व्यर्थीकृतजलधर-गुरुवरषणभरगतभयनिजकुलदुरितहरम् । नन्दालयनिवसनकृतवनविलसनविहित-विविधरसरभसपरम्, संवीतवसनधरमरुणकरचरणमनुसर सरसिजनयनधरम्' ॥ [ वाणीभूषणम् ] ॥ २ ॥

यस्यामाद्याः पञ्च भवेयुर्दीर्घा निजगतिविजितगजपतेऽष्टमो नवमस्तथा
निष्कग्रीवे चेद्दशमश्चाप्येकादशक उरसि लुलितमणे मुकुन्दपरायणे ।
द्वाविंशश्चार्वङ्गि चतुर्विंशोऽपि स्मितविकसितमुखकमले द्विजातिथिवत्सले-
थाष्टाविंशस्याद्यवसानस्थौ च प्रतनवरकविभिरिह सा तदाभिहिता रमा ॥३॥

निजगत्या नैसर्गिकगमनेन विजितो गजपतिर्यया तथाभूते निष्को ग्रीवायां यस्या हे निष्कग्रीवे उरसि वक्षसि लुलित आन्दोलितो मणिर्यस्यास्तथाभूते मुकुन्दः कृष्णः परं प्रकृष्टम् अयनम् आश्रयो यस्या हे मुकुन्दपरायणे हे चार्वङ्गि



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



मनोहरावयवे स्मितेन ईषद्धासेन विकसितं मुखकमलं यस्यास्तथाभूते हे द्विजेषु ब्राह्मणेषु अतिथिषु आगन्तुकेषु च वत्सले स्निग्धे यस्याम् आद्याः प्रथमाः पञ्च वर्णास्तथा अष्टमो नवमो दशम एकादशो द्वाविंशश्चतुर्विंशोऽष्टाविंशस्य आद्यवसानस्थौ आद्यन्तस्थितौ सप्तविंशोनत्रिंशौ च वर्णा यदि दीर्घा भवेयुस्तदा सा कविभी रमा नाम छन्दोऽभिहिता। एषा पूर्वोक्ता धुरन्धरा ( पृः १६५ ) एव प्रपञ्चार्थमत्र पुनरुक्ता। यथा—यस्याजस्रम्पादयुगं वज्रध्वजयवशतदलश्रेणियुतं सुराः समुपासते यस्य श्रीवत्साङ्कितवक्षोदेशे निवसति सततमचपला सती परमा रमा। यस्यास्ये चोत्फुल्लसरोजप्रख्ये निरवधिपरिहितकलहा चकास्ति सरस्वती तं देवानां देवमहं संसारप्रभवजननमरणनिवृत्तयेऽनिशमाश्रये॥ पादान्ते यतिः॥ ३॥

श्रीमती सुन्दरधीररविन्दविनिन्दकमुख्ययि रत्नकिरीटविटङ्कितमौले
यत्र निवेशयति प्रथमं सति पाणिगृहीति सुवृत्तवरस्य किरीटकनाम्नः।
एकमलक्तरागसुरञ्जितपादयुगे चरणं पुनरेकगुरुं लघुयुग्मम्
तन्वि ततश्च गुरुद्वितयं यदि तर्हि तमत्र हि दण्डकमाह
भुजङ्गविलासम्॥ ४॥

हे श्रीमति त्रिवर्गसम्पत्तिमति हे सुन्दरधीः अरविन्दविनिन्दकं मुखं यस्यास्तथाभूते रत्नकिरीटेन मणिमयमुकुटेन विटङ्कितः शोभितो मौलिर्मस्तकं यस्यास्तथाभूते हे सति हे पाणिगृहीति पत्नि अलक्तकस्य रागेन रञ्जनसाधकेन लाक्षारसेनेति यावत्सुरञ्जितं पादयुगं यस्यास्तथाभूते हे तन्वि यत्र किरीटकनाम्नः सुवृत्तवरस्य एकं चरणं निवेशयति स्थापयति पुनः एकगुरुं ततो लघुयुग्मं ततश्च गुरुद्वितयं गुरुद्वयं निवेशयति तर्हि तं कविरत्र जगति भुजङ्गविलासं नाम दण्डकम् आह वदति। यथा—कालियदुर्जरवीर्य्यमहोल्वणतत्क्षणजीवन-हारिहलाहलदुष्टम्, यो यमुनाम्बु निपीय मृतान् समजीवयदौक्षकवात्सवधेनु-कपालकबालान्। तत्फणचार्य्यपसारितवांश्च ततो ह्रदतः सुतमित्रपरिग्रहभृत्य-समेतं, भो भवभीलुक तं भजतामवलोकयितुं यदि नेच्छसि कालभुजङ्ग-विलासम्॥ पादान्ते यतिः॥ ४॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



निस्सारसंसारसारैकरत्नस्वरूपे स्वरूपच्छटाल्पीकृता नङ्गकान्ताङ्गकान्ते
शश्वत्सदालापजातेन शातेन कालं निमेषार्द्धवद्यापयन्ति प्रियेऽतीवशान्ते ।
द्वौ यत्र विन्यस्य सारङ्गवृत्तस्य पादौ ततस्तन्वि दीर्घौ पुनर्ह्स्वमेकन्तदन्ते
दीर्घौ च संयुज्य पादौ समाप्येत चेत्तर्हि तं दण्डकं कामबाणं बुधाः
सङ्गिरन्ते ।। ५ ।।

निःसारस्य सारशून्यस्य संसारस्य सारभूतम् एकं रत्नमिव स्वरूपं यस्यास्तथाभूते स्वस्य रूपच्छटाभिः अल्पीकृता तुच्छीकृता अनङ्गकान्तायाः कामपत्न्या अङ्गकान्तिरङ्गशोभा यया तथाभूते हे शश्वत्पुनः पुनः सदालापात् जातेन उत्पन्नेन शातेन सुखेन कालं समयं निमेषार्द्धवत् अर्द्धनिमेषमिव यापयन्ति अतिवाहयन्ति हे प्रिये हे अत्यन्तशान्ते यत्र पुरः अग्रे पूर्व्वोक्तस्य सारङ्गवृत्तस्य द्वौ पादौ विन्यस्य स्थापयित्वा तदन्ते तयोः पादयोरन्ते द्वौ दीर्घौ पुनर्ह्स्वमेकं द्वौ दीर्घौ च संपुज्य पादश्चेत्समाप्येत तर्हि तं बुधाः कामबाणं नाम दण्डकं सङ्गिरन्ते स्वीकुर्व्वन्ति। यथा—आकर्णकृष्टालिवीथीसनाथज्यपुष्पीयकोदण्डनिर्मुक्तकं कामबाणं सलीलं, यो योगिनामप्यसह्यं विषह्योर्द्ध्वनेत्राग्निना चन्द्रचूड़श्चकार स्मरम्भस्मशेषम्। तञ्चापि यो ध्यानधैर्य्यच्युतं लोकवाहीकमह्नाय चक्रेतरां मोहिनीरूपधारी, तच्चिद्घनानन्दरूपं गुणातीतमव्यक्तवर्त्मानमाशु प्रतिष्ठस्व भक्त्यैव विष्णुम्॥ पादान्ते यतिः॥ ५॥

---

## ३० । दण्डकः ।

भवेदादिसंस्थो लघुर्यत्र कान्ते चतुर्थस्तथा सप्तमश्चापि वर्णस्तथैकादशाद्यस्ततो द्वादशान्त्यस्तथा षोड़शश्चाप्यथैकोनविंशस्त्रयोविंशपूर्व्वस्तथा
पञ्चविंशः ।
तथा सप्तविंशान्तिमो निम्ननाभे शिरीषप्रसूनाधिकश्लक्ष्णसंशोभमानप्रतीके
तदा पूर्व्वजैर्लोकवृन्दैकवन्द्यैः कवीन्द्रैः स्मृतः सिंहविक्रीड़नामापरो
दण्डकोऽयम् ।। १ ।।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे कान्ते निम्ना गभीरा नाभिर्यस्या हे निम्ननाभे शिरीषप्रसूनात् शिरीषपुष्पादपि अधिकाः श्लक्ष्णाः कोमलाः संशोभमानाः प्रतीका अवयवा यस्याः तथाभूते हे प्रिये यत्र प्रथमचतुर्थः सप्तमः एकादशस्याद्यो दशमो द्वादशस्यान्तस्त्रयोदशः षोड़श एकविंशस्त्रयो विंशस्य पूर्व्वः द्वाविंशः पञ्चविंशस्तथा सप्तविंशस्यान्तिमोऽष्टाविंशश्च वर्णो यदा लघुः स्यात्तदा पूर्व्वजैः प्राचीनैः लोकवृन्दैकवन्द्यैर्जनसमूहमात्रपूज्यैः कवीन्द्रैरयं सिंहविक्रीड़-नामा दण्डकः स्मृतः। यथा—समं कामपालेन नृत्यन् सभङ्गि स्फुटेन्दीवराच्छच्छविः सिंहविक्रीड़माभीरवेशो, मदस्राविणोऽम्बष्ठसञ्चालितस्य प्रतीहारदेशात्प्रतुङ्गस्य मातङ्गराजस्य दन्तौ। समुत्पाट्य ताभ्यां रुषैनं विनिघ्नन् विशन् कंसरङ्गं निहत्याशु चाणूरमल्लं च कृष्णः, समुत्प्लुत्य मञ्चाज्जगत्यां निपात्यावधीत्कं-समुग्रं वितेने च सभ्यस्य पित्रोश्च हर्षम् ॥ पादान्ते यतिः ॥ १ ॥

प्रमुदितवदने यदा चण्डवृष्टिप्रपातैकपादात्परे ह्रस्वमध्याः सुवर्णप्रभे
सुविशदहृदये भवन्त्यासमाप्तेः क्रमेणैधितास्त्रिस्त्रिवर्णाः सुरेखाकृतिभ्रूलते।
सरसिजनयने तदार्णोऽर्णवव्यालजीमूतलीलाकरोद्दामशङ्खादिभिर्नामभि-
र्भवजलधिमणे सुगत्या विलज्जीकृतश्वेतपक्षच्छदे सम्प्रयुक्ता भवन्ति
प्रिये ॥ २ ॥

अथ सङ्क्षेपेण अर्ण आदीनां दण्डकानां लक्षणमाह—प्रमुदितेति। प्रमुदितं हृष्टं वदनं यस्या हे तथाभूते सुविशदम् अतिप्रसन्नं हृदयं चित्तं यस्या हे तथाभूते सुरेखाकृती भ्रूलते यस्या हे तथाभूते हे सरसिजनयने पद्मलोचने हे भवजलधिमणे संसारसागररत्नभूते हे स्वस्य गत्या विलज्जीकृतः श्वेतपक्षच्छदो हंसो यया हे तथाभूते हे प्रिये यदा पूर्व्वोक्तस्य चण्डवृष्टिप्रपातदण्डकस्य पादात्परे ह्रस्वं मध्यं येषां तथाभूतास्त्रिस्त्रिवर्णा आ पादसमाप्तेः पादसमाप्ति यावत्क्रमात् एधिता वर्द्धिता भवन्ति तदा अर्ण आदिभिर्नामभिः सम्यक् प्रयुक्ता भवन्ति। आदिना आराम-सङ्ग्राम-सुराम-वैकुण्ठ-सार-कासार-विसार-संहार-नीहार-मन्दर-केदारा-सार-सत्कार-संस्कार - माकन्द - गोविन्द - सानन्द-सन्दोहा-नन्दादयः सङ्गृहीता भवन्ति। सर्व्वत्र पादान्ते यतिः। अर्णसः



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सोदाहरणलक्षणम् । संग्रामवर्जमन्येषामुदाहरणमूहनीयं विस्तरभयान्न दर्शितम् । एषु केवलं सङ्ग्रामदण्डकस्य उदाहरणं दर्श्यते यथा—प्रचलितकरिकृत्तिपर्य्यन्तचञ्चन्नखाघातभिन्नेन्दुनिष्यन्दमानामृतश्च्योतजीवत्कपालावलीमुक्तचण्डाट्टहासत्रसङ्कूरिभूतप्रवृत्तस्तुति, खसदसितभुजङ्गभोगाङ्गदग्रन्थिनिष्पीडनस्फारफुल्लत्फणापीठनिर्य्यद्विषज्योतिरुज्जृम्भणोड्डामरव्यस्तविस्तारिदोःषण्डपर्य्यासितदमाधरम् । ज्वलदनलपिशङ्गनेत्रच्छटाच्छन्नभीमोत्तमाङ्गभ्रमिप्रस्तुतालातचक्रक्रियास्यूतदिग्भागमुत्तुङ्गखट्वाङ्गकोटिध्वजोद्धूतिविक्षिप्ततारागणं, प्रमुदितकटपूतनोत्तालवेतालतालस्फुटत्कर्णसम्भ्रान्तगौरीघनाश्लेषहृष्यन्मनस्त्र्यम्बकानन्दि वस्ताण्डवं देवि भूयादभीष्ट्यै च हृष्ट्यै च नः ॥ २ ॥

---

## ३३ । दण्डकः ।

हे अशोकपल्लवातिकोमलातिपाटलातिमेदुराधरोष्ठपाणिपादपाणिजेऽतिवल्लभे धर्म्मकृत्यगेहकृत्यभृत्यपालनादिकृत्यशुद्धसत्प्रबन्धकल्पनार्च्चनैकतानमानसे ।
स्वेच्छया यथाक्रमं गुरूत्तरं लघु प्रयुज्य यत्र दीर्घमेकमङ्घ्रिशेषतो विधीयतेऽक्षरं
लोकवृन्दवन्द्यमानपादपद्मलब्धवर्णवर्णितात्तवर्णकेऽत्र सा जयत्यशोकमञ्जरी ॥ १ ॥

त्रयस्त्रिंशदक्षरपादं दण्डकं लक्षयति हे अशोकेति । अशोकस्य पल्लवादपि अतिकोमला अतिपाटला अतिमेदुरा अतिस्निग्धा अधरौष्ठपाणिपादपाणिजा अधरौष्ठकरचरणनखा यस्या हे तथाभूते हे अतिवल्लभे अतिप्रिये धर्म्मकृत्येषु धर्म्मकार्य्येषु गेहकृत्येषु गृहकार्य्येषु भृत्यपालनादिकृत्येषु शुद्धसत्प्रबन्धकल्पनासु विशुद्धसत्काव्यरचनासु चार्चनासु देवदेवीपूजनादिषु च एकतानम् अनन्यवृत्ति मानसं चित्तं यस्या हे तथाभूते आत्तं गृहीतं वर्णकं विलेपनं यया तथाभूते यत्र यस्यां स्वेच्छया निजेच्छया यथाक्रमं गुरूत्तरं गुरोः परं लघु प्रयुज्य



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



निवेश्य अङ्घ्रि शेषतश्चरणान्ते एकं दीर्घम् अक्षरं विधीयते क्रियते लोकावृन्दैः जनसमूहैर्वन्द्यमानं सेव्यमानं पादपद्मं येषां तैर्लब्धवर्णैर्विचक्षणैर्वर्णिता स्तुता सा अशोकमञ्जरी नाम दण्डको जयति। यथा—या वसन्तकाल आगतेविदिक्षु दिक्षु पुष्पवाटिकासु चाश्रयाशदीसहेतिवद्विभासते, यातिसञ्चरिष्णुचञ्चरीकसञ्चयै-रभीद्गमासवीयकोषपूरणाय लोलुपैरुपास्यते। या सुराच्चर्नाय देवमन्दिरर्द्धि-वर्द्धनाय मालिकालिकल्पनाय चावनीसुरैरुपेयते, या च सादरं विलासिनीजनेन कर्णपूरकल्पनाय चीयते च सा जयत्यशोकमञ्जरी॥ पादान्ते यतिः॥ १॥

---

## ३४। दण्डकः।

प्रथममधरजित नवकिसलय उत वरतनु विंशति सङ्ख्या लघवः स्युश्चेद्गुरुरेकः
स्मितमुखि निजगतिजितसुरगजपतिललितगतेऽथ लघू द्वौ
[ रुचिरापाङ्गेऽ ]थ गुरू द्वौ।
धृतकुसुमसमयपरभृतकलमयमधुररुतेऽथ लघू द्वावथ दीर्घाः स्युस्त्रय एवं
लघुगुरुयुगमपि वसुगजनवशरजलधियतिर्यदि तर्हि त्रिपुरोभङ्गी
मुनिनोक्ता॥ १॥

अथ चतुस्त्रिंशदक्षरपादं त्रिभङ्गीनाम दण्डकं लक्षयति प्रथममिति। अधराभ्यां जितं नवकिसलयं यया हे तथाभूते हे वरतनु हे स्मितमुखि निजगत्या जिता सुरगजपतेः सुरगजराजस्य ऐरावतस्य ललिता गतिर्लीला-गतिर्यया हे तथाभूते धृतं कुसुमसमयस्य वसन्तकालस्य परभृतस्य कोकिलस्य कलमयं कलस्वरूपं मधुरं रुतं वाशितं यया हे तथाभूते [ रुचिरौ मनोरमौ अपाङ्गौ नेत्रान्तौ यस्याः हे तथाभूते] चेद्यदि प्रथममादौ विंशतिसङ्ख्या विंशतिपरिमिता लघवः स्युः अथ द्वौ लघू अथ द्वौ च गुरू अथ द्वौ लघू अथ त्रयो दीर्घाः स्युः एवं लघुद्वयं गुरुद्वयमपि भवेत् अष्टसु अष्टसु नवसु पञ्चसु चतुर्षु च यदि यतिर्विश्रामस्तर्हि तदा मुनिना पिङ्गलाचार्य्येण त्रिशब्दः पुरः अग्रे यस्याः सा चासौ भङ्गी चेति त्रिपुरोभङ्गी त्रिभङ्गी नाम छन्द उक्ताभिहिता। छन्दस्यस्मिन्



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



त्रभङ्गीति प्रवेशयितुमशक्यत्वात् हिरण्यपूर्व्वं कशिपुं प्रचक्षते, दशपूर्वरथं यमाख्यया इत्यादिवत् अस्माभिरेवं कृतम्। त्रिपुरसमिधि दव, करलसदजगव, वलयितवासुकिनाग, प्रियहेमाग, प्रियभूते, त्रिनयनमखहर, शिशुशशधरधर, मृगधरफण्युपवीत, प्रमथैर्वीत, प्रियनूते। स्मरहर वृषचर, रुचिजितशशधर, धृतमुखपञ्चक शूलिन्निभशार्दूलाजिनधारिन्, हिमगिरिजनिवर, मम मलमपहर, शिरसि तरङ्गितगङ्ग, प्रणतासङ्ग प्रियकारिन् ॥ १ ॥

---

## ३६। दण्डकः।

सद्गुरूपासनोपार्जितज्ञानसूर्य्यप्रभोत्सारिताज्ञानविष्वक्तमस्सन्ततं
सत्कविस्वान्तसन्तोषणव्यापृते
चिक्कणन्निक्कणत्किङ्किणीकङ्कणे देवताब्राह्मणाभ्यर्च्चनेनोत्सुके
नित्यशुश्रूषणप्रीणितश्रोत्रियागन्तुके।
स्वेच्छया पाठसौकर्य्यकार्य्यानुरोधेन मेधाविनि ध्यानधौताशये
मत्तमातङ्गलीलागते यत्र सीमन्तिनि
त्र्यक्षरैस्त्र्यक्षरैर्ह्रस्वमध्यैः समाप्येत पादोऽपरः दण्डकः स स्मृतो
मत्तमातङ्गलीलाकरः प्राक्तनैः पण्डितैः ॥ १ ॥

अथ ऊनचत्वारिंशदक्षरपादं दण्डकं लक्षयति सद्गुरु इति। सद्गुरोः उपासनया उपार्जितस्य सञ्चितस्य ज्ञानसूर्य्यस्य प्रभया भासा उत्सारितं दूरीकृतं विष्वक्तमः सन्तमसं यया हे तथाभूते हे सन्ततमनवरतं सत्कवीनां प्रशस्तकवीनां स्वान्तस्य मनसः सन्तोषणे व्यापृते निरते चिक्कणं मसृणं यथा भवति तथा निक्कणत् शब्दायमानं किङ्किनी कङ्कणञ्च यस्या हे तथाभूते हे देवतानां ब्राह्मणानाम् अभ्यर्च्चनेन उत्सुके इष्टार्थोद्युक्ते अभ्यर्च्चनेनेत्यत्र 'प्रोसितोत्सुकाभ्यां तृतीयाचे' [ पां २।३।४४ ]ति तृतीया। नित्यं शुश्रूषणेन सेवया प्रीणितस्तर्पितः श्रोत्रियश्छान्दस आगन्तुकश्च यया हे तथाभूते हे मेधाविनि ध्यानेन धौत आशयश्चित्तकषायो यया हे तथाभूते मत्तमातङ्ग इव लीला-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



गतिर्यस्या हे मत्तमातङ्गलीलागते हे सीमन्तिनि यत्र पाठसौकर्य्यरूपकार्य्यस्यानुरोधेन स्वेच्छया ह्रस्वं मध्यं येषां तैस्त्र्यक्षरैस्त्र्यक्षरैः त्रिभिस्त्रिभिर्वर्णैः पादः समाप्येत सम्पूर्य्येत स प्राक्तनैराद्यैः पण्डितैः मत्तमातङ्गलीलाकरो नाम दण्डकः स्मृतः। यथा—नन्दगोपाङ्गनस्थायिनं मौञ्जवर्हिःशिखापायिनं सर्व्वभूताशयस्थायिनं पूतनासुस्तनच्युत्पयोधायिनं गोत्रभिद्यज्ञसंवारकं तत्कृतोत्पातसंहारकं तुङ्गगोवर्द्धनोद्धारकं गोपगोपीजनत्रासनिस्सारकम्। आर्जवावर्जितग्रीवया प्रेमभक्त्यङ्घ्रिसंसेवया मत्तमातङ्गलीलाकरं मानितं वज्रिणा वर्हिवंशीधरं, पायसापूपसूपैर्दधिक्षीरहैयङ्गवीनोदनैर्देवविप्रादिसन्तोषकं स्तौमि कृष्णं पुनर्जन्मसम्मोषकम्॥ पादान्ते यतिः॥ १॥

---

## ४५। दण्डकः।

सुविशदहृदयभावे भवद्भक्तिभावे विनम्रस्वभावे सदाचारनिष्ठे पटूनां
पटिष्ठे यशोभिर्वरिष्ठेऽङ्गनानां गरिष्ठे
सहजसरलतरेऽत्यातुरे प्रेरितस्नेहपीयूषदृष्टे गुणाकृष्टशिष्टेऽनुकम्पाविशिष्टे
सदैवातिहृष्टेऽपरिस्पृष्टकष्टे।
प्रथममिह हि लघून् सप्तवर्णान् स्फुरत्स्वर्णवर्णेऽथ दीर्घौ ततश्चै-
कलघ्वादिकांश्चेद्द्विगुर्व्वन्तकांस्त्रिलिवर्णान् कवीच्छानुरोधा-
दविचलितसमये सन्निवेश्यानुपूर्व्या प्रपूर्य्येत पादस्तदानीमयं सिंह-
विक्रान्तनामापरो दण्डकः पण्डितैः सम्प्रगीतः॥ १॥

अथ पञ्चचत्वारिंशदक्षरपादं दण्डकं लक्षयति सुविशदेति। सुविशदोऽतिनिर्म्मलो हृदयभावो यस्या हे तथाभूते भवन् उत्पद्यमानो भक्तिभावो भक्तिस्वभावो यस्या हे तथाभूते हे विनम्रस्वभावे नम्रप्रकृते सदाचारे निष्ठा स्थितिर्यस्या हे तथाभूते हे पटूनां मध्ये पटिष्ठे पटीयसि हे यशोभिः कीर्त्तिभिर्व्वरिष्ठे अतिविपुले हे अङ्गनानां मध्ये गरिष्ठे गरीयसि हे सहजेन प्रकृत्या सरलतरे अतिसरले अत्यातुरे प्रेरिता व्यापारिता स्नेहपीयूषदृष्टिः



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



स्नेहमयामृतदृष्टिर्यया हे तथाभूते गुणेनाकृष्टाः शिष्टा यया तथाभूते अपरिस्पृष्टं कष्टं यया हे तथाभूते स्फुरत उज्ज्वलस्य सुवर्णस्य वर्ण इव वर्णो यस्या हे तथाभूते अविचलितः अस्खलितः समयः प्रतिज्ञा यस्या हे तथाभूते यदि प्रथमम् आदौ सप्त लघून् वर्णान् अथ द्वौ दीर्घौ वर्णौ ततश्च एकलघुरादिर्येषां तथा द्वौ गुरू अन्तौ येषां तान् तथाभूतान् त्रित्रिवर्णान् कवीनाम् इच्छाया अनुरोधात् आनुपूर्व्या परिपाट्या सन्निवेश्य संस्थाप्य पादः प्रपूर्य्येत तदानीं पण्डितैः सिंहविक्रान्तनामायम् अपरो दण्डकः सम्प्रगीतः संशब्दितः। यथा—सुविमलशशिकलाशेखरः शङ्करः सप्ततन्तोरलब्धादरायाः पितुर्व्वान्यतो वेशनिन्दां विषोढुं ह्यदाशक्नुवत्याश्च सत्यास्त्रिदशमुनिवदनात्तीव्रयोगेन शृण्वंस्ततुत्यागमध्वर्य्युनिक्षिप्तमन्त्राहुतिप्राप्तजन्मभुभिः पीतसोमैर्गणांश्चार्दितान् स्वान्। दशनविदलितदन्तच्छदो जातमन्युर्जटाजूटतः कृष्णकान्तिं त्रिनेत्रं ज्वलद्वह्निकेशं भटानामधीशं करालोग्रदंष्ट्रं, परिघकठिनसहस्रप्रवेष्टं समुत्पादयन्वीरभद्रं महासिंहविक्रान्तमेतेन दक्षं सयज्ञं सुखं नाशयामास सद्यः॥ पादान्ते यतिः॥ १॥

इति दण्डककुसुमम्।

इति ते समवृत्तानां लक्षणान्युदितान्यथो।
शृण्वर्द्धसमवृत्तानां लक्षणं सनिदर्शनम्॥ १॥

हे कान्ते इति एवंरूपाणि समवृत्तानां लक्षणानि ते तुभ्यं मया उक्तानि। अथो अनन्तरम् अर्द्धसमवृत्तानां सनिदर्शनं लक्षणं शृणु आकर्णय॥ १॥

इति धीरेश्वराचार्य्यकृतौ छन्दोऽनुशासने।
श्रीवृत्तमञ्जरीनाम्नि तृतीयस्तवको गतः॥ २॥

इतीति। धीरेश्वराचार्य्यस्य कृतौ निर्म्मि[तौ] षष्ठीतत्पुरुषः 'कर्त्तृकर्म्मणोः कृती'[ पां २।३।६५ ]ति कर्त्तरि षष्ठी। वृत्तानि मञ्जर्य्य इव उपमानोत्तरपदकर्म्मधारयः। श्रीयुक्ता वृत्तमञ्जरी नाम यस्य, अनुशास्ति अनेन करणे ल्युट् छन्दसामनुशासने शास्त्रे तृतीयः स्तवकः गतः समाप्तः॥ २॥

---



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

# चतुर्थः स्तवकः

## अर्धसमवृत्तानि

यत्रेन्द्रवंशाद्यतृतीययोः पदो-
रुदेति वंशस्थमथो तदन्ययोः ।
तच्छान्दसैः सुन्दरी गीतमायतं
तदेव कैश्चिद्धुपजातिसंज्ञितम् ॥ १ ॥

अथार्द्धसमं लक्षयति यत्रेति । यत्र यस्मिन् आद्यतृतीययोः प्रथमतृतीययोः पदोः पादयोः इन्द्रवंशा अथ तदन्ययोः द्वितीयचतुर्थयोः पादयोः वंशस्थम् उदेति तत् छान्दसैः छन्दोविद्भिः आयतं नाम छन्दो गीतम् उक्तम् । यथा—'इत्थं रथाश्वेभनिषादिनास्प्रगे, गणो नृपाणामथ तोरणाद्बहिः । प्रस्थान-कालक्षमवेशकल्पना,-कृतक्षणक्षेपमुदैक्षताच्युतम्' ॥ [माघः १२।१] ॥ यथा वा—'शैलाधिरोहाभ्यसनाधिकोद्धुरैः, पयोधरैरामलकीवनाश्रिताः । तम्पर्वतीयाः प्रमदाश्चचायिरे विहारविष्फारितविभ्रमेक्षणाः' ॥ [ माघः १२।५१ ] ॥ पादान्ते यतिः ॥ १ ॥

यत्र भवेद्विषमे गुरु पादे
प्रथमचतुर्थकसप्तममन्त्ये ।
पञ्चममष्टममन्त्यमुपान्त्यं
भवति समे यदि सा द्रुतमध्या ॥ २ ॥

यत्र यस्यां विषमे पादे प्रथमं चतुर्थं सप्तमम् अन्त्ये दशमैकादशे अक्षरे, समे द्वितीयचतुर्थे पादे पञ्चमम् अष्टमम् अन्त्यं द्वादशम् उपान्त्यम् एकादशञ्चाक्षरं यदि गुरु भवति सा तर्हि द्रुतमध्या नाम छन्दो भवति । यथा—'यद्यपि शीघ्रगतिर्मृदुगामी, बहुधनवानपि दुःखमुपैति । नातिशयत्वरिता न च मृद्वी, नृपतिगतिः कथिता द्रुतमध्या' ॥ [ हलायुधः ] ॥ पादान्ते यतिः ॥ २ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



पादेऽत्तरकं वधूटययुग्मे
ह्रस्वं स्यात्त्रिचतुः षडष्टमञ्च ।
तुर्य्यं नवपञ्चसप्तमञ्चे-
द्युग्मे भद्रविराट् तदोच्यते तत् ॥ ३ ॥

हे वधूटि युवते 'वयस्यचरम'[ पां वां ४।१।२० ]इति वार्त्तिकबलात् यौवन-वाचिनो वधूटशब्दात् स्त्रियां ङीष् ह्रस्वः। यत्र अयुग्मे प्रथमतृतीयपादे तृतीयं चतुर्थं षष्ठम् अष्टमञ्चाक्षरं यदि ह्रस्वं स्यात् युग्मे द्वितीयचतुर्थपादे चतुर्थं पञ्चमं सप्तमं नवमञ्चाक्षरं यदि ह्रस्वं भवति तदा तत् भद्रविराट् नाम छन्दः कविभिरुच्यते। यथा—'यत्पादतले चकास्ति चक्रं, हस्ते वा कुलिशं सरोरुहं वा। राजा जगदेकचक्रवर्त्ती, स्याच्छं भद्रविराट् समश्नुतेऽसौ' ॥ [ हलायुधः ] ॥ पादान्ते यतिः। अस्यौपच्छन्दसकान्तःपातित्वेऽपि विशेषसंज्ञार्थमर्द्धसमाधिकारे पाठः ॥ ३ ॥

विषमे चरणे ललितव्रता
यत्र समे यदि दोधकपादः ।
कविभिस्तमिहायतलोचने
तद्युपचित्रमुदीरितमाद्यैः ॥ ४ ॥

हे आयतलोचने दीर्घलोचने यत्र विषमे पादे ललितव्रता समे चरणे दोधकस्य पादो भवति तर्हि तदा तदाद्यैः कविभिरुपचित्रं नाम छन्द उदीरितम्। यथा—'उपचित्रकमत्र विराजते, बहुधनवानपि दुःखमुपैति। नातिशयत्वरिता मनोहरं, मन्मथकेलिनिकेतनमेतत्' ॥ पादान्ते यतिः ॥ ४ ॥

प्रथमे चरणेऽथ तृतीये
दोधकमादिमवर्णविहीनम् ।
अपरत्र पुनर्य्यदि सर्व्वं
वेगवतीति तदा कथिता स्यात् ॥ ५ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



प्रथमे तृतीये च चरणे अथ यदि दोधकं छन्द आदिमवर्णेनाद्यक्षरेण विहीनं रहितं स्यात् अपरत्र द्वितीये चतुर्थे च चरणे सर्व्वं सकलं दोधकं स्यात्तदा वेगवतीति नाम छन्दः कथिता स्यात्। यथा—'तव मुञ्ज नराधिप सेनां, वेगवतीं सहते समरेषु। प्रलयोर्म्मिमिवाभिमुखीं तां, कः सकलक्षितिभृन्निवहेषु' ॥ [ हलायुधः ] ॥ पादान्ते यतिः ॥ ५ ॥

विषमे प्रथमाक्षरवर्जितं
द्रुतविलम्बितवृत्तपदं भवेत्।
सकलन्तु समे यदि सा तदा
सुकविभिः कथिता हरिणप्लुता ॥ ६ ॥

विषमे प्रथमतृतीयचरणे यदि द्रुतविलम्बितवृत्तस्य पदं चरणं प्रथमाक्षरवर्जितम् आद्याक्षररहितं भवेत्समे द्वितीयचतुर्थचरणे यदि सकलमेव भवेत्तदा सुकविभिः सा हरिणप्लुता नाम छन्दः कथिता। यथा—'तव मुञ्ज नराधिप विद्विषां, भयविवर्जितकेतुलघीयसाम्। रणभूमिपराङ्मुखवर्त्मना, भवति शीघ्रगतिर्हरिणप्लुता' ॥ [ हलायुधः ]॥ पादान्ते यतिः ॥ ६ ॥

विषमे त्रिपञ्चनवमान्त्यं
दीर्घमथो समे प्रथमतुर्य्यम्।
यदि षष्ठकं दशममन्त्यं
केतुमतीं तदात्थ मृगनेत्रे ॥ ७ ॥

हे मृगनेत्रे विषमे चरणे तृतीयं पञ्चमं नवमम् अन्त्यं दशमाक्षरमथ समे चरणे प्रथमं चतुर्थं षष्ठं दशमम् अन्त्यमेकादशञ्चाक्षरं यदि दीर्घं भवति तदा केतुमतीं नाम छन्दस्त्वमात्थ ब्रूहि। यथा—'हतभूरिभूमिपतिचिह्नां, युद्धसहस्रलब्धजयलक्ष्मीम्। सहते न कोऽपि वसुधायां, केतुमतीं नरेन्द्र तव सेनाम्' ॥ [ हलायुधः ] ॥ पादान्ते यतिः ॥ ७ ॥

यदि गुरु विषमेऽस्ति सप्तमं सनवममन्त्यमथो समे पदे।
दशमयतिजपञ्चमाष्टमं भवति तदापरवक्त्रमुच्यते ॥ ८ ॥





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



विषमे पादे सप्तमं नवमम् अन्त्यमेकादशञ्चाक्षरं यदि गुरु भवति अथ समे पादे दशमं यतिजं द्वादशं पञ्चममष्टमञ्चाक्षरं यदि गुरु अस्ति विद्यते तदा अपरवक्त्रं नाम छन्दः कविभिरुच्यते। यथा—'सकृदपि कृपणेन चक्षुषा, नरवर पश्यति यस्तवाननम्। न पुनरपरवक्त्रमीक्षते स हि सुखितोऽर्थिजनस्तथाविधः'॥ [ हलायुधः ] ॥ पादान्ते यतिः ॥ ८ ॥

गुरु भवति ससप्तमाष्टमान्त्यं
विषमपदेऽन्त्ययुगञ्च यर्हि कान्ते।
अथ समपदयोस्तु पञ्चमञ्चो-
पनवममन्त्ययुगञ्च पुष्पिताग्रा ॥ ९ ॥

विषमपादे सप्तमम् अष्टमस्यान्त्यं नवमम् अन्त्ययुगमेकादशं द्वादशञ्चाक्षरं यर्हि यदा गुरु भवति अथ समपादयोर्द्वितीयचतुर्थयोः पञ्चमम् उपनवमं नवमस्य उप समीपे अर्थात् अष्टमं दशमञ्च तथा अन्त्ययुगं द्वादशं त्रयोदशञ्चाक्षरं यदि दीर्घं तदा पुष्पिताग्रा नाम छन्दो भवति। यथा—'त्रिभुवनकमनं तमालवर्णं रविकरगौरवराम्बरं दधाने। वपुरलककुलावृताननाब्जं विजयसखे रतिरस्तु मेऽनवद्या'॥ पादान्ते यतिः ॥ ९ ॥

विषमे सतृतीयषष्ठका-
ष्टमकञ्चेद्दशमञ्च दीर्घकम्।
त्रिचतुर्थकसप्तमं समे
नवमैकादशमाह सुन्दरीम् ॥ १० ॥

विषमे पादे तृतीयं षष्ठम् अष्टमं दशमञ्चाक्षरं यदि दीर्घं भवति समे पादे तृतीयं चतुर्थं सप्तमं नवमम् एकादशञ्चाक्षरं यदि दीर्घं भवति तदा कविगणः सुन्दरीं नाम छन्द आह ब्रवीति। यथा—'सहसा विदधीत न क्रिया,-मविवेकः परमापदास्पदम्। वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः'॥ [ भारविः २।३७ ]॥ 'अधुनीत खगः स नैकधा तनुमुत्फुल्लतनूरुहीकृताम्। करयन्त्रणदन्तुरान्तरे व्यलिखच्चञ्चुपुटेन पक्षती'॥ [ नैषधम् २।२ ]॥ पादान्ते यतिः ॥ १० ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



इयमेव भवेत् प्रियंवदा
प्रियवाग्वादिनि हंसगद्गदे ।
अयि सुन्दरि कस्य चिन्मते-
त्ववियोगिन्यथवा वियोगिनी ॥ ११ ॥

अस्या नामान्तराण्याह इयमिति । हे प्रियवाग्वादिनि प्रियवाक्यभाषिणि हे हंसीव गद्गदे लीलाविलासगमने वाग्वैकृत्ये च गद्गद इति कोषः । हे सुन्दरि हे अवियोगिनि अविरहिणि इयमेव सुन्दर्य्येव कस्य चित्कवेर्मते प्रियंवदा अथवा वियोगिनी नाम छन्दो भवेत् ॥ ११ ॥

वरसुन्दरि सुन्दरीपदाना-
मवसानेऽधिकमेकमस्ति दीर्घम् ।
यदि तर्हि वसन्तमालिकां वा
शिशुलीलां भण मालभारिणीं वा ॥ १२ ॥

हे वरसुन्दरि सुन्दरीपादानामन्ते यद्येकं दीर्घमधिकमस्ति विद्यते तर्हि वसन्तमालिकाम् अथवा शिशुलीलाम् अथवा मालभारिणीं नाम छन्दो भण वद । 'अयि काककिशोर पक्षलक्ष्म्या न विदध्याः पिकशावकेन साम्यम् । वर्चसि स्फुटतां गते तदानीं युवयोः स्यादधमोत्तमावबोधः ॥ [ वृत्तमाला ] ॥ पादान्ते यतिः । मालाभारिणीति स्थिते 'इष्टकेषीकामालानां चिततूलभारिष्वि' [ पां ६।३।६५ ]ति ह्रस्वः ॥ १२ ॥

स्वागता भवति चेद्विषमेऽङ्घ्रौ
यत्र धीमति समे रथोद्धता ।
कीर्त्तिता कविगणैर्वितता सा
तर्हि कैश्चिदुपजातिरिष्यते ॥ १३ ॥

हे धीमति यत्र विषमेऽङ्घ्रौ चरणे स्वागता छन्दो भवति समे चरणे रथोद्धता छन्दो यदि भवति तर्हि कविगणैः सा वितता नाम छन्दः कीर्त्तिता । कैश्चित्कविभिः सा उपजातिर्नाम इष्यते । यथा—आलि वालिशतया



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वकुलोऽयं, वाटिकानिकट एव रोपितः। न श्रुतं न च कृतं वचनस्मे, तस्य सम्प्रति फलं विजृम्भते। पादान्ते यतिः॥ १३॥

यत्र तु द्वितुर्य्यषष्ठमष्टमञ्च
तदन्तगान्त्यमन्तिमं लघून्ययुग्मे।
दाशमन्द्वितुर्य्यषष्ठमष्टमञ्च
समेऽन्तिमे गुरूणि सा मती यवाद्या॥ १४॥

यत्र तु यस्यामेव अयुग्मे पादे द्वितीयं चतुर्थं षष्ठमष्टमं तस्याष्टमस्य अन्तगन्नवमं तस्यान्त्यं दशमम् अन्तिमं द्वादशञ्चाक्षराणि लघूनि भवन्ति। समे पादे द्वितीयं चतुर्थं षष्ठमष्टमं दशमं तथा अन्तिमे द्वादशत्रयोदशे चाक्षराणि गुरूणि भवन्ति सा यवशब्द आद्यो यस्या[स्तादृशी मतिः] यवमती[त्यर्थः] [एतन्नामकं] छन्दो भवति। यथा—'पद्मकन्तुकोमले करे विभाति, प्रशस्तमत्स्यलाञ्छनं पदे च यस्याः। सा यवान्विता भवेद्धनाधिका च, समस्तबन्धुपूजिता प्रिया च पत्युः'॥ [ हलायुधः ]॥ पादान्ते यतिः॥ १४॥

चेद्द्वितुर्य्यषष्ठमष्टमं तदन्ति-
मस्यान्त्यमन्तिमं पदेऽसमे लघूनि।
स्युः समे त्रिपञ्चसप्तमाष्टमान्त्य-
मेकादशं त्रयोदशं यवान्यसौ तु॥ १५॥

असमे प्रथमतृतीये पादे द्वितीयं चतुर्थं षष्ठम् अष्टमन्तदन्तिमस्याष्टमस्यान्तिमस्य नवमस्यान्त्यं दशमम् अन्तिमं द्वादशञ्चाक्षरं यदि लघूनि भवन्ति। समे द्वितीयचतुर्थे पादे तृतीयं पञ्चमं सप्तमम् अष्टमान्त्यं नवमम् एकादशं त्रयोदशञ्चाक्षरं लघूनि भवन्ति तदासौ तु यवानी नाम छन्दः स्यात्। यथा—दैवपैतृकेषु कार्य्यसञ्चयेषु भैषज्यकार्य्यसञ्चयेषु वा कदापि। सारविन्मनीषिभिर्नियुज्यते न दुष्टाङ्गना यथा यवान्यमूं धिगस्तु॥ पादान्ते यतिः॥ १५॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



आद्यचतुर्थषष्ठमष्टमं तदन्त्यान्त्यं
द्वादशन्त्रयोदशश्चतुर्दशश्चेत्।
दीर्घमयुग्म आदिमं त्रिपञ्चमं युग्मे
षट्पदाष्टमादिमान्त्यमन्त्ययुग्मम्॥ १६॥

अयुग्मे पादे आद्यं चतुर्थं षष्ठम् अष्टमं तस्याष्टमस्य अन्त्यं नवमं तस्यान्त्यं दशमं द्वादशं त्रयोदशं चतुर्दशश्चाक्षरन्दीर्घञ्चेद्भवति। युग्मे पादे आद्यं तृतीयं पञ्चमम् अष्टमस्यादिमम् अन्त्यञ्च सप्तमनवममित्यर्थः तथा अन्त्ययुग्मम् अन्त्यद्वयमेकादशद्वादशञ्चाक्षरं यदि दीर्घं भवति तर्हि षट्पदा नाम छन्दो भवति। यथा—पश्य हरेऽद्भुतं वसन्तराजमाहात्म्यं, फुल्लमल्लिका-लवङ्गमालतीजम्। स्वादुतमं मधु प्रमुच्य षट्पदाः कान्तावक्त्रलग्नमासवं पिबन्त्यभीक्ष्णम्॥ पादान्ते यतिः॥ १६॥

अयि गुरु विषमे पदि सप्तम-
दशममथ समेऽक्षरं द्वादशम्।
नवमदशमसप्तमकं यदि
कविभिरभिहिता तदा कौमुदी॥ १७॥

अयि भो विषमे पादे सप्तमं दशमञ्चाक्षरं यदि गुरु भवति। अथ समे पादे सप्तमं नवमं दशमं द्वादशञ्चाक्षरं यदि गुरु भवति तदा कविभिः कौमुदी नाम छन्दोऽभिहिता उक्ता। द्रुहिणहरपुरन्दरसेवित,-हरिपदनखचन्द्रमःकौमुदी। शमदमरहितस्य सदा मम, हरतु हृदयगान्तमःसन्ततिम्॥ पादान्ते यतिः॥१७॥

यदि गुरु पञ्चममष्टमं भवे-
द्विषमे पदे दशमं द्वादशं समे।
नवमतृतीयकपञ्चमाष्टमं
स्मर मञ्जुसौरभमेकादशान्तिमे॥ १८॥

विषमे पादे पञ्चमम् अष्टमं दशमं द्वादशञ्चाक्षरं यदि गुरु भवेत्। समे पादे तृतीयं पञ्चममष्टमं नवमम् एकादशम् अन्तिमं त्रयोदशञ्चाक्षरं यदि गुरु



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



भवेत्तर्हि मञ्जुसौरभं नाम छन्दो भवति। यथा—तटतरुमूलसमाश्रितोऽध्वगो मृदुमञ्जुसौरभमाघ्राय सारसम्। कमलदलस्य पुटेन सारसं सलिलं पिबन् परमां तृप्तिमाययौ ॥ पादान्ते यतिः ॥ १८ ॥

आदिमं सतृतीयकं
गुरु षष्ठकं विषमेऽष्टमम्।
चेत्तृतीयकपञ्चमं
ललिता समे दशमाष्टमम् ॥ १९ ॥

विषमे पादे प्रथमं तृतीयं षष्ठम् अष्टमं यदि गुरु भवति समे पादे तृतीयं पञ्चमम् अष्टमं दशमञ्चाक्षरं यदि गुरु भवति तदा ललिता नाम छन्दो भवति। यथा—राधिकाचिरकिङ्करः, किमिति त्वमाश्रुतवान् हरे। तद्रहस्यमुदाहर, प्रजहास तं ललितेत्यलम् ॥ पादान्ते यतिः ॥ १९ ॥

त्रिगुणितनवमितमगुरु पुनरगुरु
गुरु च भवति यदि विषमपदे
त्रिगुणितदशमितमगुरु गुरु च ननु
सुतनु यदि भवति सुदति समपदे।
सुविमलनवदलकमलदलमृदुल-
नवकिशलयशयतलयुगले
जलधिपरिधिपरिसरपरिगतसुवि-
मलगुणकविगण इह वदति शिखाम् ॥२०॥

हे सुतनु हे सुदति सुविमलनवदलकमलदलमिव मृदुलतमम् अतिकोमलं शयकिशलयस्य पाणिपल्लवस्य तलयुगलं यस्या हे तथाभूते विषमपादे त्रिगुणित-नवमितं सप्तविंशतिपरिमितम् अगुरु लघु ततः परं पुनरगुरु ततश्च पुनर्गुरु मिलित्वा यदि ऊनत्रिंशदक्षराणि भवन्ति। समपादे त्रिगुणितदशमितं त्रिंशत्परि-मितम् अगुरु लघु ततो गुरु च मिलित्वा एकत्रिंशदक्षराणि यदि भवन्ति जलधिपरिधेः सागररूपवेष्टनस्य परिसरं पर्य्यन्तभूवं परिगताः प्राप्ताः सुविमला



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



गुणा येषां तथाभूतानां कवीनां गणस्तदा शिखां नाम छन्द इह वदति। यथा—'अभिमतवकुलकुसुमघनपरिमलमिलदलिमुखरितहरिति मधौ, सहचर-मलयपवनरयतरलितसरसिजरजसि मनसिशयवितते। विकसितविविधकुसुम-सुलभसुरभिशरमदननिहितसकलजने, ज्वलयति मम हृदयमविरतमिह सुतनु तव विरहदहनविषमशिखा' ॥ [ हलायुधः ] ॥ पादान्ते यतिः ॥ २० ॥

कलितललितचलवलयतरलतरतरल-
विलसिततनु जशिरउदितञ्-
मलयजतिलकघनविगमसमयसमु-
दितशशिलसदलिकगगने।
प्रवरकवरधृतसुकुसुमपरिमलमिल-
दलिपटलचल इह [ननु] शिखा-
विषमसमचरणसमविषमचरणविर-
चनमयि यदि भवति खजा ॥२१॥

कलितैर्धृतैर्ललितैर्मनोहरैश्चलैर्लोलैर्वलयैः कटकैस्तरलतरेण अतिलोलेन तरलेन हारमध्यगतमणिना च विलसिता उद्भासिता तनुः शरीरं यस्या हे तथाभूते मलयजतिलकमेव घनविगमसमयः शरत्तत्र समुदितः शशी चन्द्रस्तेन दीप्यमानम् अलिकगगनं ललाटाकाशं यस्या हे तथाभूते प्रवरे प्रशस्ते कवरे विन्यस्तवेशे केशे धृतस्य कुसुमस्य परिमलेन मिलद्भिः सङ्गच्छद्भिरलिपटलैर्भ्रमरसमूहैश्चले क्षुब्धे इह यदि शिखायाः विषमसमचरणाभ्यां समविषमचरणयोर्विरचनं निबन्धनं भवति तर्हि जकारस्य शिरसि उपरिभागे उदितः ञ् अस्वरञकारो यस्याः तथाभूता खजा खञा नाम छन्दो भवति। यथा—'अपगतघन-विशददशदिशि हृतजनदृशि परिणतकणकपिलकलमे, प्रविकसितसमकुसुमभव-परिमलसुरभितमरुति शरदि समये। शुचिशशिमहसि विवृतसरसिरुहि मुदित-मधुलिहि विमलितधरणितले, किमपरमिह कमलमुखि सुखमनुभवति मम हृदय-कमलमधुना' ॥ [ हलायुधः ] ॥ पादान्ते यतिः ॥ २१ ॥

अर्द्धसमवृत्ताधिकारो निवृत्तः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



इत्यर्द्धसमवृत्तानां लक्षणान्युदितान्यथो ।
वक्ष्ये विषमवृत्तानां लक्षणं सनिदर्शनम् ।। २२ ।।

इति एवंरूपाणि अर्द्धसमवृत्तानां लक्षणानि उदितानि उक्तानि । अथो अनन्तरं विषमवृत्तानां सनिदर्शनं सोदाहरणं लक्षणं वक्ष्ये कथयिष्ये ॥ २२ ॥

इति धीरेश्वराचार्य्यकृतौ छन्दोऽनुशासने ।
श्रीवृत्तमञ्जरीनाम्नि चतुर्थः स्तवको गतः ।। २३ ।।

इतिशब्दः स्तवकसमाप्तिसूचकः । स्पष्टमन्यत् ॥ २३ ॥

---



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

# पञ्चमः स्तवकः

## विषमवृत्तानि

### वक्त्रकुसुमम्

दीर्घान्ता न त्रयो वर्णा ह्रस्वाः स्युर्वाक्षरादाद्यात्।
ह्रस्वाद्याश्चेत्त्रयस्तुर्य्यात्पादे त्वष्टाक्षरे वक्त्रम्॥ १॥

अथ विषमवृत्तं लक्षयति दीर्घान्ता इति। अष्टाक्षरे पादे यदि आद्यात्प्रथमादक्षरात्परे त्रयो वर्णा दीर्घान्ता दीर्घपरा ह्रस्वा वा न स्युः तु किन्तु तुर्य्यात् चतुर्थादक्षरात् परे त्रयो वर्णा ह्रस्वाद्या ह्रस्वपूर्व्वाः स्युस्तदा वक्त्रं नाम छन्दो भवेत्। पादान्ते यतिः। लक्षणमेवोदाहरणम्। इमानि च सर्वेषामुदाहरणानि—'नवधाराम्बुसंसिक्तवसुधागन्धिनिःश्वासम्। किञ्चिदुन्नतघोनाग्रा मही कामयते वक्त्रम्'॥ [ हलायुधः ]॥ अन्यैरप्युक्तम्—'नीलोत्पलवनेष्वद्य चरन्त्यश्वारुसंरावाः। रामाः कौशेयसंवीताः प्रनृत्यन्तश्च कादम्बाः'॥ [ हलायुधः ]॥ तथा—'दुर्भाषितेऽपि सौभाग्यं प्रायः प्रकुरुते प्रीतिः। मातुर्मनो हरन्त्येव दौर्ललित्योक्तिभिर्बालाः'॥ [ हलायुधः ]॥ इत्यादि॥१॥

युग्मयोः पादयोर्नाद्याद्वर्णात्पश्चात्त्रयो वर्णाः।
ह्रस्वमध्या न कर्त्तव्या मुनिरित्यब्रवीत्कान्ते॥ २॥

हे कान्ते अस्य वक्त्रस्य युग्मयोर्द्वितीयचतुर्थयोः पादयोराद्यात्प्रथमाद्वर्णात्परे त्रयो वर्णा ह्रस्वमध्या न कर्त्तव्याः। मुनिः पिङ्गलाचार्य्य इत्यब्रवीदुवाच॥ २॥

चत्वारि युग्मयोः प्राञ्चि गुरूण्येवाक्षराणीति।
गङ्गादासेन यत्तूक्तं मुनेर्मतविरोध्येतत्॥ ३॥

यत्तु वक्त्रं युग्भ्यां मगौ स्यातामिति सूत्रेण अस्य वक्त्रस्य युग्मयोः पादयोः प्राञ्चि पूर्व्वाणि चत्वारि अक्षराणि गुरूण्येव कर्त्तव्यानीति गङ्गादासेनोक्तं तत्



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



मुनेः पिङ्गलनागस्य मतविरोधि। यथाह पिङ्गलपादः—वान्यदिति। अत्र मृतसञ्जीवनीवृत्तौ भट्टहलायुधसम्मतव्याख्या च। यथा—सगणनगणाभ्या-मन्यन्मगणादित्रिकषट्कमध्ये यत्किञ्चित्त्रिकान्तरं वा कर्त्तव्यमिति॥ ३॥

युग्मयोः पादयोस्तुर्य्यादूर्द्ध्वञ्चेद्गुरुमध्यगाः।
वर्णास्त्रयः प्रयुज्यन्ते पथ्यावक्त्रं तदोदितम्॥ ४॥

अष्टाक्षरे पादे युग्मयोः तुर्य्यात् चतुर्थादक्षराद् ऊर्द्ध्वं परत्र यदि गुरुर्मध्यगो येषां तथाभूतास्त्रयो वर्णाः प्रयुज्यन्ते तदा पथ्यावक्त्रं नाम छन्द उदितम्। यथा—'नित्यं नीतिनिषण्णस्य राज्ञो राष्ट्रं न सीदति। नहि पथ्याशिनः काये जायन्ते व्याधिवेदनाः'॥ [ हलायुधः ]॥ ४॥

तुर्य्यतोऽङ्घ्र्योरयुग्मयोस्त्रिमध्यगुरुवर्णाश्चेत्।
पथ्यावक्त्रन्तदा भवेद्विपरीताद्यमैकीयम्॥ ५॥

अष्टाक्षरे पादे अयुग्मयोः प्रथमतृतीययोः अङ्घ्र्योः पादयोस्तुर्य्यतश्चतुर्था-दक्षरादूर्द्ध्वं यदि त्रयो मध्यगुरवो वर्णाः प्रयुज्यन्ते तदा ऐकीयाचार्य्यमते विपरीतशब्द आद्यो यस्य तथाभूतं पथ्यावक्त्रं विपरीतपथ्यावक्त्रमित्यर्थः नाम छन्दो भवेत्। यथा—'भर्तुराज्ञानुवर्त्तिनी या स्त्री स्यात् सा स्थिरा लक्ष्मीः। स्वप्रभूत्वाभिमानिनी विपरीता परित्याज्या'॥ [हलायुधः]॥ पादान्ते यतिः॥५॥

दयितेऽङ्घ्र्योर्विषमयोश्चतुर्थाच्चेत्त्रयो ह्रस्वाः।
चपलावक्त्रमुदितं तदाचार्य्यानि वागीशैः॥ ६॥

हे दयिते हे आचार्य्यानि 'आचार्य्यादणत्वञ्चे'[ गं पां ४।१।४९ ]ति न णत्वम्। अष्टाक्षरे पादे विषमयोः प्रथमतृतीययोरङ्घ्र्योश्चरणयोः चतुर्थादक्षराद्दूर्द्ध्वं यदि त्रयो ह्रस्वा वर्णाः प्रयुज्यन्ते तदा वागीशैर्व्वाक्पतिभिश्चपलावक्त्रं नाम छन्द उदितम्। यथा—'क्षीयमाणाग्रदशना वक्त्रनिर्म्मांसनासाग्रा। कन्यका वाक्यचपला लभते धूर्त्तसौभाग्यम्'॥ [ हलायुधः ]॥ ६॥

इति वक्त्रकुसुमम्।

———



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

## विपुलाकुसुमम्

ह्रस्वः स्यात्सप्तमो वर्णः पादयोर्यदि युग्मयोः ।
अकलङ्कशशाङ्कास्ये स्याद्युग्मविपुला तदा ॥ १ ॥

हे अकलङ्कशशाङ्कास्ये कलङ्करहितचन्द्रवदने अष्टाक्षरे पादे युग्मयोः द्वितीय-चतुर्थयोः पादयोर्यदि सप्तमो वर्णो ह्रस्वः स्यात्तदा युग्मविपुला नाम छन्दो भवति । यथा— ... ... ... ॥ १ ॥

चतुर्षु चरणेष्वपि ह्रस्वं भवति सप्तमम् ।
चेत्तर्हि विपुलेति सा सैतवाचार्य्यसम्मता ॥ २ ॥

अष्टाक्षरे पादे चतुर्षु चरणेषु अपि यदि सप्तममक्षरं ह्रस्वं भवति तर्हि सा सैतवस्याचार्य्यस्य सम्मता विपुला नाम छन्दः । यथा—'सैतवेन यथार्णवं तीर्णो दशरथात्मजः । रक्षःक्षयकरीं पुनः प्रतिष्ठां स्वेन बाहुना' ॥ [ हलायुधः ] ॥ पादान्ते यतिः ॥ २ ॥

तुर्य्यादयुग्मे चरणं दीर्घाद्यं त्र्यक्षरं यदा ।
कान्ते प्रयुक्तं क्रियते ज्ञेया भविपुला तदा ॥ ३ ॥

हे कान्ते अष्टाक्षरे पादे अयुग्मे चरणे चतुर्थादक्षरात् दीर्घमाद्यं यस्य तथाविधं त्र्यक्षरं प्रयुक्तं क्रियते तदा भविपुला नाम छन्दो भवति । यथा—'इयं सखे चन्द्रमुखी सितज्योत्स्ना च मानिनी । इन्दीवराक्षी हृदयं दन्दहीति तथापि मे' ॥ [ हलायुधः ] ॥ अयुग्म इति जातिपक्षे द्वयोरपि पादयोर्ग्रहणम् । व्यक्तिपक्षे पुनरेकस्य । एकपक्षे पुनः प्रथमस्य तृतीयस्य वा । तथाच महाकवीनाम्प्रयोगाः ॥ 'वटे वटे वैश्रवणश्चत्वरे चत्वरे शिवः । पर्व्वते पर्व्वते रामः सर्व्वत्र मधुसूदनः ॥ देवः स जयति श्रीमान्दण्डधारो महीपतिः । यस्य प्रसादाद्भुवनं शाश्वते पथि तिष्ठति ॥ उपस्थितम्प्राञ्जलिना विनीतेन गरुत्मता । नारायणं स्तौमि सदा भक्तानाम्भयनाशनम्' ॥ [ हलायुधः ] ॥ इत्यादि ॥ पादान्ते यतिः ॥ ३ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



आद्ये तृतीये द्वयोर्वाङ्घ्रोस्तुर्य्यादक्षरात्परम् ।
ह्रस्वमध्यं त्र्यक्षरञ्चेत्तदा रविपुला भवेत् ।। ४ ।।

अष्टाक्षरे पादे प्रथमे तृतीये वा चरणे द्वयोरपि चरणयोर्वा चतुर्थादक्षरात्परं त्र्यक्षर वर्णत्रयं यदि ह्रस्वं मध्यं यस्य तथाभूतं भवति तदा रविपुला नाम छन्दो भवेत् । 'लक्ष्मीपतिं लोकनाथं रथाङ्गधरमीश्वरम् । यज्ञेश्वरं शार्ङ्गपाणिं प्रणमामि त्रयीन्तनुम् ॥ व्यक्तिपक्षे प्रथमे पादे—महाकविं कालिदासं वन्दे वाग्देवतागुरुम् । यज्ज्ञाने विश्वमाभाति दर्पणे प्रतिबिम्बवत् ॥ तृतीये पादे—कामिनीभिः सह प्रीतिः कस्मै नाम न रोचते । यदि न स्याद्वारिवीचिचञ्चलं हतजीवितम्' ॥ [ हलायुधः ] ॥ पादान्ते यतिः ॥ ४ ॥

आद्ये तृतीय उभयोर्वाङ्घ्रोर्वर्णाच्चतुर्थतः ।
वर्णास्त्रयोऽपि लघवः स्युश्चेन्नविपुला तदा ।। ५ ।।

अष्टाक्षरे पादे प्रथमे तृतीये वा चरणे उभयोर्वा चरणयोश्चतुर्थादक्षरात्त्रयोऽपि वर्णा यदा लघवः स्युस्तदा नविपुला नाम छन्दो भवति । पादान्ते यतिः । जातिपक्षे यथा—यस्या विभाति विपुला मन्मथस्थानपिण्डिका । या चतुःषष्टि चतुरा सा स्त्री स्यान्नृपवल्लभा ॥ तथैव भारविः—'युयुत्सुनेव कवचं किमामुक्तमिदं त्वया । तपस्विनो हि वसने केवलाजिनवल्कले' ॥ [ ११।१५] ॥ व्यक्तिपक्षे—कालिदासः—'अनाकृष्टस्य विषयैर्विद्यानाम्पारदृश्वनः । तस्य धर्म्मरतेरासीद् वृद्धत्वं जरसा विना' ॥ [ रघुः—१।२३ ] ॥ तव मन्त्रकृतो मन्त्रैर्दूरात् संशमितारिभिः । प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः' ॥ [ हलायुधः ] ॥ पादान्ते यतिः ॥ ५ ॥

आद्ये तृतीयेऽङ्घ्रोर्द्वयोर्वा चतुर्थाक्षराद्यदि ।
ह्रस्वान्तं स्याद्वर्णत्रयं तदा तविपुला भवेत् ।। ६ ।।

अष्टाक्षरे पादे प्रथमे तृतीये वा पादे अथवा द्वयोरपि पादयोश्चतुर्थादक्षरात्परं वर्णत्रयं यदि ह्रस्वोऽन्तो यस्य तथाभूतं भवेत् तदा तविपुला नाम छन्दो भवेत् । यथा—वन्दे देवं सोमेश्वरं जटामुकुटमण्डितम् । खट्वाङ्गधरं चन्द्रमग्निशिखामणि-विभूषितम् ॥ व्यक्तिपक्षे—यथा—'वन्दे कविं श्रीभारविं लोकसन्तमसच्छिदम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



दिवादीपा इवाभान्ति यस्याग्रे कवयोऽपरे॥ तथान्येषामपि प्रयोगः—लोकवत्प्रतिपत्तव्यो लौकिकोऽर्थः परीक्षकैः। लोकव्यवहारम्प्रति सदृशौ बालपण्डितौ'॥ [ हलायुधः ]॥ पादान्ते यतिः॥ ६॥

आद्ये तृतीये वाप्यङ्घ्रौ गोरुभयोर्वा चतुर्थतः।
त्रीन्दीर्घवर्णान्दत्वाहुः केचिन्मविपुलाम्प्रिये॥ ७॥

हे प्रिये आद्ये प्रथमे तृतीये वा अङ्घ्रौ अथवा उभयोः प्रथमतृतीययोरङ्घ्रोश्चतुर्थादक्षरात्त्रीन् दीर्घवर्णान् दत्त्वा विन्यस्य केचित्कवयः मविपुलां नाम छन्द आहुर्ब्रुवन्ति। जातिपक्षे यथा—सर्व्वातिरिक्तं लावण्यं बिभ्रती चारुविभ्रमा। स्त्रीलोकसृष्टिस्त्वन्यैव निःसामान्यस्य वेधसः॥ व्यक्तिपक्षे श्रीकालिदासः—'मनोऽभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः। षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः'॥ [ रघुः—१।३९ ]॥ 'अथ प्रदोषे दोषज्ञः संवेशाय विशाम्पतिम्। सूनुः सूनृतवाक् स्रष्टुर्विससर्जोदितश्रियम्'॥ [ रघुः—१।९३ ] तृतीयपादे—'अदूरवर्त्तिनीं सिद्धिं राजन् विगणयात्मनः। उपस्थितेयं कल्याणी नाम्नि कीर्तित एव यत्'॥ [ रघुः १।८७ ]॥ 'श्लाघ्यस्त्यागोऽपि वैदेह्याः पत्युः प्राग्वंशवासिनः। अनन्यजानेस्तस्यासीत्सैव जाया हिरण्मयी'॥ [रघुः—१५।६१]॥ पादान्ते यतिः॥ ७॥

आदिमे वा तृतीये वा द्वयोर्वान्यस्य पादयोः।
लघुनी द्वे गुरु चैकं तुर्य्यात्सविपुलां विदुः॥ ८॥

अष्टाक्षरे पादे आदिमे प्रथमे तृतीये वा पादे द्वयोः आदिमतृतीययोर्वा पादयोश्चतुर्थाद् अक्षरात्परे द्वे लघुनी एकं गुरु च न्यस्य प्रयुज्य केचन मनीषिणः सविपुलां नाम छन्दो विदुः वदन्ति। व्यक्तिपक्षे यथा—जिते तु लभते लक्ष्मीं मृते चापि वराङ्गनाः। क्षणविध्वंसिनि काये का चिन्ता मरणे रणे'॥ [ हलायुधः ]॥ पादान्ते यतिः॥ ८॥

भवेत्सङ्कीर्णविपुला विपुलापादमिश्रणात्।
चतुर्थवर्णश्च गुरुरमूषाम्प्रायशः स्मृतः॥ ९॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उक्तप्रकाराणां विपुलानां पादमिश्रणात् चरणसाङ्कर्य्यात् सङ्कीर्णविपुला नाम छन्दो भवेत्। अमूषां विपुलानां प्रायशो बाहुल्येन चतुर्थवर्णो गुरुः स्मृत इत्याम्नायः। यथा—'क्वचित्काले प्रसरता क्वचिदापत्य विघ्नता। शुनेव सारङ्ग-कुलं त्वया भिन्नं द्विषां कुलम्॥ इत्यादयो विपुलाविकल्पाः सङ्कीर्णाश्चानुकोटिशः काव्येषु दृश्यन्ते'॥ [हलायुधः]॥ पादान्ते यतिः॥ ६॥

प्रकाराश्चारुसर्वाङ्गि विपुलानामनेकशः।
सङ्कीर्णाश्चानुलक्ष्यन्ते महाकाव्येषु भूरिषु॥ १०॥

चारु सुन्दरं सर्व्वाङ्गं यस्या हे चारुसर्व्वाङ्गि भूरिषु बहुषु महाकाव्येषु विपुलानामुक्तप्रकाराणामनेकशः बहुशः प्रकारा भेदाः सङ्कीर्णाश्च अनुलक्ष्यन्ते अवलोक्यन्ते॥ १०॥

इति विपुलाकुसुमम्।

---

## श्लोककुसुमम्

किन्ते ज्ञानेन वक्त्राणां विपुलानाञ्च वल्लभे।
श्लोकलक्षणमाकर्ण्य प्रायस्तत्फलमाप्नुहि॥ १॥

उपसंहरति किन्त इति। हे वल्लभे प्रिये वक्त्राणां विपुलानाञ्च ज्ञानेन तव किं न किञ्चिदित्यर्थः। श्लोकलक्षणं श्लोकनामकच्छन्दसो लक्षणमाकर्ण्य श्रुत्वा प्रायस्तत्फलं तेषां फलं प्राप्नुहि लभस्व। श्लोकलक्षणे श्रुते कृतार्था भविष्यसि॥ १॥

सर्व्वत्र पञ्चमो ह्रस्वो गुरुः षष्ठो द्वितुर्य्ययोः।
यत्राङ्घ्रयोः सप्तमो ह्रस्वः स श्लोको गुरुरन्ययोः॥ २॥

शेषाणामक्षराणान्तु यथा श्रुतिसुखं भवेत्।
कार्य्यस्तथैव विन्यासो मनीषिणि यदृच्छया॥ ३॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



श्लोकं लक्षयति सर्व्वत्रेति। सर्व्वत्र वक्त्रेषु चरणेषु वा यत्र पञ्चमो वर्णो ह्रस्वो भवति षष्ठो वर्णो गुरुः द्वितुर्य्ययोरङ्घ्र्योर्द्वितीयचतुर्थयोः पादयोः सप्तमो वर्णो ह्रस्वः अन्ययोः प्रथमतृतीययोः पादयोः सप्तमो वर्णो गुरुः स श्लोको नाम छन्दो भवति। हे मनीषिणि बुद्धिमति तु किन्तु यथा येन प्रकारेण विन्यासे कृते श्रुतिसुखं सुश्राव्यं भवेत् शेषाणामवशिष्टानामक्षराणां तथैव तेन प्रकारेणैव यदृच्छया स्वेच्छानुसारेण विन्यासः सन्निवेशः कार्य्यः॥ 'श्लोके षष्ठं गुरु ज्ञेयं सर्व्वत्र लघु पञ्चमम्। द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः'॥ [श्रुतबोधः]॥ २॥

इति श्लोककुसुमम्।

---

## पदचतुरूर्ध्वकुसुमम्

पादादष्टाक्षरस्योर्द्ध्वं
यत्र भवति सुतनु प्रतिपादम्।
प्रक्रमतश्चतुरक्षरवृद्धिर्मुनिनेष्टन्तत्
पदचतुरूर्द्ध्वं गुरुलघुनियमो न पुनरिह कोऽपि॥१॥

हे सुतनु अष्टौ अक्षराणि यस्मिन् सः तस्य पादाद् ऊर्द्ध्वं परं प्रतिपादं पादे पादे यथार्थेऽव्ययीभावः द्वितीयतृतीयचतुर्थपादेष्वित्यर्थः। प्रक्रमतो यथाक्रमं यत्र चतूर्णामक्षराणां वृद्धिर्भवति तन्मुनिना पिङ्गलेन पदचतुरूर्द्ध्वं नाम छन्द इष्टम्। इह पदचतुरूर्द्ध्वे गुरुलघुनियमः गुरुलघुव्यवस्था कोऽपि नेष्टः। यथा—'तस्याः कटाक्षविक्षेपैः, कम्पिततनुकुटिलैरतिदीर्घैः। तक्षकदष्ट इवेन्द्रियशून्यः क्षतचैतन्यः, पदचतुरूर्द्ध्वं न चलति पुरुषः पतति सहसैव'॥ [हलायुधः]॥ पादान्ते यतिः॥१॥

यदि पदचतुरूर्द्ध्वे-
ऽनुचरणमुदयति पुनरन्ते।
द्विगुरु सकलमपरमगुरु हि तदाऽऽपी-
सह कथित उरुमतिभिर-हणनलिनमुखि पीडः॥२॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे अरुणनलिनमुखि यदि पदचतुरूर्द्ध्वे छन्दसि अनुचरणं चतुर्षु चरणेषु अन्ते अवसाने पुनर्द्विगुरु गुरुद्वयमुदयति अपरं सकलमन्यत्सर्व्वम् अगुरु हि लघु एव तदा उरुमतिभिर्विपुलधीभिः आङा सह पीड आपीड़ो नाम छन्दः कथितः। यथा—'कुसुमितसहकारे, हतहिममहिमशुचिशशाङ्के। विकसित-कमलसरसि मधुसमयेऽस्मिन्, प्रवससि पथिकहतक यदि भवति तव विपत्तिः' ॥ [ हलायुधः ] ॥ पादान्ते यतिः ॥ २ ॥

प्रत्याङ्प्रथमपदक-
पीड़ो भवति ननु सुदति यदि।
आद्याक्षरयुगमलघु भवति पदचतु-
रूर्द्ध्व प्रतिचरणमपरमखिलममलमुखि लघु ॥३॥

हे सुदति हे अमलमुखि पदचतुरूर्द्ध्वे छन्दसि प्रतिचरणं चतुर्षु चरणेषु आद्याक्षरयुगं प्रथमाक्षरद्वयं यदि अलघु गुरु भवति अपरं सर्वं लघु तदा प्रत्याङ् प्रथमपदं यस्य तथाभूतः पीड़ः अर्थात्प्रत्यापीड़ो नाम छन्दो भवति। यथा—'चित्तम्मम रमयति, कान्तं वनसिदमुपगिरिनदि। कूजन्मधुकरकलरव-कृतजनधुति, पुंस्कोकिलमुखरितसुरभिकुसुमचिततरुतति' ॥ [ हलायुधः ] ॥ पादान्ते यतिः ॥ ३ ॥

आद्यौ सुतनु तथान्त्यौ
दीर्घौ मतिमति पदचतुरूर्द्ध्वे।
ह्रस्वाः प्रतिचरणमपर [इ]ह यदि वर्णाः
प्रत्याङ्प्रथमकमुरगपतिरिममपि वदति पीड़म् ॥४॥

प्रत्यापीड़भेदमाह आद्याविति। हे सुतनु हे मतिमति इह पदचतुरूर्द्ध्वे प्रतिचरणं चतुर्षु पादेषु आद्यौ द्वौ प्रथमद्वितीयौ वर्णौ अन्त्यौ द्वौ च [ यथाक्रमं सप्तमाष्टमौ एकादशद्वादशौ पञ्चदशषोडशौ ] विंशोनविंशौ [ च दीर्घौ ] अपरे वर्णा यदि ह्रस्वा लघवो भवन्ति तदा उरगपतिः पिङ्गलनाग इममपि प्रत्याङ्प्रथमकं पीड़म् अर्थात्प्रत्यापीड़ं नाम छन्दो वदति वक्ति। यथा—'कान्तावदनसरोजं, हृद्यं घनसुरभि मधुरसाढ्यम्। पातुं रहसि



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सततमभिलषति मनो मे, किञ्चिन्मुकुलितनयनमविरतमणितरमणीयम् ॥ [ हलायुधः ]॥ तदेवं द्विप्रकारः प्रत्यापीडो भवति' ॥ पादान्ते यतिः ॥ ४ ॥

प्रथमक इह पादे द्वादश चे-
दष्टवर्णा द्वितीयके ।
अपि च तृतीयके सुमुखि षोड़श तुर्य्यके
विंशतिरयि भवन्ति सति तर्हि भवति खल मञ्जरी ॥५॥

अयि भोः सुमुखि हे सति इह पदचतुरूर्द्ध्वे प्रथमे पादे यदि द्वादश वर्णा द्वितीये पादे अष्ट अपिच एवं तृतीये षोड़श चतुर्थे विंशतिर्वर्णा भवन्ति तर्हि खलु ध्रुवं मञ्जरी नाम छन्दो भवति। यथा—'जनयति महतीं प्रीतिं हृदये, कामिनां चूतमञ्जरी। मिलदलिचक्रचञ्चुपरिचुम्बितकेसरा, कोमलमलयवातपरिनर्त्तिततरुशिखरस्थिता' ॥ [ हलायुधः ]॥ पादान्ते यतिः। अत्र पदचतुरूर्द्ध्वस्य प्रथमस्य पादस्य द्वितीयेन पादेन विपर्य्यासः ॥ ५ ॥

प्रथम इह भवन्ति षोड़श द्वितीयेऽक्षरा-
ण्यसितनयने द्वादशाष्टौ पदे ।
उ तृतीयके चतुर्थे
यदि शमदमशुचितनु विंशतिरनूद्या तल्लवली ॥६॥

इह पदचतुरूर्द्ध्वे यदि प्रथमे पादे चरणे षोड़शाक्षराणि द्वितीये पादे द्वादश तृतीये पादे अष्टौ चतुर्थे विंशतिर्भवन्ति उ भोः असितनयने हे शमदमशुचितनु तत्तदा लवली नाम छन्दः अनूद्या अनुकथनीया। यथा—'विरहविधुरहूणकाङ्गनाकपोलोपमं, परिणतिधरं पीतपाण्डुच्छवि। लवलीफलं निदाघे, भवति जगति हिमकरशीतलमतिस्वादूष्णहरम्' ॥ [हलायुधः] ॥ पादान्ते यतिः ॥ अत्र पदचतुरूर्द्ध्वस्य प्रथमस्य पादस्य तृतीयेन पादेन विपर्य्यासः ॥ ६ ॥

प्रथमे चरणे यदि विंशतिः शशधरमुखि वर्णाः स्युः
द्वितीयके द्वादश ननु ललने ।
तृतीयके प्रियभाषिणि षोड़श तुर्य्ये त्वष्टा-
मृतधारा तर्हि भवेत् ॥ ७ ॥





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

हे शशधरमुखि हे ललने हे प्रियभाषिणि पदचतुरूर्द्ध्वे यदि प्रथमे चरणे विंशतिर्वर्णाः स्युः द्वितीये चरणे द्वादश तृतीये चरणे षोडश चतुर्थे चरणे तु अष्टवर्णाः स्युस्तर्हि अमृतधारा नाम छन्दो भवेत्। यथा—'परिवाञ्छसि कर्णरसायनं सततममृतधाराभि, र्यदि हृदि वा परमानन्दरसम् (?) चेतः शृणु धरणीधरवाणीममृतमयीं, तत् काव्यगुणभूषणम्' ॥ [ हलायुधः ] ॥ पादान्ते यतिः ॥ 'केचिदापीडादिष्वपि पादविपर्य्यासे सति मञ्जर्य्यादिनामानीच्छन्ति' [ हलायुधः ] ॥

इति पदचतुरूर्द्ध्वकुसुमम् ।

---

## उद्गताकुसुमम्

प्रथमे त्रिपञ्चनवमं य-<br>
दथ दशमषष्ठमष्टमम् ।<br>
गुर्वथ मुखदशमान्त्यमये<br>
ष्टमकं पदेऽथ कनकप्रभोद्गता ॥ १ ॥

अये भोः यदित्यव्ययम् यद्यस्याः प्रथमे आद्ये पदे पादे तृतीयं पञ्चमं नवमम् अथ द्वितीये पादे षष्ठम् अष्टमं दशमम् अथ तृतीये पादे मुखम् आद्यं प्रथममिति यावत् अष्टमं दशमान्त्यम् एकादशञ्चाक्षरं गुरु भवति अथ चतुर्थे पादे कनकप्रभा कनकप्रभायाः पाद एको भवति सा उद्गता नाम छन्दो भवति । यथा—'मृगलोचना शशिमुखी च, रुचिरदशना नितम्बिनी । हंसललितगमना ललना, परिणीयते यदि भवेत्कुलोद्गता' ॥ [ हलायुधः ] ॥ पादान्ते यतिः ॥१॥

यदि पूर्व्ववत्सकलमेव<br>
पुनरिह पदे तृतीयके ।<br>
आदिमसहितमथाष्टमकं<br>
दशमान्तिमं गुरु तदोद्गतापरा ॥ २ ॥

Digitized by Madhuban Trust, Delhi



उद्गतामेदमाह—यदीति। यदि पूर्ववत् उद्गतावत्सकलमेव भवति किन्तु तृतीये पादे आदिगतं प्रथममष्टमम् एकादशञ्चाक्षरं दीर्घं भवति तदा अपरा अन्यप्रकारा उद्गता नाम छन्दो भवति। यथा—'विनयं गुणा इव विवेक-मपनयभिदं नया इव। न्यायमवधय इवाशरणाः, शरणं ययुः शिवमथो महर्षयः'॥ [भारविः १२।१७]॥ पादान्ते यतिः॥ इति किरातार्जुनीये उद्गताभेदो दृश्यते॥ २॥

सुतनूद्गतेव यदि कृत्स्न-<br>मिह तु चरणे तृतीयके।<br>आदिमं गुरु तृतीयमये-<br>सति सप्तमञ्च दशमञ्च सौरभम्॥ ३॥

हे सुतनु कृत्स्नं निखिलमुद्गतावद्भवति तु किन्तु इह तृतीये चरणे यदि आदिमं तृतीयं सप्तमं दशमञ्चाक्षरं गुरु भवति तदा सौरभं नाम छन्दो भवति। यथा—'विनिवारितोऽपि नयनेन, तदपि किमिहागतो भवान्। एतदेव तव सौरभकं, यदुदीरितार्थमपि नावबुध्यते'॥ [हलायुधः]॥ पिङ्गलसूत्रे सौरभूकं नाम वर्त्तते॥ पादान्ते यतिः॥ ३॥

ललने तृतीयचरणे तु<br>वरतनु लघून्यतोऽष्ट चेत्।<br>समुपदधति नवमान्त्ययुगं<br>ललितं तदोक्तमितरत्समं तया॥ ४॥

हे ललने हे वरतनु अतः अस्यामुद्गतायामित्यर्थः तृतीये चरणे तु अष्टलघूनि नवमान्त्ययुगं दशममैकादशञ्च समुपदधति समुपस्थापयन्ति इतरत् अन्यदक्षरं तया उद्गतया समञ्चेत् तदा ललितं नाम छन्दः कविभिरुक्तम्। यथा—'सततम्प्रियंवदमनूनममलहृदयं गुणोत्तरम्। सुललितमतिकमनीयतनुम्, पुरुषं त्यजन्ति नतु जातु योषितः'॥ [हलायुधः]॥ पादान्ते यतिः॥ ४॥

इत्युद्गताकुसुमम्॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यत्राद्यत्रयषष्ठसप्तमं दशमान्त्यं
त्रिदशाष्टमनिधनञ्च वर्द्धमानम् ।
ननु तदथ नवमसप्तदशपरगतमथ
प्रभवति यदि गुरु दशमान्त्यमथान्त्ये ॥ १ ॥

ननु भो यत्र प्रथमपादे आद्यत्रयं प्रथमद्वितीयतृतीयं षष्ठसप्तमम् अन्त्यञ्च अन्त्यञ्च अन्त्ये 'सरूपाणा' [ पां १।२।६४ ] मित्येकशेषः । ततो दशमञ्च अन्त्ये चेति दशमान्त्यम्, समाहारद्वन्द्वैकवद्भावः । अन्त्ये त्रयोदशचतुर्दशे एतत्सर्व्वं यदि गुर्व्वक्षरं प्रभवति जायते । अथ द्वितीयपादे निधनञ्च निधनञ्च निधने अन्त्ये त्रिदशाष्टमानि च निधने चेति पूर्व्ववद्द्वन्द्वैकवद्भावः । त्रिदशाष्टमनिधनं तृतीयमष्टमं दशमं द्वादशं त्रयोदशञ्चाक्षरं यदि गुरु । अथ तृतीयपादे नवमं सप्तदशस्य परगतं परस्थितम् अष्टादशञ्चाक्षरं यदि गुरु । अथ चतुर्थपादे दशमस्यान्त्यमेकादशम् अन्त्ये चतुर्दशपञ्चदशे चाक्षरे यदि गुरु[णी] तदा वर्द्धमानं नाम छन्दो भवति । यथा—'विम्बोष्ठी कठिनोन्नतस्तनावनताङ्गी, हरिणीशिशुनयना नितम्बगुर्व्वी । मदकलकरिगमना परिणतशशिवदना, जनयति मम मनसि मुदम्मदिराक्षी' ॥ [ हलायुधः ] ॥ पादान्ते यतिः ॥ १ ॥

सर्व्वं सुन्दरि वर्द्धमानवत्तु तृतीये
चरणे यदि लघवोऽष्ट दीर्घ एकः ।
स्युरिह तदुरुमतिभिः
प्रचुपितमिति कथितमुपस्थितपूर्व्वम् ॥ २ ॥

हे सुन्दरि सर्व्वं वर्द्धमानच्छन्द इवैव यदि स्यात् तु किन्तु तृतीये चरणे यदि अष्टौ लघव एको दीर्घः स्युः तदा इह जगति उरुमतिभिः प्रेक्षावद्भिः उपस्थितशब्दः पूर्व्वो यस्य तथाविधं प्रचुपितम् उपस्थितप्रचुपितमिति छन्दः कथितम् । यथा—'रामा, कामकवेणुका मृगायतनेत्रा हृदयं हरति पयोधरावनम्रा । इयमतिशयसुभगा बहुविधनिधुवनकुशला ललिताङ्गी' ॥ [ हलायुधः ] ॥ पादान्ते यतिः ॥ २ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तत्स्याच्छुद्धविराट् पुरस्सरर्षभमाद्य-
द्वयपञ्चममथ यत्र सप्तमञ्चेत् ।
प्रागुक्ततृतीयपादके
गुरु नवममपि यदि तथैव हि पश्येत् ॥ ३ ॥

यत्र प्रागुक्तस्य वर्द्धमानस्य तृतीये पादे आद्यद्वयं प्रथमद्वितीयं पञ्चमं सप्तमं नवममप्यक्षरं यदि गुरु पश्येदवलोकयेत्तदा तत् शुद्धविराट्शब्दः पुरस्सरः पूर्व्वो यस्य तथाविधमृषभं शुद्धविराडृषभमित्यर्थः नाम छन्दो भवेत्। यथा— 'कन्येयं कनकोज्ज्वला मनोहरदीप्तिः शशिनिर्म्मलवदना विशालनेत्रा। पीनोरु-नितम्बशालिनी सुखयति हृदयमतिशयन्तरुणानाम्' ॥ [ हलायुधः ] ॥ पादान्ते यतिः ॥ ३ ॥

एकादश सुमुखि भवन्त्ययि
सुमतेऽक्षराणि यत्र चादिमे चरणेऽष्ट च पुनः।
दश च द्वितीयके कुमुदा-
करो दश दशान्यत्र चेत्सः ॥ ४ ॥

हे सुमुखि यत्र प्रथमे चरणे एकादशाक्षराणि भवन्ति। अयि सुमते द्वितीये चरणे अष्ट पुनर्दश च भवन्ति। अन्यत्र तृतीये चतुर्थे च चरणे दशदशाक्षराणि चेद्भवन्ति स कुमुदाकरो नाम छन्दः स्यात्। यथा—तन्मुद्रयति हि कुमुदाकर, मशरन्निशानिशातनिस्तुषोऽपि तुषारकिरण। स पुनः किमुच्यते भगवान्, द्वितीयपरमेष्ठी वसिष्ठः ॥ पादान्ते यतिः ॥ ४ ॥

वृत्तानां सुप्रसिद्धानामुक्तम्प्रायेण लक्षणम्।
कान्ते नोक्तानि यान्यत्र यानि न्यूनाधिकाक्षरैः।
त्रिभिः षड्भिश्च वा पादैर्गाथास्ता विद्धि लोकतः ॥ ५ ॥

हे कान्ते सुप्रसिद्धानां वृत्तानां पद्यानां प्रायेण बाहुल्येन लक्षणमुक्तम्। अत्र च्छन्दोऽनुशासने यानि वृत्तानि नोक्तानि, यानि च न्यूनाधिकाक्षरैरुपलक्षितानि अथवा त्रिभिः षड्भिश्च पादैरुपलक्षितानि ता गाथा गाथासंज्ञकास्तास्तु लोकतः शिष्टप्रयोगाद्विद्धि जानीहि। ... ... ... ... ॥ ५ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



इत्युक्तं विषमाणान्ते वृत्तानां लक्षणम्प्रिये ।
अतः परन्तु जातीनां सगणं शृणु लक्षणम् ।। ६ ।।

हे प्रिये इति इत्थं विषमाणां वृत्तानां लक्षणं ते तुभ्यं मया उक्तम् । अतः परन्तु जातीनाम् आर्यादीनां सगणं गणेन सहितं लक्षणं शृणु आकर्णय ॥ ६ ॥

इति धीरेश्वराचार्य्यकृतौ छन्दोऽनुशासने ।
श्रीवृत्तमञ्जरीनाम्नि पञ्चमः स्तवको गतः ।। ७ ।।

स्पष्टम् ॥ ७ ॥

---



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

# षष्ठः स्तवकः

## गणकुसुमम्

गण एककलो निरूप्यते द्विकलश्च त्रिकलश्चतुष्कलः ।
अपि पञ्चकलोऽथ षट्कलः षडिमे जात्युपयोगिनः प्रिये ॥१॥

अथ आर्य्यादिजातिशुद्ध्यर्थं गणान्निर्दिशति गण इति । एका कला मात्रा यस्य स एककलः । द्वे कले यस्य स द्विकलः । तिस्रः कला यस्य स त्रिकलः । चतस्रः कला यस्य स चतुष्कलः पञ्च कला मात्रा यस्य स पञ्चकलः । षट् कला यस्य स षट्कलो गणो निरूप्यते निर्णीयते । हे प्रिये इमे षड्गणाः जात्युपयोगिनः जातीनामानुकूल्यकारिणः विनैतान् गणांस्तासामनिष्पत्तेः ॥ १ ॥

अस्ततन्द्रे शरच्चन्द्रप्रतिद्वन्द्विमुखाम्बुजे ।
एकेन लघुनैवैको गण एककलो मतः ॥ २ ॥

अस्ता तन्द्रा अलसता यया हे अस्ततन्द्रे शरच्चन्द्रस्य प्रतिद्वन्द्वि सदृशं मुखाम्बुजं यस्या हे तथाभूते एकेनैव लघुना वर्णेन एककलो गणो मतः ॥ २ ॥

गुरुणैकेन वा द्वाभ्यां लघुभ्यां द्विकलौ गणौ ।
द्वावेव कथितौ कान्ते छन्दश्शास्त्रविशारदैः ॥ ३ ॥

हे कान्ते छन्दःशास्त्रविशारदैः छन्दःशास्त्रनिपुणैः एकेन गुरुणा अथवा द्वाभ्यां लघुभ्यां द्वौ एव द्विकलौ गणौ कथितौ ॥ ३ ॥

लघुना गुरुणा चैको गुरुणा लघुनापरः ।
स्युस्त्रिभिर्लघुभिश्चान्यस्त्रिकलाख्या गणास्त्रयः ॥ ४ ॥

लघुना गुरुणा च एकस्त्रिकलो गणः । गुरुणा लघुना चापरः त्रिकलः । त्रिभिर्लघुभिश्चान्यस्त्रिकलः । सम्भूय त्रिकलनामका गणास्त्रय एव स्युः ॥ ४ ॥

द्व्यन्तमध्यादिगुरवश्चतुर्लघुरपि प्रिये ।
एते चतुष्कला नाम गणाः पञ्च प्रकीर्त्तिता ॥ ५ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे प्रिये द्वौ च अन्तश्च मध्यश्च आदिश्चेति द्वन्द्वः ते गुरवो येषां ते द्व्यन्तमध्यादिगुरवः। अत्र गुरुपदस्य द्वन्द्वपरवर्त्तितया प्रत्येकमभिसम्बन्धस्तेन द्विगुरुरन्तगुरुर्मध्यगुरुरादिगुरुश्चेति फलितम्। चत्वारो लघवो यत्र स चतुर्लघुरपि। एते पञ्च चतस्रः कला मात्रा येषां ते चतुष्कला नाम गणाः प्रकीर्त्तिताः॥ ५॥

एक आदिलघुर्मध्यगुरुरन्यो वशंवदे।
अपरोऽन्तगुरुः कान्ते इतरोऽन्तलघुः परे।
स्युरुपान्तद्वितीयादिगुरवश्च प्रियंवदे।
स्यात्पञ्चलघुरित्यष्टौ स्मृताः पञ्चकला गणाः॥ ६॥

हे वशंवदे आदिर्लघुर्यस्य स आदिलघुरेको गणः। मध्यो गुरुर्यस्य स मध्यगुरुरन्यः। अन्तः गुरुर्यस्य स अन्तगुरुरपरः। हे कान्ते अन्तो लघुर्यस्य सः अन्तलघुरितरः। उपान्तश्च द्वितीयश्च आदिश्चेति द्वन्द्वः ते गुरवो येषां ते उपान्तगुरुर्द्वितीयगुरुः आदिगुरुश्चेति परे। हे प्रियंवदे पञ्च लघवो यत्र स पञ्चलघुः। इति अष्टौ पञ्चकला गणाः स्मृताः॥ ६॥

कान्ते त्रिगुरुरेकः स्यात्सान्तोपान्तगुरुस्तथा।
सान्तद्वितीयगुरुकः सादितुर्य्यगुरुस्तथा।
स्यात्पञ्चमगुरुश्चापि सादितुर्य्यलघुस्तथा।
सतृतीयादिगुरुकश्चतुर्थगुरुकोऽपि च।
सादिद्वितीयगुरुकस्तृतीयगुरुरेव च।
द्वितीयगुरुकश्चादिगुरुकः षड्लघुस्तथा।
इति त्रयोदशविधा ज्ञातव्याः षट्कला गणाः।
ज्ञेयाः सप्तकलाद्याश्च प्रस्ताराच्चेत्प्रयोजनम्॥ ७॥

हे कान्ते त्रयो गुरवो यत्र स त्रिगुरुरेको गणः स्यात्। तथा अन्तेन सह वर्त्तमानः सान्तः उपान्तः गुरुर्यत्र स सान्तोपान्तगुरुरन्यो गणः। सान्तो द्वितीयो गुरुर्यत्र स सान्तद्वितीयगुरुकः अपरो गणः आदिना सह वर्त्तमानः सादिः सादितुर्य्यो गुरुर्यत्र स सादितुर्य्यगुरुरितरो गणः। पञ्चमो



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



गुरुर्यत्र स पञ्चमगुरुकोऽप्येको गणः। तथा सादितुर्यो लघुर्यत्र सः सादितुर्य्य-लघुरन्यो गणः। सतृतीय आदिर्गुरुर्यत्र सः सतृतीयादिगुरुकः अपरो गणः। चतुर्थो गुरुर्यत्र स चतुर्थगुरुकोऽपीतरो गणः। सादिद्वितीयो गुरुर्यत्र स सादिद्वितीयगुरुकोऽप्यन्यः गणः। तृतीयो गुरुर्यत्र स तृतीयगुरुरेव चापरो गणः। द्वितीयो गुरुर्यत्र स द्वितीयगुरुश्चापीतरो गणः। आदिर्गुरुर्यत्र स आदिगुरुकश्च एको गणः। तथा षट् लघवो यत्र स षड्लघुश्चापरो गणः। इति त्रयोदशप्रकाराः षट्कलाः षण्मात्रा गणा ज्ञातव्याः। यदि प्रयोजनं भवति तदा सप्तकलाद्याश्च गणाः प्रस्तारात् मात्राप्रस्तारात् ज्ञेयाः ॥ ७ ॥

प्रोक्ता एककलाद्या ये षट्कलान्ता गणास्तु ते।
एकद्वित्रिचतुःपञ्चषट्कलात्मान ईरिताः ॥ ८ ॥

एककलप्रभृतयः षट्कलावसाना एव ये गणाः प्रोक्तास्ते एकः द्वौ त्रयश्चत्वारः पञ्च षट् लघव आत्मा स्वरूपं येषां ते तथाभूता ईरिताः छान्दसैरिति शेषः ॥ ८ ॥

तदुत्थापनिकां बोधलाघवाय व्यनज्मि ते।
रेखाभ्यामृजुवक्राभ्यां निरूढाभ्यां लघौ गुरौ ॥ ९ ॥

हे कान्ते तेषामेककलादिगणानाम् उत्थापनिकां ते तुभ्यं बोधस्य लाघवाय लघुबोधार्थं लघौ गुरौ निरूढाभ्यां ऋजुवक्राभ्यां रेखाभ्यां व्यनज्मि व्यक्ती-करोमि। तथाहि—ऋजुरेखा लघुं वक्ररेखा गुरुं बोधयति इति भावः ॥

।, इत्येककलगणरेखा ; ऽ, ।।, इति द्विकलगणरेखा ; ।ऽ, ऽ।, ।।।, इति त्रिकलगणरेखा ; ऽऽ, ।।ऽ, ।ऽ।, ऽ।।, ।।।।, इति चतुष्कलगणरेखा ; ।ऽऽ, ऽ।ऽ, ।।।ऽ, ऽऽ।, ।।ऽ।, ।ऽ।।, ऽ।।।, ।।।।।, इति पञ्चकलगणरेखा ; ऽऽऽ, ।।ऽऽ, ।ऽ।ऽ, ऽ।।ऽ, ।।।।ऽ, ।ऽऽ।, ऽ।ऽ।, ।।।ऽ।, ऽऽ।।, ।।ऽ।।, ।ऽ।।।, ऽ।।।।, ।।।।।।, इति षट्कलगणरेखा ॥ ९ ॥

इति गणकुसुमम्।

---



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

# अथ आर्य्याकुसुमम्

प्रथमे पादे द्वादश कलास्तृतीये तथा द्वितीये तु ।
अष्टादश पञ्चदश तु यदा चतुर्थे तदार्य्या स्यात् ॥ १ ॥

प्रथमे पादे प्रथमयतौ यदा द्वादश कला द्वादश मात्राः । तृतीये तथा द्वादश । द्वितीये तु पादे अष्टादश कलाः । चतुर्थे पादे पञ्चदशैव कला भवन्ति तदा आर्य्या नाम जातिः स्यात् । पादग्रहणं यत्युपलक्षणार्थम् आर्य्यायामर्द्धे नियमात्पादव्यवस्था नास्ति ॥ १ ॥

सप्तचतुष्कलतो गुरुरिह मध्यगुरुश्चतुर्लघुर्वाद्ये ।
षष्ठोर्द्धेऽन्यत्र लघुर्न तु मध्यगुरुर्गणो विषमे ॥ २ ॥

आर्य्यायां गणनियममाह सप्तेति । इह आर्य्यायाम् आद्ये प्रथमे अर्द्धे सप्तचतुष्कलतः सप्तभ्यश्चतुष्कलेभ्यो गणेभ्य एको गुरुवर्णः कार्य्यः । षष्ठो गणो मध्यगुरुश्चतुर्लघुर्वा कार्य्यः । अन्यत्र द्वितीये अर्द्धे षष्ठो गण एकलघुवर्णः कार्य्यः । विषमे प्रथमतृतीयपञ्चमसप्तमे गणस्थाने मध्यगुरुगणः नतु नैव कार्य्यः । शेषा गणाः कामतोऽत्र भवन्ति । आर्य्याच्छन्दसि षष्ठे मध्यगुरौ यथा—'सा जयति जगत्यार्य्या देवी दिवमुत्पतिष्णुरतिरुचिरा । याद्दश्यताम्बरतले कंसबधोत्पातविद्युदिव' ॥ [हलायुधः] ॥ तत्रैव षष्ठे चतुर्लघौ यथा—'रूपान्तरेण देवीं तामेव स्तौमि सपदि किल महिषः । पादस्पर्शसुखादिव मीलितनयनोऽभवद्यस्याः' ॥ [ हलायुधः ] ॥ २ ॥

षष्ठश्चतुर्लघुश्चेत्पदं द्वितीयादि भवति ननु तर्हि ।
आर्य्यायामिति मुनिनाभिहितं कान्ते शुचिस्वान्ते ॥ ३ ॥

आर्यायां यतिनियममाह षष्ठ इति । हे शुचिस्वान्ते हे कान्ते आर्य्यायां छन्दसि षष्ठो गणश्चतुर्लघुश्चेद्भवति तर्हि षष्ठगणस्य द्वितीयादक्षरादारभ्य पदं प्रवर्त्तते छतरां प्रथमलघोरन्ते यतिर्विधेया इति मुनिनाभिहितम् । पूर्व्वमेवोदाहृतम् ॥ ३ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यदि सप्तमश्चतुर्लघुरस्ति प्रथमादि तर्हि नियमधने ।
भवति पदं मध्यगुरौ चतुर्लघौ वा गणे षष्ठे ॥ ४ ॥

नियम एव धनं यस्या हे नियमधने षष्ठे गणे मध्यगुरौ चतुर्लघौ वा जाते यदि सप्तमो गणश्चतुर्लघुर्भवति तदा प्रथमादक्षरादारभ्य पदं प्रवर्त्तते षष्ठगणान्ते यतिर्विधेया । यथा—'ब्रह्मक्षत्रकुलीनः प्रलीनसामन्तचक्रनुतचरणः । सकलसुकृतैकपुञ्जः श्रीमान्मुञ्जश्चिरं जयति ॥ जयति भुवनैकवीरः सीरायुधतुलित-विपुलबलविभवः । अनवरतवित्तवितरणनिर्जितचम्पाधिपो मुञ्जः' ॥ [हलायुधः] ॥४॥

आर्याया अपरार्द्धे चतुर्लघुः पञ्चमो गणो यर्हि ।
तर्हि पदं प्रथमादि प्रमदे मुनिवरसमादिष्टम् ॥ ५ ॥

हे प्रमदे आर्य्यायाः अपरार्द्धे द्वितीयार्द्धे यदा पञ्चमो गणश्चतुर्लघुर्भवति तदा प्रथमादिपदं प्रवर्त्तते प्रथमादक्षरादारभ्य इत्यर्थः इति मुनिवरेण पिङ्गला-चार्य्येण समादिष्टमनुशासितम् । अतः चतुर्थगणान्ते यतिर्विधेया । यथा—'स जयति वाक्पतिराजः सकलार्थिमनोरथैककल्पतरुः । प्रत्यर्थिभूतपार्थिवलक्ष्मी-हठहरणदुर्ललितः' ॥ [ हलायुधः ] ॥ ५ ॥

यतिगणनियमेन विना न भवति सन्दर्भशुद्धिरार्य्यायाः ।
अतएव श्रुतबोधप्रोक्तं लक्षणमसम्पूर्णम् ॥ ६ ॥

यतिश्च गणश्च तयोर्नियमेन व्यवस्थापनेन विना आर्य्याया जातेः सन्दर्भशुद्धिः रचनाविशुद्धिर्न भवति । अतएव हेतोः श्रुतबोधे कालिदासकृतच्छन्दोग्रन्थे प्रोक्तं कथितं लक्षणम् असम्पूर्णम् सम्पूर्णं नैव, तत्र यतिगणयोरनुल्लेखात् तद्यथा—यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश सार्य्येति ॥ अत्र यद्यपि यतिगणोल्लेखो न कृतस्तथापि लक्ष्यलक्षणयोरेकत्र समावेशाद्गणवद्धतया च लक्षणस्यास्य गणोऽप्यस्तीति विभावनीयं न तु केवलमात्राभिरार्य्या रचनीया ॥ ६ ॥

पूर्वार्द्धे स्युस्त्रिंशत्पश्चार्द्धे सप्तविंशतिर्मात्राः ।
यस्याः सार्य्या ज्ञेया सम्भूय च सप्तपञ्चाशत् ॥ ७ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



इदानीं सर्व्वासामार्य्याणां साधारणलक्षणमाह पूर्व्वार्द्धे इति। सर्वस्यामार्य्यायां सप्तपञ्चाशत् मात्रा भवन्ति। तत्र व्यवस्था—पूर्व्वार्द्धे प्रथमार्द्धे त्रिंशन्मात्राः पश्चार्द्धे द्वितीयार्द्धे सप्तविंशतिर्मात्राः स्युर्भवेयुरिति ॥ ७ ॥

यस्यां त्रिंशद्वर्णास्तेषाञ्चेत्सप्तविंशतिर्दीर्घाः।
शेषाः कान्ते ह्रस्वाः साऽर्य्यास्वाद्या भवेल्लक्ष्मीः॥ ८॥

अथार्य्यायाः सप्तविंशतिभेदेषु लक्ष्मीं नाम आद्यामार्य्यां लक्षयति यस्यामिति। हे कान्ते यस्यां त्रिंशद्वर्णास्त्रिंशत्परिमिता वर्णा दृश्यन्ते तेषां मध्ये यदि सप्तविंशतिर्वर्णा दीर्घाश्शेषा अवशिष्टास्त्रयो वर्णा ह्रस्वाः तथाहि—पूर्व्वार्द्धे षष्ठस्य मध्यगुरुगणस्य द्वौ परार्द्धे षष्ठस्यैकलघुकस्यैको मिलित्वा त्रयो ह्रस्वाः स्युस्तदा आर्य्यासु मध्ये आद्या प्रथमा लक्ष्मीर्नाम आर्य्या भवेत् ॥ ८ ॥

त्रिंशद्वर्णा लक्ष्मीं वन्दन्ते सन्ततं महाकवयः।
ह्रसति यदैकैकाक्षरमृद्ध्याद्याख्यां तदा लभते॥ ९॥

अथ तत्प्रशंसापुरःसरं भेदानयनप्रकारमाह—त्रिंशदिति। महाकवयस्त्रिंशदक्षरां लक्ष्मीमार्य्यां सन्ततमनवरतं वन्दन्ते स्तुवन्ति। अत्र यदा एकैकाक्षरं ह्रसति न्यूनतामाप्नोति [ एकैकं दीर्घाक्षरं तिरोहितं भवति अर्थात् ] द्वौ लघू वृद्धिं गच्छतस्तदा ऋद्ध्याद्याख्यां ऋद्ध्यादिनाम लभते प्राप्नोति ॥ ९ ॥

लक्ष्मीरृद्धिर्बुद्धिर्लज्जा विद्या क्षमा च देही च।
गौरी धात्री चूर्णा छाया कान्तिर्महामाया॥ १०॥

कीर्त्तिः सिद्धिर्मानिन्यथ रामा गाहिनी च विश्वा च।
अथ वासिता च शोभा हरिणी चक्री पुनश्चापि॥ ११॥

अथ सारसी च कुररीसिंही कान्तेऽथ हंसिका चेति।
लक्ष्म्यादिहंसिकान्ता आर्य्याः स्युः सप्तविंशतिधा॥ १२॥

अथ लक्ष्मीमुपलक्षयन्निव आर्य्यात्रयेण नामान्युद्दिशति लक्ष्मीरित्यादि। स्पष्टम् ॥ १०-१२ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



प्रथमां मरालगतिवद्यतिं द्वितीयान्तु सिंहविक्रमवत् ।
दिगिभगतिवत्तृतीयामिह फणिगतिवत्पठेत्तुर्य्याम् ॥ १३ ॥

अथार्य्यापाठप्रकारमुपदिशति प्रथमामित्यादिभिः । इह आर्य्यायां प्रथमां द्वादशमात्रात्मिकां यतिं मरालगतिवत् हंसगतिवत् मन्थरं पठेत् । द्वितीयाम् अष्टादशमात्रात्मिकां यतिं सिंहविक्रमवदुद्धतं पठेत् । तृतीयां द्वादशमात्रात्मिकां यतिं दिगिभगतिवत् दिग्गजगतिवत् सलीलं पठेत तुर्य्यां चतुर्थीं पञ्चदश-मात्रात्मिकां यतिं फणिवरगतिवत् चञ्चलं पठेत् ॥ १३ ॥

[एकेन] मध्यगुरुणा [भवेत् कुलीना द्वयेन] सङ्ग्रहिणी ।
रण्डा तेन विहीना बहुभिर्व्वेश्या भवेदार्य्या ॥ १४ ॥

गणभेदेनार्य्यायाः सावस्थाभेदं दोषमाह मध्येति । एकेन मध्यगुरुगणेनार्य्या कुलीना कुलवती भवेत् । द्वाभ्यास्मध्यगुरुगणाभ्यान्तु आर्य्या सङ्ग्रहिणी सुखग्राह्या भवेत् । तेन मध्यगुरुगणेन विहीना रहिता आर्य्या रण्डा भवति । बहुभिर्मध्यगुरुगणैरार्य्या वेश्या भवति ॥ ऊह्यमुदाहरणम् बाहुल्यभिया न लिखितम् ॥ १४ ॥

दशभिस्त्रिभिश्च लघुभिर्विप्रार्य्या क्षत्त्रियैकविंशत्या ।
स्यात्सप्तविंशतिकया वैश्या शेषैर्भवेच्छूद्रा ॥ १५ ॥

अथ लघुसंख्याभेदेनार्य्याया जातिभेदमाह—दशभिरिति । दशभिस्त्रिभिश्च त्रयोदशभिरित्यर्थः लघुभिर्युक्ता यदि आर्या भवति तदा विप्रा नाम भवेत् । एकविंशत्या लघुभिर्युक्ता चेत् क्षत्त्रिया भवेत् । सप्तविंशत्या लघुभिर्युक्ता चेत् वैश्या भवेत् । शेषैरूनत्रिंशतमारभ्यावशिष्टैर्लघुभिर्युक्तार्य्या शूद्रा भवेत् ॥ १५ ॥

यस्याम्प्रथमतृतीयकपञ्चमसप्तमगणास्तु गुरुमध्याः ।
सा गुर्विणीव दोषं गुणरहितार्य्या प्रकाशयति ॥ १६ ॥

पूर्व्वं ननु मध्यगुरुर्गणो विषम इत्युक्तम् इदानीं विषमस्थानविहित-मध्यगुरुगणाया आर्य्याया दोषमाह—यस्यामिति । यस्यामुक्तप्रथमादिगणा



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



गुरुमध्या मध्यगुरवो भवन्ति सा गुर्विणीव गर्भिणीव गुणरहिता सकलकार्य्याक्षमा सती दोषं प्रकाशयति ॥ १६ ॥

प्रथमार्द्धे चरमार्द्धेऽप्याद्यत्रिगणान्त एव यदि पादः ।
यस्याः समाप्यते सा पथ्यासंज्ञान्तदा लभते ॥ १७ ॥

यस्या आर्य्यायाः प्रथमार्द्धे पूर्वार्द्धे चरमार्द्धेऽपि त्रिगणानामन्ते अवसान एव पादः समाप्यते तत्रैव यतिः क्रियते तदा सा पथ्यासंज्ञां पथ्येति नाम लभते प्राप्नोति । यथा—'पथ्याशी व्यायामी, स्त्रीषु जितात्मा नरो न रोगी स्यात् । यदि वचसा मनसा वा, द्रुह्यति नित्यं न भूतेभ्यः' ॥ [ हलायुधः ] ॥ अत्र पादग्रहणं यत्युपलक्षणार्थम् इति मृतसञ्जीवनी ॥ १७ ॥

पूर्व्वापरोभयार्द्धेषु न विश्राम्यति गणत्रयस्यान्ते ।
यस्याश्चरित्रवति पादः सा विपुला त्रिधा बोध्या ॥ १८ ॥

हे चरित्रवति यस्याः पूर्व्वापरोभयार्द्धेषु प्रथमार्द्धे द्वितीयार्द्धे उभयार्द्धे च गणत्रयान्ते पादो न विश्राम्यति न विरमति सार्या विपुला नाम बोध्या । सा चाद्यान्तोभयपूर्व्वकत्वात्त्रिधा त्रिप्रकारा । सामान्येन विधानमेतत् । आदिविपुलोदाहरणम्—'स्निग्धच्छायालावण्यलेपिनी किञ्चिदवनतघ्राणा । सुख-विपुला सौभाग्यं लभते स्त्रीत्याह माण्डव्यः' ॥ [ हलायुधः ] ॥ अन्तविपुलो-दाहरणम्—'करुणाविषये करुणां करुणा वरुणालयाशु मयि धेहि । राघव करुणा शीलवतां विषमा मानसी वृत्तिः ॥ चित्तं हरन्ति हरिणीदीर्घदृशः कामिनां कलालापैः । नीविविमोचनव्याजकथितजघना जघनविपुला' ॥ [हलायुधः]॥ उभयविपुलोदाहरणं यथा—'या स्त्री कुचकलसनितम्बमण्डले जायते महाविपुला । गम्भीरनाभिरतिदीर्घलोचना भवति सा सुभगा' ॥ [ हलायुधः ] ॥ 'अत्रोच्यते । पथ्याविपुलालक्षणयोः सहानवस्थानलक्षणविरोधस्तेन मिश्रीभावो नास्ति । य एवांशो विपुलया स्पृष्टस्तेनैव पथ्यात्वन्नष्टम्भवति । उभयाश्रयत्वात्पथ्यालक्षणस्य विपुलायास्तत्रांशेनापि प्रवेशो दुर्लभः । ततश्च पथ्यालक्षणैकांशवैकल्येऽपि तदन्यविषयत्वाद्विपुला भवत्येव । पथ्याचपलयोश्च विरोधाभावाद्बाध्यबाधक-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



भावो नास्ति। तत्रायं सङ्ग्रहः। एकैव भवति पथ्या विपुलास्तिस्रस्त-तश्चतस्रस्ताः। चपलाभेदैस्त्रिभिरपि भिन्ना इति षोडशार्य्याः स्युः॥ गीति-चतुष्टयमित्थं प्रत्येकं षोडशप्रकारं स्यात्। साकल्येनार्य्याणामशीतिरेवं विकल्पाः स्युः'॥ इति मृतसञ्जीवनी। बाहुल्यभिया ग्रन्थस्यास्य नोक्तान्युदाहरणानि॥ ग्रन्थान्तरे मुखविपुलाजघनविपुलामहाविपुलेति च यथाक्रमं नामान्तरमस्तीत्य-प्यनुसन्धेयम्॥ विपुला निवृत्ता॥ १८॥

गुरुमध्यगौ गणौ स्तो द्वितीयतुर्यौ यदा द्वयोर्गुर्वोः।
मध्ये स्थितौ हि यस्यास्तदा भवेत्तन्वि सा चपला॥ १९॥

अथ चपलां लक्षयति गुर्व्विति। हे तन्वि यस्या व्यस्तौ समस्तौ वा द्वितीयचतुर्थौ गणौ गुरुमध्यगौ गुरुर्मध्यगो ययोस्तथाभूतौ मध्यगुरू इति यावत् तथा द्वयोर्गुर्वोर्मध्ये स्थितौ पुरः पश्चाच्च स्थितयोर्गुर्वोर्मध्ये वर्त्तमानौ यदा भवतः। अयमर्थः—प्रथमो गणो द्विगुरुरन्तगुरुर्वा तृतीयो द्विगुरुः पञ्चमो द्विगुरुरादिगुरुर्वा शेषं यथाप्राप्तं तदा सार्य्या चपला नाम भवेत्॥ यथा—

चपला न चेत्कदाचिन्नृणाम्भवेद्भक्तिभावना कृष्णे। धर्म्मार्थकाममोक्षास्तदा करस्था न सन्देहः॥ १९॥

गणयोस्तु मध्यगुर्वोर्द्वितुर्य्ययोः पार्श्वगौ गुरू न यतः।
गौपालदासिनेष्टावतोऽत्र तल्लक्षणं चिन्त्यम्॥ २०॥

छन्दोमञ्जरीकारमतं कटाक्षयति गणयोरिति। अत्र चपलायां मध्यगुरुक-द्वितीयचतुर्थगणयोः पार्श्वगौ उभयपार्श्वस्थितौ वर्णौ यस्मात्कारणात् गौपाल-दासिना गङ्गादासेन गुरू नेष्टौ न विहितौ अतस्तल्लक्षणं तस्य गङ्गादासस्य दलयोर्द्वितीयतुर्यौ गणौ जकारौ तु यत्र चपला सेति लक्षणं चिन्त्यं मुनिमत-विरोधात् चपला द्वितीयचतुर्थौ ग्मध्ये जौ इति मुनिसूत्रम्॥ २०॥

इन्दीवराक्षि यस्या उदेति तन्वि चपलैव पूर्व्वार्द्धे।
आर्य्या चेदपरार्द्धे मुखचपला सा तदा कथिता॥ २१॥

चपलाभेदं विधित्सुरादौ मुखचपलां लक्षयति इन्दीवरेति। हे इन्दीवराक्षि नीलोत्पललोचने हे तन्वि यस्याः पूर्व्वार्द्धे चपलैव चेदुदेति अपरार्द्धे आर्य्या



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



चेदुदेति तदा साऽऽर्य्या मुखचपला नाम कथिता। 'पथ्यापूर्व्वमुखचपलोदाहरणम्—अतिदारुणा द्विजिह्वा परस्य मर्म्मानुसारिणी कुटिला। दूरात्परिहरणीया नारी नागीव मुखचपला॥ आदिविपुलापूर्वकं मुखचपलोदाहरणम्—यस्याश्च पिङ्गले लोचने भ्रुवौ सङ्गते मुखं दीर्घम्। विपुलोन्नताश्च दन्ताः कान्तासौ भवति मुखचपला॥ उभयविपुलापूर्व्वकम्मुखचपलोदाहरणम्—विपुलाभिजातवंशोद्भवापि रूपातिरेकरम्यापि। निस्सार्य्यते गृहाद्वल्लभापि यदि भवति मुखचपला'॥ [ हलायुधः ]॥ २१॥

आर्य्याप्रथमार्द्धसमं प्रथमार्द्धं स्यात्सुमध्यमे यस्याः।
चपलोत्तरार्द्धतुल्यं परार्द्धकं सा जघनचपला॥ २२॥

जघनचपलां लक्षयति आर्येति। हे सुमध्यमे यस्याः प्रथमार्द्धम् आर्य्यायाः प्रथमार्द्धेन समं तुल्यं परार्द्धकं द्वितीयार्द्धं चपलाया उत्तरार्द्धेन परार्द्धेन तुल्यं स्यात् साऽऽर्य्या जघनचपला नाम कथिता। 'तत्र पथ्यापूर्व्वकं जघनचपलोदाहरणम्—यत्पादस्य कनिष्ठा न स्पृशति महीमनामिका वापि। सा सर्व्वधूर्त्तभोग्या भवेदवश्यञ्जघनचपला॥ अन्तविपुलापूर्व्वकं जघनचपलोदाहरणम्—यस्याः पादाङ्गुष्ठं व्यतीत्य याति प्रदेशिनी दीर्घा। विपुले कुले प्रसूतापि सा ध्रुवं जघनचपला स्यात्॥ महाविपुलापूर्व्वकं जघनचपलोदाहरणम्—मकरध्वजसद्मनि दृश्यते स्फुटं तिलकलाञ्छनं यस्याः। विपुलान्वयाभिजाताऽपि जायते जघनचपलासौ'॥ [ हलायुधः ]॥ २२॥

हरिणायताक्षि यस्या द्वयोर्भवेदर्द्धयोः पुनश्चपला।
नागाधिनायकेन प्रकीर्त्तिता सा महाचपला॥ २३॥

हे हरिणायताक्षि यस्या द्वयोरर्द्धयोः प्रथमार्द्धद्वितीयार्द्धयोः पुनश्चपला भवेत् नागाधिनायकेन पिङ्गलाचार्य्येण सा महाचपला प्रकीर्त्तिता। 'तत्र पथ्यापूर्व्वकं महाचपलोदाहरणम्—हृदयं हरन्ति नार्य्यो मुनेरपि भ्रूकटाक्षविक्षेपैः। दोर्मूलनाभिदेशं निदर्शयन्त्यो महाचपलाः॥ विपुलापूर्व्वकं महाचपलोदाहरणम्—चिबुके कपोलदेशेऽपि कूपिका दृश्यते स्मिते यस्याः। विपुलान्वयप्रसूतापि जायते सा महाचपला'॥ [ हलायुधः ]॥ २३॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



आर्य्यापूर्व्वार्द्धसमं परार्द्धमपि तन्वि जायते यस्याम्।
काव्यरसज्ञैः कृतिभिः सीमन्तिनि सा प्रकीर्त्तिता गीतिः ॥२४॥

हे तन्वि हे सीमन्तिनि यस्याम् आर्य्यायाः पूर्व्वार्द्धेन समं तुल्यम्परार्द्धमपि जायते भवति काव्यरसविद्भिः कृतिभिः सार्य्या गीतिर्नाम प्रकीर्तिता। [ एतदुक्तं भवति द्वितीयेप्यर्द्धे षष्ठो गणो मध्यगुरुः ] चतुर्लघुर्व्वा कर्त्तव्यः। तत्र पथ्यागीत्युदाहरणम्। 'मधुरं वीणारणितं पञ्चमशुभगश्च कोकिलालापः। गीतिः पौरवधूनामधुना कुसुमायुधं प्रबोधयति' ॥ आदिविपुलागीत्युदाहरणम्—'मधुरं परा विपुला गीतिरुच्यते सर्व्वलोकहितहेतोः। यदनिष्टमात्मनस्तत्परेषु भवतापि सा क्वचित्कारि' ॥ पथ्यामहाचपलागीत्युदाहरणम्—'कामञ्चकास्ति गीतिर्मृगीदृशां शीधुपानचपलानाम्। सुरतञ्च मुक्तलज्जं निरर्गलालापमणितरमणीयम्' ॥ महाचपलामहाविपुलागीत्युदाहरणम्—'पञ्चेषुवल्लभः पञ्चमध्वनिस्तत्र भवति यदि विपुलः। चपलं करोति कामाकुलं मनः कामिनामसौ गीतिः' ॥ [ हलायुधः ] ॥ २४ ॥

आर्य्यापरार्द्धसदृशं पूर्व्वार्द्धञ्चापि यत्र स्यात्।
कवयस्तामुपगीतिं वदन्ति कान्ते सदा शान्ते ॥ २५ ॥

हे कान्ते हे सदा शान्ते यत्र यस्यामार्य्यायाः परार्द्धेन द्वितीयार्द्धेन सदृशं समानम्पूर्व्वार्द्धञ्चापि प्रथमार्द्धञ्चापि भवेत् कवयस्तामार्य्यामुपगीतिं नाम वदन्ति। तत्र पथ्योपगीत्युदाहरणम्—'गान्धर्व्वम्मकरध्वजदेवस्याश्नञ्जगद्विजयि। इति समवेद्य मुमुक्षुभिरुपगीतिस्त्यज्यतं देशः' ॥ महाविपुलोपगीत्युदाहरणम्—'विपुलोपगीतिझङ्कारमुखरिते भ्रमरमालानाम्। रेवातटोपवने वस्तुतोऽस्तु सततम्मम प्रीतिः' ॥ पथ्यामहाचपलोपगीत्युदाहरणम्—'विषयामिषाभिलाषं करोति चित्तं सदा चपलम्। वैराग्यभावनानान्तथोपगीत्या भवेत्स्वस्थम्' ॥ महाचपलामहाविपुलोपगीत्युदाहरणम्—'विपुलोपगीति सन्त्यजतामिदं स्वरुचकम्भिक्षो। विषयाभिलाषदोषेण बाध्यते चञ्चलं चित्तम्' ॥ [ हलायुधः ] ॥ २५ ॥

आर्य्यायाः पूर्व्वार्द्धं पश्चार्द्धे यत्र जायेत।
पश्चार्द्धम्पूर्व्वार्द्धे यदि सोद्गीतिस्तदा निगद्येत ॥ २६ ॥





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यत्र यस्याम् आर्य्यायाः पूर्व्वार्द्धं पश्चार्द्धे परार्द्धे पश्चार्द्धञ्च पूर्व्वार्द्धे यदि जायेत भवेत्तदा तर्हि सार्य्या उद्गीतिर्नाम निगद्येत प्रोच्येत। लक्षणमेव शुद्धोदाहरणम्। अथ पथ्योद्गीत्युदाहरणम्—'व्याध इवोद्गीतिरवैः प्रथमन्तावन्मनो हरसि। दुर्नयकर विश्राम्यसि पश्चात्प्राणेषु विप्रियैः शल्यैः'॥ महाविपुलोद्गीत्युदाहरणम्—'एषा तवापरोद्गीतिरत्र विपुला परिभ्रमति। तद्वल्लभापि यत्कीर्त्तिरखिलदिक्पालपार्श्वमुपयाति'॥ पथ्यामहाचपलोद्गीत्युदाहरणम्—'उद्गीतिरत्र नित्यं प्रवर्त्तते कामचपलानाम्। तस्मान्मुने विमुञ्च प्रदेशमेतं समेतमेताभिः'। महाविपुलामहाचपलोद्गीत्युदाहरणम्—'विपुला पयोधरश्रोणिमण्डले चक्षुषोश्चपला। उद्गीतिशालिनी कामिनी च सा बालिनी मनो हरति'॥ [ हलायुधः ] ॥२६॥

सार्य्यागीतिर्द्व यर्द्धे यत्राष्टगणाश्चतुष्कला लघु नान्ते।
षष्ठो मध्यगुरुर्वा चतुर्लघुर्व्वा न मध्यगुरुको विषमे ॥२७॥

अथार्य्यागीतिं लक्षयति सार्य्येति। यत्र यस्याम् द्व्यर्द्धे प्रथमार्द्धे द्वितीयार्द्धे च चतुष्कलाश्चतुर्म्मात्रा अष्टौ गणा भवन्ति अन्ते द्वयोरर्द्धयोरवसाने लघु न भवति षष्ठो गणो मध्यगुरुश्चतुर्लघुर्वा भवति विषमे प्रथमतृतीयपञ्चमसप्तमस्थाने मध्यगुरुको गणो न भवति सार्य्या कविभिरार्य्यागीतिर्नाम कथिता। अत्रार्य्याधिकारे द्व्यर्द्धेऽष्टगणा एतावतैव सिद्धे पुनर्गणादिव्यवस्थापनादियमपि पथ्यादिपूर्विकार्य्यागीतिर्भवेदिति प्रत्येतव्यम्। पथ्यार्य्यागीत्युदाहरणम्—'अजमजरममरमेकं प्रत्यक्चैतन्यमीश्वरम्ब्रह्म परम्। आत्मानम्भावयती भवमुक्तिः स्यादितीयमार्य्या गीतिः'॥ महाविपुलार्य्यागीत्युदाहरणम्—'विषयाभिलाषमृगतृष्णिका ध्रुवं हरति हरिणमिव हतहृदयम्। विपुलात्ममोक्षसुखकाङ्क्षिभिस्ततस्त्यज्यते विषयरससङ्गः'॥ पथ्याजघनचपलार्य्यागीत्युदाहरणम्—'वाताहतोर्म्मिमालाचपलं सम्प्रेक्ष्य विषयसुखमल्पतरम्। मुक्त्वा समस्तसङ्गं तपोवनान्याश्रयन्ति तेनात्मविदः'॥ महाविपुलामहाचपलार्य्यागीत्युदाहरणम्—'चपलानि चक्षुरादीनि चित्तहारी च हन्त हतविषयगणः। एकान्तशीलिनां योगिनामतो भवति परमसुखसम्प्राप्तिः'॥ [ हलायुधः ]॥ 'राधामुखाब्जतरणिस्तरणिः संसारसागरोत्तरणविधौ। स जयति निजभक्तानां कामितदाता दुरन्तशक्तिसहायः'॥ २७॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



केदारभट्टगङ्गादासाभ्यामष्टमो द्विगुरुरेव गणः।
यत्कृत इह तन्मुनिमतकाव्यविरोधादमूलकमिति ब्रूमः ॥२८॥

इह आर्य्यागीतौ केदारभट्टगङ्गादासाभ्यामष्टमो गणो यद्द्विगुरुरेव कृतस्तत् मुनिमतस्य पिङ्गलमतस्य काव्यानां भट्टिनलोदयवृन्दावनयमकप्रभृतीनाञ्च विरोधाद्द्वयममूलकमिति ब्रूमः कथयामः। 'आर्य्याप्राग्दलमन्तेऽधिकगुरु तादृक् परदलमार्य्यागीति'रिति सूत्रेणार्याप्रथमार्द्धस्यान्ते अधिकगुरुविधानादार्य्याया अन्ते गुरुनियतत्वाच्च सर्व्वथाष्टमो गणो द्विगुरुरेव भवति। तथा सति वक्ष्यमाणप्रयोगेष्वप्रसङ्गः स्यात्। तमेव दर्शयति यथा—'लवणजलबन्धसरसं तरुफलसम्पत्तिरुद्धदेहायासम्। लङ्कातोरणवारणमारूढं समरलालसं रामबलम्' ॥ इति भट्टिः [ १३।४४ ] ॥ 'हृदय सदा यादवतः पापाटव्या दुरासदाया दवतः। अरिसमुदायादवतस्त्रिलोकमागाः स्मरेण दायादवतः' ॥ इति नलोदयम् ॥ वरदाय नमो हरये पतति जनोऽयं स्मरन्नपि न मोहरये। इत्यादि······ ··················'अर्द्धे वसुगणा आर्य्या गीति'रिति पिङ्गलसूत्रे वसुगण इत्येवोक्तं तद्वृत्तौ चाष्टमोऽपि गणश्चतुर्म्मात्रको भवतीत्येवमुक्तं न तु द्विगुरुरिति अत उक्तकविद्वयमतममूलकमेवेति सुधीभिर्भाव्यम् ॥ २८ ॥

हृदयानन्दान्दोलि च्छान्दसवृन्दाभिनन्दितचित्रचरित्रे।
कवयोऽन्ये पुनरेनां स्कन्धकमिन्दुप्रभे प्रभाषितवन्तः ॥२९॥

आर्य्यागीतेः सञ्ज्ञान्तरमाह—हृदयेति। हृदयस्यानन्दमान्दोलयितुं शीलमस्येति णिनिः तच्च तत् छान्दसवृन्दञ्चेति तेनाभिनन्दितं चित्रचरित्रं यस्या हे तथाभूते हे इन्दुप्रभे अन्ये कवयः पुनरेनामार्य्यागीतिं स्कन्धकं नाम प्रभाषितवन्तः प्राहुः ॥ २९ ॥

कान्तेऽस्मिन् यदि सन्ति त्रिंशद्गुर्वक्षराणि मुक्तादन्ति।
चत्वार्य्येव श्रेयस्कारिणि लघ्वक्षराणि नन्दस्तर्हि ॥ ३० ॥

हे कान्ते हे मुक्तादन्ति हे श्रेयस्कारिणि यद्यस्मिन् स्कन्धके गुरूण्यक्षराणि त्रिंशत् लघून्यक्षराणि चत्वार्येव सन्ति तर्हि स नन्दो नाम छन्दो भवति।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



षष्ठे मध्यगुरुगणस्यावश्यकतया चत्वारि लघ्वक्षराणीत्युक्तम् । लक्षणमेवोदाहरणम् ॥ ३० ॥

त्रिंशद्गुरुरचितस्यैकैकगुरुलघुद्वयह्रसनवृद्धिवशात् ।
अस्याष्टाविंशतिधा भेदा इष्टा निबोध नामानि यथा ॥ ३१ ॥

अस्याष्टाविंशतिधानयनप्रकारमाह—त्रिंशदिति । त्रिंशता गुरुभी रचितस्यास्य नन्दस्य एकैकस्य गुरोर्ह्रासवशात् लघुद्वयस्य वृद्धिवशात् अष्टाविंशतिप्रकारा भेदाः शिष्टैरिष्टाः । नामानि त्वं निबोध बुध्यस्व यथा—॥ ३१ ॥

नन्दो भद्रः शेषः सारङ्गः प्रियतमे शिवब्रह्माणौ ।
वारणवरुणौ नीलो मदनस्तालाङ्कशेखरौ शरगगने ॥ ३४ ॥

शरभो विमतिः क्षीरं नगरनरस्निग्धकास्तथा च स्नेहः ।
अथ मदकलभूपालौ शुद्धसरित्कुम्भकलशशशिनश्चेति ॥ ३५ ॥

इति अष्टाविंशतिप्रकाराणां नामानि । सर्व्वं स्पष्टम् ॥ ३४-३५ ॥

आर्य्यायाः पूर्व्वार्द्धं पूर्व्वार्द्धे तन्वि दृश्यते यस्याम् ।
आर्य्यागीतेरर्द्धं ननु पश्चार्द्धे तु गाथिनी कथिता सा ॥ ३६ ॥

अथ गाथिनीं लक्षयति आर्य्याया इति । ननु भोस्तन्वि यस्याम्पूर्व्वार्द्धे आर्य्यायाः पूर्व्वार्द्धं पश्चार्द्धे तु आर्य्यागीतेरर्द्धं दृश्यते सार्य्या गाथिनी नाम शिष्टैः कथिता । यथा—हे यदुनन्दन भृत्यं दीनमशरणं विषयपरावृत्तम् । त्वच्चरणाम्बुजसेवाक्षालितकलुषं समुद्धर भवाब्धेर्माम् ॥ स जयति मुरलीवादनकेलिकलाभिर्विमोहयन् गोपीः वृन्दावनान्तभूमौ रासरसाक्षिप्तविबुधविधिरुद्रमुखः ॥ ३६ ॥

आर्य्यागीतेरर्द्धं पूर्वार्द्धे यत्र दृश्यते सुतनु तथा ।
आर्य्यायाः पूर्वार्द्धं पश्चार्द्धे सिंहिनीति सा ज्ञेया ॥ ३७ ॥

अथ सिंहिनीं लक्षयति आर्य्यागीतेरिति । हे सुतनु यत्र यस्यां पूर्वार्द्धे आर्य्यागीतेरर्द्धं पश्चार्द्धे आर्य्यायाः पूर्व्वार्द्धं दृश्यते सा सिंहिनी नाम छन्दो ज्ञेया ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यथा—त्रिभुवननिर्माणस्थितिसंहारकृतोऽपि पश्य कृष्णस्य दशाम्। यस्तृणसमलुब्धकशरसुविद्धनिजपार्ष्णिकः स्वधामागात्॥ वन्देऽरविन्दनयनं वृन्दारकवृन्दवन्दितपादाम्भोजम्। नन्दानन्दनिदानं नवजलधररुचिरमिन्दिरारमणम् ॥३७॥

गाथिन्याः प्रथमार्द्धे त्रिंशन्मात्राः सदावतिष्ठन्ते।
द्वात्रिंशच्चरमार्द्धे विपरीताः पुनरये प्रिये सिंहिन्याम्॥ ३८॥

अथानयोर्मात्रा गणयति गाथिन्या इति। अये प्रिये गाथिन्याः प्रथमार्द्धे सदा त्रिंशत् मात्रा अवतिष्ठन्ते। 'समवप्रविभ्यः स्थ' [पां १।३।२२] इति तङ्। चरमार्द्धे द्वात्रिंशन्मात्राः। सिंहिन्यां पुनर्विपरीताः। अर्थात्पूर्व्वार्द्धं द्वात्रिंशन्मात्राः परार्द्धे त्रिंशन्मात्रा अवतिष्ठन्त इति विवेकः॥ ३८॥

आर्य्योभयार्द्धयोश्चेत्स्याद्गुरुरेकोऽधिको मनोज्ञे तर्हि।
सङ्गीतकलाशालिनि सङ्गीतिः सुमतिभिः सङ्गीता॥ ३९॥

अथच्छन्दोविचित्युक्ता एकादशधा गीतिभेदमाह—आर्य्येति। हे मनोज्ञे हे सङ्गीतकलाशालिनि आर्य्याया उभयार्द्धे द्वयोरप्यर्द्धयोर्यदि एको गुरुरधिकः स्यात्तर्हि सुमतिभिः सुधीभिः सा सङ्गीतिर्नाम च्छन्दः सङ्गीता सम्यग्गीयते स्म। यथा—यमुनाकूलनिकुञ्जे मन्दानिलललुलितमालतीलतिकालौ। गोपवधूसङ्गीतिर्जहार कृष्णस्य मानसं सहसोच्चैः॥ ३९॥

आर्य्यायाः पूर्व्वार्द्धे स्याद्गुरुरेकोऽधिको महासौभाग्ये।
यर्हि सुगीतिपटीयसि तर्हि सुगीतिः सुगीता ज्ञैः॥ ४०॥

अथ सुगीतिं लक्षयति—आर्य्याया इति। महत्सौभाग्यं यस्या हे महासौभाग्ये हे सुगीतौ पटीयसि अतिशयेन पटो आर्य्यायाः पूर्व्वार्द्धे यर्हि यदा एको गुरुरधिकः स्यात्तर्हि तदा ज्ञैर्विद्वद्भिस्सा सुगीतिर्नामच्छन्दः सुष्ठु गीता। यथा—कृष्णविपुलमहिमानं साक्षात्कृत्य प्रजेश एकाब्दान्ते। अतिसाध्वसकम्पिततनुरस्तौच्चरणाग्रलग्नकिरीटः॥ ४०॥

आर्य्यायाश्चरमार्द्धे ननु गुरुरेकोऽधिको यदैव भवेत्।
कुशले प्रगीतिकुशले तदा प्रगीतिः प्रगीता प्राज्ञैः॥ ४१॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ प्रगीतिं लक्षयति—आर्य्याया इति। हे कुशले कल्याणि हे प्रगीतिकुशले प्रकृष्टगानदक्षे आर्य्यायाश्चरमार्द्धे शेषार्द्धे यदैव एको गुरुरधिको भवेत्तदा प्राज्ञैः पण्डितैः प्रगीतिर्नाम छन्दः प्रगीता प्रगीयते स्म। यथा—वल्लवविलासिनीनां रासोल्लासेन विभ्रममदभ्रम्। ज्यौत्स्ननिशिविभ्रतीनां मध्यचरो वेणुना जगौ यदुनाथः ॥ ४१ ॥

यस्याः प्रथमार्द्धे स्यात्प्रिये सुगीतेर्द्वितीयार्द्धम्।
चरमार्द्धे प्रथमार्द्धं भवति जगति सानुगीतिरनुनीतिपटो ॥४२॥

हे प्रिये हे अनुनीतिपटो अनुनयचतुरे यस्याः प्रथमार्द्धे सुगीतेर्द्वितीयार्द्धं चरमार्द्धे द्वितीयार्द्धे प्रथमार्द्धं भवति सा जगति अनुगीतिर्नाम छन्दो भवति। यथा—योऽम्बष्ठेन कुवलयापीडं धृत्वा तदीयदन्ताभ्याम्। सम्पीडयन् पितृपतेर्निनाय भवनं पुनः पुनस्तं वन्दे ॥ ४२ ।

यस्याः प्रथमार्द्धे स्यात्प्रिये प्रगीतेर्द्वितीयार्द्धञ्चेत्।
पश्चार्द्धे प्रथमार्द्धं तदा बुधैर्मञ्जुगीतिरिति गीता ॥ ४३ ॥

हे प्रिये यस्याः प्रथमार्द्धे यदि प्रगीतेर्द्वितीयार्द्धं भवेत् पश्चार्द्धे द्वितीयार्द्धे प्रथमार्द्धं तदा बुधैर्मञ्जुगीतिर्नाम छन्दो [ गीता कीर्तिता ] यथा—चाणूरो मल्लवरो यममिव वीक्ष्याशु यं सभयोऽभूत्। येन च नियुध्यमानो वीताघः स्वर्जगाम मे स गतिः ॥ ४३ ॥

गीतिप्रिये प्रगीतेः परार्द्धदृब्धोभयार्द्धा या स्यात्।
अविगीतकीर्त्तिततिभिर्विगीतिरिति कीर्त्तिता सा सद्भिः ॥ ४४ ॥

हे गीतिप्रिये या प्रगीतेः परार्द्धेन द्वितीयार्द्धेन दृब्धं ग्रथितम् उभयार्द्धं प्रथमद्वितीयार्द्धं यस्याः सा तथाभूता भवेत् अविगीता अगर्हिता कीर्त्तिततिर्यशःश्रेणिर्येषां तैः सद्भिर्विगीतिर्नाम छन्दः कीर्त्तिता। यथा—गोप्यधरसुधां पीत्वा निधुवनरसिको हरिः सम्प्रीतः। स्पृहयाम्बभूवुरमरा मुधा सुधाया इति स्माहोच्चैः ॥ ४४ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सङ्गीतेः पूर्वार्द्धे यद्यपरार्द्धं लभेत स्थानम्।
अपरार्द्धे पूर्व्वार्द्धं चारुतरे चारुगीतिरुदिता तर्हि ॥ ४५ ॥

हे चारुतरे अतिसुन्दरि यदि सङ्गीतेः पूर्व्वार्द्धेऽपरार्द्धं स्थानं लभेत अपरार्द्धे पूर्व्वार्द्धं तर्हि कविभिश्चारुगीतिर्नाम छन्द उदिता। यथा—नन्दसुतं यदुनन्दनमानन्दनिधिं विधिविधातारम्। भज भज भज तात भुक्तिं मुक्तिञ्चाप्युत्सृजन्तमाशु भ्रातः ॥ ४५ ॥

आर्य्यागीतेरेव स्यात्पश्चार्द्धं यदैकगुरुणा हीनम्।
अयि वल्गुगीतिसान्त्वितरुदच्छिशो तर्हि वल्गुगीतिः स्यात् ॥४६॥

अयि भोः वल्गुगीतिभिर्मनोहरगीतैः सान्त्वितो रुदन् शिशुर्यया तथाभूते यदा आर्य्यागीतेरेव पश्चार्द्धम् एकेन गुरुणा हीनं स्यात्तदा वल्गुगीतिर्नाम छन्दः स्यात्। यथा—श्रुतिभिर्निपीय गोपीजनवल्लभवल्गुगीतिवंशीनादम्। हित्वा पतिसुतमगमन् गोप्योऽञ्जसा निकुञ्जान्तः ॥ ४६ ॥

आर्य्यागीतेरेव स्यात्पूर्वार्द्धं यदैकगुरुहीनम्।
श्वेतगरुल्ललितगते कलिता ललिता तदा महाकविभिः सा ॥४७॥

हे श्वेतगरुल्ललितगते हंसलीलागमने यदा आर्य्यागीतेरेव पूर्व्वार्द्धम् एकेन गुरुणा हीनं वर्जितं भवेत् तदा सा महाकविभिर्ललिता नाम छन्दः कलिता उक्ता। यथा—ललिता निकुञ्जभवनादागतवन्तं स्ववेक्ष्य भगवन्तम्। कल्ये वासकसज्जारुषेषदपि भाषते स्म नो राधा ॥ ४७ ॥

उपगीतेः प्रथमार्द्धं यद्यधिकैकगुरुणा युक्तं स्यात्।
प्रमदाललामभूते गदिता सद्भिस्तदा प्रमदा ॥ ४८ ॥

हे प्रमदाललामभूते स्त्रीणामलङ्करणस्वरूपे यदि उपगीतेः प्रथमार्द्धम् अधिकेनैकेन गुरुणा संयुक्तं भवेत्तदा सद्भिः पण्डितैः सा प्रमदा नाम गदिता। यथा—या भवति दुश्चरित्रा मुखरा चञ्चलमतिः समदा सा। पतिसत्त्वेऽप्यन्यरता मलिनयति कुलद्वयं प्रमदा ॥ ४८ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उपगीतेश्चरमार्द्धं यद्यधिकैकगुरुणा युक्तम् ।
मुखचन्द्रिकाविकासितसद्भावे चन्द्रिका तर्हि स्यात् ॥ ४६ ॥

मुखचन्द्रिकया वदनज्योत्स्नया विकासितः सद्भावो यया हे तथाभूते यदि उपगीतेश्चरमार्द्धम् अधिकेन एकेन गुरुणा युक्तं स्यात्तर्हि सा चन्द्रिका नाम छन्दः स्यात् । यथा—भवति विमलता व्योम्नो नदीनदसरोहृदस्थापाम् । शरदि जलधरात्ययतस्ताराग्रहचन्द्रिकाराजीनाम् ॥ ४६ ॥

इत्यार्य्याकुसुमम् !

अत्र कुसुमशब्दः स्तवकावान्तरक्षुद्रपरिच्छेदबोधकः । आर्य्यायाः कुसुमम् इति समासम् ॥

---

## अथ वैतालीयकुसुमम्

वैतालीयन्तदुच्यते मात्रा यत्र चतुर्दशासमे ।
युग्मे यदि षोड़शान्तिमा वर्णाः पञ्च गुरुर्लघुः क्रमात् ॥ १ ॥

वैतालीयं लक्षयति वैतालीयमिति । यत्र असमे प्रथमतृतीयपादे चतुर्द्दश मात्रा भवन्ति । युग्मे द्वितीयचतुर्थपादे षोड़श मात्रा यदि भवन्ति । अन्तिमाः पादानामन्ते स्थिताः पञ्च वर्णा गुरुः लघुरिति क्रमेण भवन्ति तथाहि गुरुर्लघुः पुनर्गुरुर्लघुः पुनर्गुरुरिति तत् वैतालीयं नाम छन्द उच्यते कविभिरिति शेषः ॥१॥

विषमे परयेह मिश्रिता करणीया न कला द्वितुर्य्यगा ।
चरणे तु समे हिते रते ननु षष्टी च तथैव वल्लभे ॥ २ ॥

अथ वैतालीये विशेषनियममाह—विषम इति द्वाभ्याम् । इह वैतालीये प्रकरणे विषमे चरणे द्वितीयचतुर्थगा कला मात्रा परया तृतीयया पञ्चम्या च कलया मात्रया मिश्रिता श्लिष्टा न करणीया पृथक् प्रयोक्तव्या इत्यर्थः । हे हिते रते हे वल्लभे तु किन्तु समे चरणे षष्ठी च कला तथैव अर्थात् परया सप्तम्या



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



कलया सह मिश्रिता न कर्त्तव्या। चकाराद्द्वितीया कला तृतीयया चतुर्थी कला पञ्चम्या च कलया मिश्रिता न करणीयेत्यर्थः ॥ २ ॥

विषमचरणयोर्यदृच्छयोदितनियमेतरथापि वल्लभे।
अपरचरणयोः पुनर्न षड्लघुमात्राः कुरुतां पृथक् पृथक् ॥३॥

हे वल्लभे विषमचरणयोरुक्तनियमादन्यप्रकारेणापि यदृच्छया कुरुताम्। समचरणयोः पुनः षड्लघुमात्राः पृथक् पृथक् न कुरुताम् अमिश्रिता न प्रयुङ्क्ताम् मिश्रिताः प्रयुङ्क्तामित्यर्थः। यथा—वैतालीये तावत्। 'समरशिरसि सह्यते द्विषां नवनिशितायुधवृष्टिरग्रतः। कुवलयदलदीर्घचक्षुषां प्रमदानान्न कटाक्षवीक्षितम्' ॥ 'क्षुत्क्षीणशरीरसञ्चया व्यक्तीभूतशिरास्थिपञ्जराः। केशैः परुषैस्तवारयो वैतालीयन्तनुं वितन्वते' ॥ अपिच—'तव तन्वि कटाक्षवीक्षितैः प्रहरद्भिः श्रवणान्तगोचरैः। विशिखैरिव तीक्ष्णकोटिभिः प्रहतः प्राणिति दुष्करङ्गतः' ॥ अपिच—'शवशोणितपञ्जराञ्चित पुरुषान्त्रग्रथितोर्द्ध्वमूर्द्धजम्। वपुरन्तरवह्निदीपितं वैतालीयमिदं विलोक्यताम्' ॥ वैतालीयमिति वेतालशब्दात्कृशाश्वादेराकृतिगणत्वाच्छण्-प्रत्ययश्चातुरर्थिकः। 'अत्र पादग्रहणमिदं ज्ञापयति यदार्य्यादीनां पादश्चतुर्भाग इति व्यवस्था नास्ति' ॥ [ हलायुधः ] ॥ ३ ॥

नीलायतलोललोचनाब्जे वैतालीयचतुष्पदावसाने।
एकं गुरु जायतेऽधिकञ्चेदौपच्छन्दसकन्तदोक्तमार्यैः ॥४॥

अथ औपच्छन्दसकं लक्षयति नीलेति। नीले कृष्णे आयते दीर्घे लोले सतृष्णे लोचनाब्जे नेत्रपद्मे यस्या हे तथाभूते यदि वैतालीयस्य चतुर्णां चरणानामन्ते एकं गुर्वक्षरम् अधिकं जायते तदा आर्य्यैः पिङ्गलादिभिरौपच्छन्दसकन्नाम छन्द उक्तम्। उपच्छन्दःशब्दादर्हणादिपाठाचातुरर्थिको वुञ्प्रत्ययः 'युवोरनाकावि'[ पां ७।१।१ ]ति वुञोऽकादेशश्च। लक्षणमेवोदाहरणम्। इदमपि—'वाक्यैर्म्मधुरैः प्रतार्य्य पूर्वं यः पश्चादभिसन्दधाति मित्रम्। तं दुष्टमतिं विशिष्टगोष्ठ्यामौपच्छन्दसकं वदन्ति बाह्यम्। अपिच—परमर्म्मनिरीक्षणानुरक्तं स्वयमत्यन्तनिगूढचित्तवृत्तिम्। अनवस्थितमर्थलुब्धमारा-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



दौपच्छन्दसकं जहीहि मित्रम्' ॥ [ हलायुधः ] ॥ मालभारिण्यामतिप्रसङ्गेऽपि औपच्छन्दसकलक्षणे तस्या वर्णवृत्तत्वादस्य पुनर्मात्राघटितत्वेन भेदः ॥ ४ ॥

एकगुरुर्द्वावगुरू च द्वौ दीर्घौ स्तो यत्र पदान्ते ।
आपातलिका कथिता सा ननु सकलं यदि पूर्ववदन्यत् ॥ ५ ॥

अथ आपातलिकां लक्षयति—एकेति । पादानामन्ते अवसाने एको गुरुर्द्वौ अगुरू लघू पुनर्द्वौ दीर्घौ यदि स्तः अन्यदुक्तादन्यत्सकलं यदि पूर्ववत् वैतालीयवद्यत्र भवति आर्यैः सा आपातलिका नाम छन्दः कथिता । यथा— 'पिङ्गलकेशी कपिलाक्षी वाचाटा विकटोन्नतदन्ती । आपातलिका पुनरेषा नृपतिकुलेऽपि न भाग्यमुपैति' ॥ आपातलिका अस्थिरा । अपिच—'अभिरमयति किन्नरकण्ठी, हंसगतिः श्रवणायतनेत्रा । विशदकमलकोमलगात्री, युवतिरियं हृदयं तरुणानाम्' ॥ [ हलायुधः ] ॥ ५ ॥

चतुर्षु पादेष्विह प्रिये कला द्वितीया श्लिष्यते यदा ।
तृतीयया यत्र मात्रया, भवेत्तदा सा दक्षिणान्तिका ॥ ६ ॥

अथ दक्षिणान्तिकां लक्षयति चतुर्ष्विति । हे प्रिये इह वैतालीये चतुर्षु पादेषु यदा द्वितीया मात्रा तृतीयया मात्रया यत्र आश्लिष्यते आलिङ्ग्यते तदा सा दक्षिणान्तिका नाम छन्दो भवेत् ॥ ६ ॥

ललने द्विचतुर्थपादयोः पूर्व्वगा सुतनु मिश्रिता भवेत् ।
यदि पञ्चममात्रया तदा प्राच्यवृत्तिरिह गीयते बुधैः ॥ ७ ॥

अथ प्राच्यवृत्तिं लक्षयति—ललन इति । हे ललने हे सुतनु इह वैतालीये द्वितीयचतुर्थपादयोः पूर्वगा चतुर्थी मात्रा यदि पञ्चम्या मात्रया मिश्रिता संश्लिष्टा भवेत्तदा बुधैः प्राच्यवृत्तिर्नाम छन्दो गीयते । यथा— 'विपुलार्थसुवाचकाक्षराः कस्य नाम न हरन्ति मानसम् । रसभावविशेषपेशलाः प्राच्यवृत्तिकविकाव्यसम्पदः' ॥ [ हलायुधः ] ॥ ७ ॥

अयुग्मपदयोर्विमिश्रिता यदि पूर्वेह तृतीयमात्रया ।
तदा ध्रुवमुदीच्यवृत्तिरित्यभिभाषन्त इमाम्महाधियः ॥ ८ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



इह वैतालीये अयुग्मपदयोः प्रथमतृतीयपादयोस्तृतीयमात्रया सह यदि पूर्व्वगा द्वितीयमात्रा विमिश्रिता युक्ता भवति तदा महाधिय इमाम् उदीच्यवृत्ति-नाम छन्दः अभिभाषन्ते वदन्ति। शेषं यथाप्राप्तमेव। यथा—'अवाचक-मनूर्जिताक्षरं श्रुतिदुष्टं श्रुतिकष्टमक्रमम्। प्रसादरहितञ्च नेष्यते कविभिः काव्यमुदीच्यवृत्तिभिः' ॥ [ हलायुधः ] ॥ ८ ॥

द्वितुर्य्यपदयोर्विमिश्रिता यत्र पञ्चमिकयेह पूर्व्वगा।
तथान्यपदयोस्तृतीयया पूर्व्वगा भवति तत्प्रवृत्तकम्॥ ९॥

प्रवृत्तकं वैतालीयं लक्षयति द्वितुर्य्यति। इह वैतालीये द्वितीयचतुर्थ-पादयोः पञ्चम्या मात्रया सह यत्र पूर्व्वगा चतुर्थी मात्रा मिश्रिता भवति अन्यपदयोः प्रथमतृतीयपादयोस्तृतीयया मात्रया सह पूर्व्वगा द्वितीया मात्रा तथा मिश्रिता तत्प्रवृत्तकं नाम भवति। यथा—'इदम्भरतभूभृतां श्रूयतां श्रुतिमनोरसायनम्। पवित्रमधिकं शुभोदयं व्यासवक्त्रकथितं प्रवृत्तकम्' ॥ [ हलायुधः ] ॥ ९ ॥

चतुर्षु चरणेष्वपि प्रिये यदास्य विषमाङ्घ्रिलक्षणम्।
भवेत्कविभिरुच्यते तदा चरित्रवति चारुहासिनी॥१०॥

चारुहासिनीं लक्षयति चतुर्ष्विति। हे प्रिये हे चरित्रवति चरित्रशालिनि अस्य प्रवृत्तकस्य विषमाङ्घ्र्योः प्रथमतृतीयपादयोर्लक्षणं चतुर्षु चरणेष्वपि यदा भवेत्तदा कविभिः चारुहासिनी नाम उच्यते। यथा—'मनाक्प्रसितदन्त-दीधितिः स्मरोल्लसितगण्डमण्डला। कटाक्षललिता तु कामिनी मनो हरति चारुहासिनी' ॥ [ हलायुधः ] ॥ १० ॥

यदि चतुर्षु चरणेषु युग्मयोश्चरणयोर्भवेत्तस्य लक्षणम्।
गुरुजनान्तिकनताननाम्बुजे ननु तदेयमपरान्तिका भवेत्॥११॥

यदीति। गुरुजनानां श्वशुरादीनामन्तिके समीपे नतम् आननाम्बुजं यस्या हे तथाभूते चतुर्षु चरणेषु यदि तस्य प्रवृत्तकस्य युग्मयोश्चरणयोर्लक्षणं स्यात्तदा इयम् अपरान्तिका नाम भवेत्। किन्तल्लक्षणं षोड़शमात्रत्वं पञ्चमेन



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



पूर्वस्य योगः। षण्णां मिश्राणां प्रयोगश्च। यथा—स्थिरविलासनतमौक्तिकावली कमलकोमलाङ्गी मृगेक्षणा। हरति कस्य हृदयं न कामिनः ह्ररतकेलिकुशलापरान्तिका ॥ ११ ॥

अयि सुन्दरि सुन्दरीति या कथिता छन्दसि वर्णवृत्तके।
प्रविशेन्न तदीयलक्षणं मात्रावृत्त इहेति निश्चिनु ॥ १२ ॥

अयि सुन्दरि वर्णवृत्ते सुन्दरीति या कथिता इह वैतालीये मात्रावृत्ते तदीयलक्षणं न प्रविशेत् प्रवेष्टुं न शक्नुयात्। सुन्दरी अक्षरच्छन्दः वैतालीयं तु मात्राच्छन्द इत्यनयोर्भेदः। इति निश्चिनु निर्णय ॥ १२ ॥

इति वैतालीयकुसुमम्।

---

## अथ मात्रासमककुसुमम्

षोड़श मात्रा विरतिः श्रव्ये लघुरनुचरणं नवमी भव्ये।
अन्त्या दीर्घा करुणालोके मात्रासमकं प्रथितं लोके ॥ १ ॥

अथ मात्रासमकं लक्षयति—षोड़शेति। अस्य व्याख्यानाय यत्तच्छब्दावध्याहार्य्यौ। हे भव्ये करुणायुक्त आलोको दर्शनं यस्या हे तथाभूते यत्र अनुचरणं चरणे चरणे षोड़श मात्रा भवन्ति श्रव्ये श्रवणसुखसम्पादकस्थाने विरतिर्विश्रामः नवमी मात्रा लघुर्लघुरूपा अन्त्या पादान्तस्थिता मात्रा दीर्घा गुरुरूपा भवति लोके तन्मात्रासमकं नाम प्रथितम् विख्यातम्। यथा—'जगदुपकर्त्ता सुकृती सरलः कोटिषु कोटिषु मध्ये विरलः। असुभिर्वसुभिः समुचितवाग्भिः परोपकारः क्रियते सद्भिः' ॥ यथा वा—'अश्मश्रुमुखो विरलैर्दन्तैर्गम्भीराक्षो मितनासाग्रः। निर्म्मांसहनुः स्फुटितैः केशैर्मात्रासमकं लभते दुःखम्' ॥ [ हलायुधः ] ॥ अत्र अन्त्या दीर्घा इत्यनेन आतिदेशिकगुरुत्वनिवृत्तिस्तेनात्र द्वौ लघू भङ्क्त्वा द्विमात्रिको गुरुः कर्त्तव्य इति ॥ १ ॥

सर्व्वं स्यादधरविजितविम्बे प्राग्वच्छशधरसममुखविम्बे।
नवमी द्वादश्यपि लघुभक्ता यस्यां सा वानवासिकोक्ता ॥२॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अधरेण विजितं विम्बं तन्नामकफलं ( गोरखीया कठाल ) यया हे तथाभूते शशधरेण समं मुखविम्बं वदनमण्डलं यस्या हे तथाभूते यस्यां सर्व्वं लक्षणं प्राग्वन्मात्रासमकवद् भवति केवलं नवमी द्वादशी अपि मात्रा लघुभक्ता लघुरेव भवति कविभिः सा वानवासिका उक्ता। यथा—'मन्मथ-चापध्वनिरसणीयः सुरतमहोत्सवपटहनिनादः। वनवासश्रीस्वनितविशेषः कस्य न चित्तं रमयति पुंसः॥ [ हलायुधः ] ॥ २ ॥

यत्र प्रतिचरणे तन्वि स्युः पार्वणशशिमुखि षोड़शमात्राः।
यदि पञ्चमी लघुरथाष्टमिका, गुरुरन्तिमा स विश्लोकः स्यात् ॥३॥

हे तन्वि हे पार्व्वणशशिमुखि पूर्णिमोदितचन्द्रवदने यत्र प्रतिचरणे षोड़शमात्राः स्युः यदि पञ्चमी अष्टमी च मात्रा लघुः अन्तिमा मात्रा गुरुः शेषं यथाप्राप्तं तर्हि स विश्लोको नाम स्यात्। यथा—'भ्रातर्गुणरहितं विश्लोकं दुर्णयकरणकदर्थितलोकम्। जातं महितकुलेऽप्यविनीतम्मित्रं परिहर साधुविगीतम्' ॥ [ हलायुधः ] ॥ ३ ॥

रक्तकमलमुखि यदि विश्लोके नवमी च भवति लघुर्विशोके।
चित्रेति नाम हि तदा लभते छन्दःप्रवीणकवयो ब्रुवते ॥४॥

हे रक्तकमलमुखि हे विशोके शोकरहिते यदि विश्लोके छन्दसि नवमी मात्रा लघुर्भवति चकारात्पञ्चम्यष्टमी च तदा चित्रेति नाम लभते। छन्दः-प्रवीणकवय इति ब्रुवते। यथा—'यदि वाञ्छसि परपदमारोढुं मैत्रीम्परिहर सह वनिताभिः। मुह्यति मुनिरपि विषयासङ्गाच्चित्रा भवति हि मनसो वृत्तिः॥ नवमीत्यनुवर्त्तमाने पुनर्नवमीग्रहणमुपचित्राप्रतिप्रसवार्थम्' ॥ [ हलायुधः ] ॥४॥

यत्र स्युः प्रतिपादे मात्राः कान्ते षोड़श गुर्व्ववसानाः।
नवमिकया दशमी च गुरुश्चेत्तदा भवेदुपचिताख्या सा ॥५॥

हे कान्ते यत्र प्रतिपादे गुर्ववसाना गुर्वन्ताः षोड़श मात्राः स्युर्भवेयुः नवमिकया नवस्या मात्रया सह दशमी च मात्रा यदि गुरुस्तदा उपचिता



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



नाम छन्दो भवेत्। यथा—'यच्चित्तं गुरुसक्तमुदारं विद्याभ्यासमहाव्यसनञ्च। पृथ्वी तस्य गुणैरुपचित्रा चन्द्रमरीचिनिभैर्भवतीयम्॥ पूर्व्वं लघुनियमेन लक्षणमुक्तम्। इदन्तु गुरुनियमेनोच्यते'॥ [ हलायुधः ]॥ ५॥

स्मितसम्भाषितविकसितदन्ते निष्पन्नं यदि सुविमलकान्ते।
एषां कैश्चन चरणैः शान्ते पादाकुलकमिदं स्मर कान्ते ॥६॥

सम्भाषणं सम्भाषितं भावे क्तः स्मितपूर्व्वेण सम्भाषितेन विकसिता दन्ता यस्या हे तथाभूते सुविमला कान्तिर्यस्या हे तथाभूते हे शान्ते शमितान्तरिन्द्रिये हे कान्ते मनोरमे एषां पञ्चानाम्मध्ये यैः कैश्चन यैः कैश्चिदपि चतुर्भिः पादैर्यदि निष्पण्णं निर्वृत्तं भवति तदा पादाकुलकं नाम छन्द आत्थ वद। तत्र 'मात्रासमकविश्लोकवानवासिकोपचित्राणां पादैरुदाहरणम्। अलिवाचालितविकसितचूते काले मदनसमागमदूते। स्मृत्वा कान्तां परिहृतसार्थः पादाकुलकं धावति पान्थः॥ तथा विश्लोकोपचित्रामात्रासमकोपचित्राणां पादैः पादाकुलकम्। तत्रोदाहरणम्। पुंस्कोकिलकृतशोभनगीते दक्षिणपवनप्रेरितशीते। मधुसमयेऽस्मिन् कृतविश्लोकः पादाकुलकं नृत्यति लोकः॥ मात्रासमकस्यैकेन पादेन द्वाभ्यामुपचित्राया विश्लोकस्यैकेन पादाकुलकम्। तत्रोदाहरणम्—'चित्तं भ्राम्यत्यनवस्थानं पादाकुलकश्लोकसमानम्। कायः कायति शायति शक्तिस्तदपि न मम परलोके भक्तिः'॥ यथा पादाकुलकनाम्नः श्लोकस्य पादेष्वस्थिरता तथेत्यर्थः॥ उपचित्रापादेनैकेन वानवासिकापादेन पुनरुपचित्रापादाभ्यां पादाकुलकम्। तत्रोदाहरणम्—परिहृतसर्व्वपरिग्रहलोकः प्रतिदिनवर्द्धितगुरुतरशोकः। दुःखविवर्द्धितलोचनवारिः पादाकुलकं याति तवारिः'॥ [ हलायुधः ]॥ ६॥

तत्पादाकुलकं यत्पादे, षोड़शमाला यावकपादे।
गुरुलघ्वोर्नास्ति कोऽपि नियमः परमन्तरान्तरा गुरुलघवः ॥७॥

हे यावकपादे अलक्तयुक्तचरणे यस्य पादे षोड़शमात्रा भवन्ति गुरुलघ्वोः कोऽपि नियमो नास्ति परं किन्तु अन्तरान्तरा मध्ये मध्ये गुरुलघवो भवन्ति



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



केवलगुरवः केवललघवश्च न भवन्ति तत् पादाकुलकं नाम छन्द इति प्राकृतपैङ्गलमतम्। यथा—मलयपवनहतकुसुमपरागः परभृतनिभृतरणितवनभागः। चिरतरसञ्चितमानदुरन्तः कस्य न मुदमुपनयति वसन्तः॥ यथा वा—जलभरदानहरितवनभागः, शीतलमारुतकृतपरभागः। चञ्चलचपलाधृतवनमालः, समुपागत इह जलधरकालः॥ ७॥

षोड़शमात्राः पादे स्थापय, यमके उभयोर्दलयोः प्रापय।
लघुयुगमन्ते चेदवधारय तदडिल्लम्मध्यगुरूच्चारय॥ ८॥

पादे इति जात्या निर्देशः पादेष्वित्यर्थः। यस्य पादेषु षोड़श मात्राः स्थापय उभयोर्दलयोर्यमकद्वयं प्रापय पादान्ते लघुद्वयम् अवधारय मध्यगुरु तत् अडिल्लं नाम छन्दो भवति। यथा—छन्दसि शोड़शकले विलासिनि प्रतिपदमन्ते यमकविलासिनि। अडिल्लनामपयोधरधारिणि, शेषे नियतलघुद्वयधारिणि॥ यथा वा—हरिरुपगत इह सखि मयि वेदय कुञ्जगृहोदरगतमपि खेदय। इह यदि सपदि सविधमुपयास्यति, रसरसनामृतमिदमनुपास्यति॥ ८॥

प्राक् त्रिचतुष्कलगणमनुपदे हि गुरुमध्यगणञ्च ततो निधेहि।
अयि यत्र चतुःषष्टिः कला हि ननु पज्झटिकां सति तामवेहि॥९॥

अयि भोः सति हि अवधारणे अनुपदे प्रतिपादे प्राक् पूर्वं चतुष्कलगणत्रयं निधेहि स्थापय ततः परं गुरुमध्यगणञ्च निधेहि निश्चयार्थे हिशब्दः यत्र कलाश्चतुःषष्टिर्हि तिष्ठन्ति तां पज्झटिकां नाम अवेहि बुध्यस्व। यथा—चत्वारि चतुष्कलानि देहि, तत्रापि जगणमन्ते विधेहि। भणिता फणिनायकपिङ्गलेन, पज्झटिकेयं षोड़शकलेन॥ ९॥

षोड़श मात्राः पादे कान्ते, सानुप्रासा यदि पादान्ते।
निर्मध्यगुरुचतुष्कलसाध्या, पज्झटिका तर्हि बुधाराध्या॥१०॥

मतान्तरमाह—षोड़शेति। हे कान्ते पादे पादेषु षोड़श मात्राः पादान्ते सानुप्रासा अनुप्रासयुक्ता मध्यगुरुगणरहितैश्चतुष्कलगणैः साध्या भवति यदि



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तर्हि धीरैराराध्या वन्द्या पज्झटिका नाम छन्दो भवति। यथा—तरल-वतंसाश्लिष्टष्कन्ध,श्लथतरपज्झटिकाकटिबन्धः। मौलिचपलशिखिचन्द्रकवृन्दः, कालियशिरसि ननर्त्त मुकुन्दः॥ अवतारं स चकार मुरारी, रणधरणीजित-रजनिविहारीत्यादिप्रयोगदर्शनात् नवमगुरुत्वविभूषितगात्रेति छन्दोमञ्जर्य्युक्तं न समीचीनं प्रायिकं वा बोध्यम् ॥ १० ॥

प्रथममचलधृतिपदयुगमुदयति धृतदिनकरकरजलरुहसममुखि।
पश्चार्द्धे चेद्विद्युन्मालापादौ स्यातां तर्हि ज्योतिः ॥ ११ ॥

धृतः दिनकरस्य सूर्य्यस्य करो रश्मिर्येन तच्च तत् जलरुहञ्चेति तेन समं मुखं यस्या हे तथाभूते प्रथमं प्रथमार्द्धे यदि अचलधृतेः पादद्वयम् उदयति पश्चाद्विद्युन्मालाया द्वौ पादौ स्यातां तर्हि ज्योतिर्नाम छन्दो भवति। यथा—'यदि सुखमनुपममपरमभिलषसि परिहर युवतिषु रतिरतिशयमिह। आत्मज्योतिर्योगाभ्यासाद्दृष्ट्वा दुःखच्छेदं कुर्य्यात्' ॥ [ हलायुधः ] ॥ अत्रार्द्धग्रहणा-त्पादव्यवस्था नास्ति। केवलं पूर्व्वार्द्धे द्वात्रिंशल्लघवः परार्द्धे षोडशगुरव इति व्यवस्था ॥ ११ ॥

तत्पूर्व्वार्द्धे पश्चार्द्धञ्चेत्पश्चार्द्धे पूर्व्वार्द्धं सौम्या।
भवति सुमुखि हरिभजनसफलजनुरशकलगुणमणिगण-
विखचिततनु ॥ १२ ॥

हे सुमुखि हरिभजनेन कृष्णसेवया सफलं जनुर्जन्म यस्या हे तथाभूते अशकला अखण्डा ये गुणमणयस्तेषां गणः समूहस्तेन विखचिता सम्बद्धा तनुर्यस्या हे तथाभूते तस्य ज्योतिषः पूर्व्वार्द्धे पश्चार्द्धं चेत्तर्हि सौम्या नाम छन्दो भवति। यथा—'सौम्यां दृष्टिं देहि स्नेहाद्देहेऽस्माकं मानं मुक्त्वा। शशधरमुखि मुखमुपनय मम हृदि मनसिजरुजमपहर लघुतरमिह' ॥ [ हलायुधः ] ॥ १२ ॥

त्रिगुणितनवमितलघुकमवसितिगतगुरुकमतिरुचिररुचिके।
यदि दलयुगलमशकलशशधरमुखि भवति हि पुनरतिरुचिरा ॥१३॥

अतिरुचिरा रुचिः प्रभा यस्या हे तथाभूते अशकलः अखण्डः पूर्ण इति यावत् यः शशी चन्द्रस्तद्वत् मुखं यस्या हे तथाभूते यदि दलयुगं पूर्व्वार्द्धं



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



परार्द्धञ्च त्रिगुणितर्नवभिर्मिता अवच्छिन्ना लघवो यस्मिंस्तथा अवसितिगतम् अन्त्यं गुरुर्य्यस्मिन् तत्तथाभूतं भवति उभयार्द्धेऽपि सप्तविंशतिलघूत्तरमेकं गुर्व्वक्षरं भवति तदा सा अतिरुचिरा नाम छन्दो भवति। यथा—अघशरणदपद हिमगिरिक्ततपद निगमसृगितपद सुशरणम्। असकृदभवभव भवनिपतितमव जनमिममतिशयमशरणम्॥ १३॥

त्रिगुणितनवलघुत उदयति गुरुरचरमदल इह चरमदले।
द्विगुणितदशनवलघुत [उदयति] यदि गुरुरयि सुदति भवति
शिखिका॥ १४॥

अयि भोः सति हे सुदति इह यदि त्रिगुणितेभ्यो नवभ्यः सप्तविंशतिभ्यो लघुभ्यः पर एको गुरुरचरमदले प्रथमार्द्धे प्रयुज्यते। चरमदले द्वितीयेऽर्द्धे द्विगुणिता ये दश ते च नव च द्वन्द्वः ते च ते लघवश्चेति तेभ्य एकोनत्रिंशल्लघुभ्य इत्यर्थः पर एको गुरुर्यदि प्रयुज्यते तदा शिखिका शिखा नाम छन्दो भवति। यथा—'रतिकरमलयमरुति शुभशशमभिहतहिममहसि मधुसमये। प्रवससि पथिकविरहित कथमिह तु परिहृतयुवतिरतिचपलतया'॥ [हलायुधः]॥ पिङ्गलसूत्रेऽस्याश्चूलिका संज्ञा। अन्ये तु सोदाहरणलक्षणे चूलिकेति नाम प्रवेशयितुमशक्यतया शिखाचूलयोरेकार्थकारित्वमाकलय्य यवमतीस्थले यवान्वितेतिवत् शिखिकेति परिवर्त्तितम्। मालास्थले स्रगिति च। एवं बहूनि सन्ति॥ १४॥

त्रिगुणितनवलघुत उदयति गुरुरिह शशिमुखि यदि दलयुगले।
वरतर इतरकविनिकर उपदिशति मतिमति पुनरिति शिखिका॥१५॥

हे शशिमुखि हे मतिमति प्रशस्तमते यदि त्रिगुणितनवलघुतः सप्तविंशतिलघुभ्यः पर एको गुरुर्दलद्वये उदयति ता वरतरः श्रेष्ठतरः कविनिकरः कविसमूहः पुनः शिखिका इति उपदिशति। अत्रापि दलयुगलग्रहणात् पादव्यवस्था नास्ति। यथा—घनपरिमलमिलदलिकुलमुखरितनिखिलकमलमलयपवने। जनयति मनसि शशिमुखि मुदमतिशयमिह मम मधुरयमधुना'॥ [हलायुधः]॥१५॥

इति मात्रासमककुडमम्॥





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

## अथ दोहा ।

विषमे पादे त्र्यधिकदश मात्रा यत्र पतन्ति ।
इतरत्र तथैकादश तु तां दोहां प्रवदन्ति ॥ १ ॥

अथ दोहां लक्षयति विषम इति । यत्र यस्यां विषमे प्रथमतृतीये पादे त्रयोदश मात्राः पतन्ति प्रविशन्ति तथा इतरत्र समे द्वितीयचतुर्थपादे एकादश तु एकादशैव कवयस्तां दोहां नाम छन्दो वदन्ति ॥ १ ॥

विषमेऽङ्घ्रौ षट्कलतोऽत्र, चतुष्कलं त्रिकलञ्च ।
युग्मेऽर्पय षट्कलत इह, चतुष्कलैककलौ हि ॥ २ ॥

इह दोहायां विषमेऽङ्घ्रौ प्रथमतृतीये पादे षट्कलतः षट्कलगणात्परं चतुष्कलं त्रिकलञ्च गणमर्पय निधेहि । युग्मे द्वितीयचतुर्थे पादे षट्कलतः परं चतुष्कलम् एककलञ्च अर्पय हि अवधारणे । यथा—हरिचरणमहोत्पलगलित,-मकरन्दं पिबसि यदि । चित्तमधुव्रत तर्हि तव, किमतोऽन्यत्सुखमस्ति ॥ यथा वा—गौरीविरचिततनुसकल, मस्तकराजितगङ्ग । जय वृषभध्वज पुरमथन, महादेव निस्सङ्ग ॥ २ ॥

दोहालक्षणमुखपाद, उक्तगणन्यासे तु ।
गङ्गादासकविः सुतनु, सातिशयं बभ्राम ॥ ३ ॥

हे सुतनु दोहालक्षणस्य मुखपादे प्रथमपादे छन्दःशास्त्रोक्तगणविन्यासे गङ्गादासकविः सातिशयं बभ्राम भ्रान्तः । गङ्गादासीयदोहालक्षणन्तु—मात्रात्रयोदशकं यदि पूर्व्वं लघुकविरामि । पश्चादेकादशकन्तु, दोहड़िका द्विगुणेन ॥ इति । अत्र प्रथमपादे प्रथमं षट्कलगणो नास्ति पञ्चकलः सप्तकलो वा गणो दृश्यत इत्येव भ्रमबीजम्, छन्दःशास्त्रविरोधात् ॥ ३ ॥

यदि मध्यगुरुगणा यत्र, विषमाङ्घ्रौर्निपतन्ति ।
सा चाण्डालगृहगतेव, दोहा दुष्टा तर्हि ॥ ४ ॥

दोहागतं दोषमाह यदीति । यत्र विषमयोश्चरणयोः यदि मध्यगुरुगणा निपतन्ति तर्हि सा दोहा चाण्डालगृहगतेव दुष्टा भवति । यथा—मात्रात्रयो-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



दशकं यदीति। अत्र प्रथमपादस्य विषमत्वात्तु्योद इति मध्यगुरुगणप्रवेशेन दोहा दुष्टा ॥ ४ ॥

षड्विंशत्या वर्णैस्तु, युक्तो भृङ्गो यत्र।
द्वाविंशत्यह्रस्वा हि, चत्वारो ह्रस्वाश्च ॥ ५ ॥

षड्विशत्या वर्णैरेव युक्तो भृङ्गो भ्रमरो नाम दोहा भवति। यत्र द्वाविशतिर्वर्णा अह्रस्वा गुरव एव, चत्वारो वर्णाश्च [ ह्रस्वा ] भवन्ति। यथा—
यस्यार्द्धाङ्गे पर्व्वतपुत्रीके गङ्गास्ति। यो देवानां वल्लभो, वन्दे पादं तस्य ॥ ५ ॥

त्रुट्यत्येकैको दीर्घ एधेते ह्रस्वौ तु।
द्वौ तर्ह्येते विन्दन्ति नाम भ्रामरकादि ॥ ६ ॥

यदि एकैको दीर्घस्त्रुट्यति द्वौ द्वौ ह्रस्वौ तु एधेते वर्द्धेते तर्हि एते वक्ष्यमाणा भ्रामरादि नाम विन्दन्ति लभन्ते। तद्यथा ॥ ६ ॥

भ्रमरभ्रामरशरभाः श्येनो मण्डूकमर्कटौ करभः।
सनरमरालमदकलौ पयोधरचलौ च वानरत्रिकलौ ॥ ७ ॥
एवं कच्छपमत्स्यौ शार्दूलस्त्वहिवरस्तथा व्याघ्रः।
द्वावथ विड़ालशुनकावुन्दुरुसर्पप्रमाणकौ चेति ॥ ८ ॥

स्पष्टम् ॥ ७-८ ॥

द्वादशभिः स्यान्मुखजा, द्वाविंशत्या तु बाहुजा लघुभिः।
द्वात्रिंशतोरुजाता,-ष्टाचत्वारिंशताङ्घ्रिजा दोहा ॥ ९ ॥

अथ लघुसंख्याभेदेन द्विपथदोहाया वर्णभेदमाह—द्वादशभिरित्यादि। द्वादशभिर्लघुभिरुपलक्षिता दोहा मुखजा विप्रा भवेत्। द्वाविशत्या लघुभिर्बाहुजा क्षत्रिया। द्वात्रिशता लघुभिरूरुजा वैश्या। अष्टाचत्वारिशता लघुभिरङ्घ्रिजा शूद्रा ॥ ९ ॥

यदि लघुदशकमुदयति, पुनरपि लघुरनुपतति।
इति च सुनियममनुसर, ननु षड़पि पदमुपहर।
तदिह ललितमिति भवति, कवियश इह चिरमवति ॥ १० ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ ललितं लक्षयति यदीति। ननु भोः यदि लघूनामक्षराणां दशकं दश लघूनीत्यर्थ उदयति पुनरपि एको लघुरनुपतति उपतिष्ठते, इति च सुनियमम् अनुसर षड़पि पदं चरणम् उपहर, तत् ललितं नाम छन्दो भवति इह जगति कवीनां यशश्चिरं रक्षति। ललितस्य नामान्तरं रसिकेति च प्राकृतपैङ्गले विद्यते॥ यथा—हरिपदमभिलषसि यदि, परिहर गृहमपि सपदि, भव सकरुण उरुजगति, मिल लघु यतिजनसमिति, चल च न खलु खलसमिति, भृशमिति गुरुरुपदिशति॥ १०॥

प्रसरति यदि गुरु युवति ह्रसति लघुयुगमयवति,
तदिह ललितमेव सति शृणु कतिविधमिति भवति,
यदनुमननविधृतधृति जगति सुकविकुलमनिति॥ ११॥

हे युवति हे अयवति शुभदैवसम्पन्ने हे सति यदि एकं गुरु प्रसरति वृद्धिं गच्छति लघुयुगं लघुद्वयं ह्रसति त्रुट्यति इह तत् ललितमेव छन्दः यतिविधं भवति शृणु ततिविधमिति शेषः। यस्य अनुमननेन आलोचनेन विधृता विशेषेण धृता धृतिः सन्तोषो येन तत् सुकविकुलं सुकविसमूहो जगति अनिति जीवति॥११॥

ललितं हंसी रेखा, तालङ्की कम्पिनी च गम्भीरा।
काली कलरुद्राणी,-त्यष्टौ नामानि ललितस्य॥ १२॥

स्पष्टम्। एषामुदाहरणानि विस्तरभिया नोक्तानि स्वयमेवाकलनीयानि॥१२॥

सगुरुलघुकला यत्र, चतुर्विंशतिरनुचरणं,
तत्राद्यैकादशसु, भवति यदि विरामकरणम्।
षण्णवतिकलाशालि, तदा तन्मानसहरणं,
छन्दो रोला नाम, भवति कविवदनाभरणम्॥ १३॥

अथ रोलां लक्षयति। यत्र अनुचरणं प्रतिपादं गुरुभिर्लघुभिश्च सह वर्त्तमानाः चतुर्विंशतिकलाश्चतुर्विंशतिमात्रा भवन्ति तत्र कलासु विषये आद्यासु एकादशकलासु यदि विरामकरणं यतिर्भवति तदा षण्णवतिकलाशालि मानसहरणं मनोहारि कवीनां वदनस्य आभरणमलङ्काररूपं रोला नाम छन्दो भवति।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यथा—आखुशिखिवाहनसुत, शिशुशशिकृतचूड़ामणे, परशुत्रिशूलडमरु,-मृगवरवरा-भयपाणे। त्रिपुरस्मरान्धकहर, विश्वप्रलयकरशक्ते, गङ्गाधर जटाधर, कृपां कुरु मय्यनुरक्ते ॥ १३ ॥

वर्णास्त्रयोदशैव स्युश्चेत्प्रत्यङ्घ्यूस्याम्,
तेष्वेकादश दीर्घा ह्रस्वौ द्वावेव स्तः।
मात्राः षण्णवतिस्त्रुट्यत्येकैकं दीर्घं,
द्वे द्वे ह्रस्वे वर्द्धेते तर्ह्याख्याः स्युरिमाः ॥१४॥

अस्यां रोलायां चेद्यदि वर्णास्त्रयोदशैव स्युः। तेषु मध्ये एकादश वर्णा दीर्घा भवन्ति ह्रस्वौ वर्णौ द्वावेव स्तः भवतः। मात्राः षण्णवतिसंख्यकाः। यर्हि एकैकं दीर्घं त्रुट्यति ह्रसति द्वे द्वे ह्रस्वे वर्द्धेते तर्हि इमा आख्या नामानि स्युः ॥ १४ ॥

अथवा त्रयोदशगुरुसप्ततिलघुविरचितवपुषि,
चतुरधिकविंशतिकलचरण इह यदैकैकगुरु।
त्रुट्यति पुनरेधते लघुयुगलमथ कुतुकिनि श्रृणु,
भवति यद्यदपि नाम तत्तदनहमहमिके सति ॥ १५ ॥

रोलायास्त्रयोदशभेदानयनप्रकारस्य पक्षान्तरमाह—अथवेति। हे कुतुकिनि सकौतुके हे अनहमहमिके अहङ्कारदोषरहिते अथवा यद्वा त्रयोदशगुरुभिः सप्ततिलघुभिश्च विरचितं निर्मितं वपुर्विग्रहो यस्यां तथाभूते चतुर्विंशतिमात्रकपादे इह रोलाछन्दसि यदा एकैकगुरु त्रुट्यति पुनर्लघुद्वयमेधेते च तदा यद्यन्नाम भवति तत्तत् श्रृणु आकर्णय ॥ १५ ॥

कुन्दः करतलमेघौ तालाङ्कः कालरुद्रकोकिलकौ।
कमलेन्दुशम्भुचामरगणेश्वरा अथ सहस्राक्षः ॥ १६ ॥

शेषश्चेति कवीनां सन्ततसन्तोषकारिणः कान्ते।
कुन्दाद्याः शेषान्ता रोलाभेदास्त्रयोदशधा ॥ १७ ॥

सर्व्वं स्पष्टम् ॥ एषामनुक्तोदाहरणान्यूह्यानि ॥ १६-१७ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यत्र तु वर्णाः सप्तदश दशशतदलमुखे,
प्रथमतृतीययोः पादयोः समुदितपरसुखे ।
इतरयोरष्टादश सयमकयुगचरणं,
तज्जगति गन्धानमिति वदति यशसः शरणम् ॥ १८ ॥

हे दशशतदलमुखे पद्मवदने समुदितं परसुखमात्यन्तिकसुखं ब्रह्मानन्द इति यावत् यस्या हे तथाभूते यत्र तु प्रथमतृतीययोः पादयोः सप्तदश वर्णा इतरयोः पादयोरष्टादश वर्णा भवन्ति जगति भुवने यमकयुगेन सह वर्त्तमानानि चरणानि यस्य तत् यशसः शरणं कीर्त्तिगृहं गन्धानमिति गन्धाननाम छन्दः भवति। यथा—वीक्ष्य सरस्याम्फुल्लकमलसरसमधुकरान्, स्निग्धरसालाङ्कुररदनकुतुकिपिकनिकरान् । सरसवसन्तस्समुदित इति पथिकजनाः, स्वं भवनमभीयुर्मदनवाणदलदपघनाः ॥ गर्जति जलधरः परिनृत्यति शिखिनिवहः, नीपवनीमवधूय वहति दक्षिणगन्धवहः । दूरे दयितः सखि वर्त्तते किमिह हि करवै, प्रज्वाल्य दहनं झटिति शलभमनुकरवै ॥ १८ ॥

द्विजराजजिदास्ये, यत्र सुहास्ये, ध्यानेक्षितहरिलास्ये,
यदि सप्तचतुष्कल,-गणपर एकल,-गुरुरुदयति सदुपास्ये ।
दशवसुमासकला,-स्ववसितिरमला, भवति तदामितभासा,
ननु कविकुलमणिना, पिङ्गलमुनिना,-त्र चतुष्पद्युदिता सा ॥१६॥

द्विजराजं चन्द्रं जयति परिभावयतीति क्विप् तथाभूतमास्यं मुखं यस्या हे तथाभूते, सु शोभनं हास्यं यस्या हे तथाभूते, ध्याने ईक्षितमवलोकितं हरेः कृष्णस्य लास्यं नर्त्तनं यया हे तथाभूते, सद् ब्रह्म उपास्यं यस्या हे तथाभूते, यत्र सप्तसंख्याकचतुष्कलगणात् पर एको गुरुरुदयति यदि दशसु अष्टसु द्वादशसु कलासु मात्रासु अवसानं यतिर्भवति तदा अमितभासा अपरिमितमहसा कविकुलमणिना कविकुलश्रेष्ठेन पिङ्गलमुनिना अत्र जगति सा चतुष्पदी नाम छन्द उदिता कथिता । यथा—चेतः स्मर महितं, कमलासहितं दारितदारुणकंसं, हतधेनुकदानव,-मिच्छामानव,-मृषिजनमानसहंसम् । यमुनावरतीरे, तरलसमीरे, कारितगोपीरासं ; भववाधाहरणं, राधारमणं, कुन्दकुसुमसमहासम् ॥ १६ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



त्रिग्रामसुमूर्च्छित,पञ्चितपञ्चम,रागाञ्चितसुविपञ्ची,-
समकण्ठरवे शिव,-डमरुसुमध्ये, धृतवति मौक्तिककाञ्चीम्,
जपपूजनमुखसत,-कार्य्यव्यापृत,-धीकर्म्मेन्द्रियवृत्ते,
श्रीहरिपरिचर्य्या,-क्षालितकलुषे, महिलाप्रमहितवृत्ते ;
स्युर्यत्र गणा ननु, सुविशुद्धमते, सप्तचतुष्कलसंज्ञाः,
पुनरपि चेदेको, गुरुरन्ते स्या,-त्त्रिंशच्चरणे मात्राः,
दशवसुमासकला,-स्ववसानं यदि, कुरुते ह्यमुना विधिना,
अयि विरचय्य चतु,-श्चरणानि रमणि, रमणीयानि मिलित्वा।
खलु विंशत्युत्तर,-शतमात्रात्मक,-मेकं विरचय चरणम्,
अथ सति नियममिमं, गजवरगामिनि, हितभाषिणि सरलतरम्,
पुनरनुसृत्य सुदति, चरणत्रितयं, विरचय यत्नेन तथा,
साशीतिचतुश्शत,-मात्रापूर्त्तिः, प्रभवति सम्भूय यथा,
चेदोद्दशलक्षण,-मीक्षेत तदा, भवति चतुष्पद्यन्या,
निजयशसा विशदित,-निखिलहरित्तट,-पण्डितमण्डलदयिता,
अहरहरनलसता,-द्रुतनिष्पादित,-गृहहरिमन्दिरकार्य्या,
सुखमासीनैना,-मामन सुरहसि, वरिवसितनिजाचार्य्या ॥ २० ॥

अथ चतुष्पदीं लक्षयति त्रिग्रामेति। त्रिग्रामेषु नन्द्यावर्त्तजीमूतस्वभवेषु सुष्ठु मूर्च्छितः पञ्चितः प्रपञ्चितः यः पञ्चमो रागस्तेन अञ्चिता या सुविपञ्ची सुवीणा तस्याः समा गीः वाणी यस्या हे तथाभूते शिवस्य डमरुरिव सुशोभनो मध्यो यस्या हे तथाभूते हे मौक्तिककाञ्चीं मुक्तामेखलां धृतवति जपपूजनमुखेषु जपपूजाप्रभृतिषु सत्कार्य्येषु व्यापृता धीः सर्व्वेन्द्रियवृत्तिश्च यस्या हे तथाभूते, श्रीहरेः परिचर्य्यया क्षालितं धौतं कलुषं पापं यया हे तथाभूते महिलाभिः स्त्रीभिः प्रमहितं पूजितं वृत्तं चरित्रं यस्या हे तथाभूते सुविशुद्धा मतिर्यस्या हे तथाभूते हे रमणि सुन्दरि हे सति हे गजवरगामिनि हे हितभाषिणि हे सुदति यत्र चतुष्कलसंज्ञाश्चतुर्मात्रिकाः सप्तगणा भवेयुः पुनरपि यद्यन्ते एको गुरुवर्णो भवेत् चरणे पादे त्रिंशत् मात्राः



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



स्युः, दशसु वसुषु मासेषु दशसु अष्टसु द्वादशसु च कलासु यदि किल विरतिः क्रियते हि अमुना विधिना नियमेन मनोहराणि चतुश्चरणानि विरचय्य रचयित्वा मिलित्वा सम्भूय विंशत्युत्तरशतमात्रात्मकमेकं चरणं कल्पय। अथ अनन्तरं पुनः इमं नियममनुसृत्य सरलतरं चरणत्रितयं त्रीणि चरणानि यत्नेन न त्ववहेलया तथा तेन प्रकारेग विरचय, यथा अशीत्यासह वर्त्तमानानां चतुश्शतमात्राणां पूर्त्तिः पूरणं भवति। यत्र यस्यामीदृशं लक्षणमीक्षेत यदि तदा सा चतुष्पदिका भवति। सा कथम्भूता तदाह—यशसा कीर्त्त्या विशदितम् प्रकाशितं निखिल-हरित्तटं समस्तदिक्तटं यैस्तेषां पण्डितमण्डलानां दयिता प्रिया। अहरहः प्रतिदिनम् अनलसतया आलस्यविरहेण हेतुना द्रुतसविलम्बं निष्पादितानि निर्वर्तितानि गृहस्य हरिमन्दिरस्य च कार्य्याणि सेकलेपपुष्पचन्दननैवेद्यपाककरणा-दीनि यया सा तथाभूता सुरहसि विविक्ते स्थाने सुखमासीना सुखोपविष्टा वरिवसितः शुश्रूषितो निजः स्वीय आचार्य्यः यया सा तथाभूता सती एनां चतुष्पदीम् छन्द आमन अभ्यस्य॥ यथा—व्रजजनकुलपालं, लालितबालं, वादितमृदुरववंशं, रोचनयुतभालं, धृतवनमालं, शोभिततरलवतंसम्; दितिज-व्रजकालं, वादिततालं, कृतसुरमुनिगणशंसं; रुचिकलिततमालं, जितधनजालं, भासितयादववंशम्; सरसीरुहनयनं, जगतासयनं, कण्ठतलस्थितहारम्; धृतगोप-सुवेशं, कुञ्चितकेशं, स्मितजितनवघनसारम्; जितनयनचकोरं, नन्दकिशोरं, गोपीमानसचोरं; कृतराधाधारं, सज्जनसारं, दितिसुतनाशकठोरं। नवकलित-कदम्बं, जगदवलम्बं, सेवितयमुनातीरं; वन्दितसुरवृन्दं, जगदानन्दं, गोपीजन-हृतचीरं; धृतधरणीवलयं, करुणानिलयं, दन्तविनिर्जितहीरम्; भवसागरपारं, भुवनागारं, नन्दसुतं यदुवीरम्; अलकाकुलभालं, कुञ्चितबालं, लालिततर्ण-कमालं; गोकुलजनपालं, नवघनकालं, कलितबलयवनमालं, रुनखयुतमालं, मातुलकालं, स्तनपायिनमनुकालं; धृतकिङ्किणिजालं, भज गोपालं, प्रशमितभव-भयजालम्॥ २०॥

स्याद्दशसु चाष्टसु च, भोस्त्रयोदशसु, चेत्कलासु यतिरर्द्धे इह।
द्वा[त्रिंशत्क]लकदल,-युगलसमुज्ज्वल,-वपुषं घत्तां तर्हि [वद]॥२१॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



घत्तां लक्षयति स्यादिति। भो इह अर्द्धे दशसु अष्टसु त्रयोदशसु च कलासु यदि विरतिर्भवति तर्हि द्वा[त्रिंशत्] कला मात्रा [ यत्र तादृशयोर्दलयोर्युगलं ] तेन समुज्ज्वलं वपुः सर्व्वावयवपूर्णशरीरं यस्यास्तथाभूतां घत्तां नाम द्विपदीं छन्दो वद। यथा—रजताद्रिकल्पतनु,-रनघकुसुमधनु,-रविजिततरजनुराशु चिनु। शम्मे ननु शङ्कर, दनुजभयङ्कर, करगतनृकरोटिपरिकर॥ २१॥

सप्तचतुष्कलगण,-मथ कुरु वित[रित],-मुभयोरवसाने त्रिलघु।
दलयोस्तु [द्वियुक्त] षष्टिकलात्मक,-घत्तामामन सुतनु लघु॥२२॥

घत्ताया लक्षणान्तरमाह सप्तेति। आदौ सप्त चतुष्कलगणान् वितर अथ दलयोरुभयोरवसानेऽन्ते त्रिलघु त्रीणि लघूनि वितर देहि। हे सुतनु [द्वि]षष्टिकलात्मिकां घत्तां नाम छन्दः लघु तूर्णम् आमन अभ्यस्य। यथा—भवबाधाहरणं राधारमणं नन्दकिशोरं स्मर हृदय। यमुनायास्तीरे तरलसमीरे कृतवरवासं त्वमनुभव॥ २२॥

घत्तानन्दमवेहि, तमनुपदे हि, चैकादश सप्त च सुदति।
मात्राः स्युस्त्रिदशात, यतिरपि यत्र, तत्र द्विपदं वरयुवति॥ २३॥

घत्तानन्दं लक्षयति। हे सुदति हे वरयुवति द्विपदं द्विपादविशिष्टं तं घत्तानन्दम् घत्तानन्दनाम छन्दोऽवेहि जानीहि यत्र घत्तानन्दे अनुपदे पादे पादे हि प्रथमम् एकादश, ततः सप्त, पुनस्त्रयोदश मिलित्वैकत्रिंशन्मात्राः स्युः तत्र मात्रासु एकादशसप्तत्रयोदशसु यदि यतिरपि भवति। यथा—दितिसुत-विरहगञ्जन, यममुखभञ्जन,-मनुगतजनतापहरणम्। निखिलमानसरञ्जन,-मतिनिरञ्जन,-मस्तु किमपि महः शरणम्॥ २३॥

प्राक् षट्कलगणमत्र, वितर कलत्र, तन्वि त्रिचतुष्कलकमपि।
एकं पञ्चकलञ्च, गणमथमुञ्च, शेषे द्विचतुष्कलकमपि॥ २४॥

घत्तानन्दस्य गणान्निरूपयति प्रागिति। हे तन्वि कलत्र भार्य्ये! अत्र घत्तानन्दे प्राक् आदौ षट्कलं षण्मात्राकं गणं वितर देहि। ततस्त्रिचतुष्कलक-मपि त्रींश्चतुष्कलान् गणान् वितर। तदनन्तरमेकं पञ्चकलञ्च गणं वितर शेषेऽन्ते



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



द्विचतुष्कलकं द्वौ चतुष्कलकगणौ अपि मुञ्च देहि। यथा—हे उज्झितगुणसङ्ग, कृतमखभङ्ग, भस्मीकृतमनसिजकरण। दक्षध्वंसनदक्ष, शमितविपक्ष, तुष्टो भव मे जनशरण ॥ २४ ॥

स्यादुल्लालः स यदर्द्धे तु विंशतिरष्टौ च कला हि।
त्रिचतुष्कलत्रिकलषट्कलाश्चतुष्कलास्त्रिकलाश्चापि ॥ २५ ॥

अथ उल्लालं लक्षयति—स्यादिति। यस्या अर्द्धे तु प्रथमं त्रयश्चतुष्कलगणाः ततस्त्रिकलगण एकः तदनन्तरं षट्कलगण एकः ततश्चतुष्कलगण एकः ततश्च त्रिकलगण एकः सम्भूय विंशतिरष्टौ च अष्टाविंशतिर्मात्रा भवन्ति स उल्लालो नाम छन्दः स्यात्। अयं द्विपदी। यथा—तमसाक्रान्तः सहसाचेतनः पतति मुखकरपदानि। आस्फालयति तथोल्लालवदनोऽपस्मारामयभाग् हि ॥२५॥

प्राग्द्विकलगणं न्यस्य, तदनु पञ्च चतुष्कलगण,-
मसितोत्पलनेत्रि चिनु, लघुयुगलमन्ते तु विचिनु।
यतिरेकादशसु यदि, कलासु पुनस्त्रयोदशसु,
योजय पुनरुल्लालदलयुगलमपि पञ्चदशसु।
मात्रासु संयमवति कुरु यति,-मथ त्रयोदशसु च यत्र,
पिङ्गलमुनिर्भणति तत्तर्हि, शशधरमुखि षट्पदमत्र ॥ २६ ॥

षट्पदं लक्षयति—प्रागिति। हे असितोत्पलनेत्रि नीलोत्पललोचने हे संयमवति कृतेन्द्रियनिग्रहे हे शशधरमुखि चन्द्रमुखि प्राक् प्रथमं द्विकलगणं द्विमात्रकगणं न्यस्य निवेश्य तदनु ततः पश्चात्पञ्चानां चतुष्कलगणानां समाहारः पञ्चचतुष्कलगणं चिनु समाहर, अन्ते तु पादान्ते लघुद्वयं विचिनु प्रक्षिप। पुनरेकादशसु त्रयोदशसु च कलासु मात्रासु यदि यतिर्विरतिः पुनः उल्लालस्य च्छन्दसो दलयुगलं पूर्व्वापरार्द्धमपि योजय घटय, अथ यदि यत्र पञ्चदशसु त्रयोदशसु च मात्रासु यतिं कुरु तर्हि अत्र जगति पिङ्गलमुनिस्तत् षट्पदं नाम च्छन्दो भणति ब्रूते। यथा—हे अज जगतां बीज, मघवविपक्षगणमेजय, वनमाली श्रीवत्सकौस्तुभशोभिवक्षोगल। असिकम्बुगदाम्बुरुह,-चक्रकर वक्रशिरोरुह,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सितकमलदललोचन, भूरिभूरिदुरितमोचन ॥ कमलामुखकमलगलत्सान्द्र,-
मधुचोषणषट्पदचन्द्र । सुरनरवन्दितपदारविन्द, मामुद्धर परगोविन्द ॥२६॥

षट्कलमादौ वितर गणमथ चतुश्चतुष्कलक,-
मन्ते द्विलघुञ्च कुरु चतुष्पदमित्थं सञ्चिनु ।
मात्रास्वेकादशसु यतिस्त्रयोदशास्वपि यदि,
कुरु पुनरुल्लालस्य पादयुगाधिवेशनमपि ।
पञ्चदशसु त्रयोदशसु कुरु मात्रासु यतिं झषनेत्रि,
वद वस्तुषट्पदन्तर्त्तार्हि शतद्विपञ्चाशन्मात्रि ॥ २७ ॥

वस्तुनामकं षट्पदं लक्षयति—षट्कलमिति । हे झषनेत्रि मीनसदृशलोचने आदौ प्रथममेकं षट्कलं गणं वितर संस्थापय अथ चतुरश्चतुष्कलान् गणान् वितर देहि अन्ते द्विलघुं द्विकलं गणञ्च कुरु इत्थमनेन प्रकारेण चतुष्पदं चरणचतुष्कं सञ्चिनु संगृहाण एकादशसु त्रयोदशसु अपि मात्रासु यदि यतिर्भवति पुनः भूय उल्लालस्य पादयुगस्य चरणद्वयस्याधिवेशनं संस्थापनमपि कुरु । उल्लाल-पादद्वये पञ्चदशसु त्रयोदशसु च मात्रासु यतिं कुरु तर्हि तदा शतद्विपञ्चाशन्मा-त्रात्मकं तत् वस्तु-नामकं षट्पदं छन्दः वद कथय । यथा—पश्य शरदि शशिबिम्ब,-मतीव विकाशते नभसि, सितनीलोत्पलधवल,-लोहितकमलमखिल-सरसि । अनुवनमसमच्छदन,-कुसुमकं द्विरदमदसुरभि, शिवमल्लीस्थलकमल,-नीलिकार्त्तगलं स्थलमभि । मकरध्वजराजशासनहर,-सुममधुलोलुपमधुपतति,-जनरञ्जनगुञ्जनमनुकुञ्ज,-मञ्जो हरति न कं जगति ॥ द्विरदमदेन समानः सुरभिर्य्यस्य । अञ्जो झटिति । सुमं कुसुमं प्रसूनं कुसुमं सुममित्यमरकोषः ॥२७॥

अयि सति विमलकुलजनु,-रेकादशभिः सुतनु ।
कलाभिः षट्चरणं जनगणहृदयहरणम् ।
धीमति यदा रचयति, रसिकेति तदा भवति ॥ २८ ॥

रसिकां षट्पदीं लक्षयति—अयीति । अयि भोः सति विमले कुले जनुर्जन्म यस्या हे तथाभूते हे सुतनु हे धीमति यदा एकादशभिः कलाभिर्जनग-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



णानां हृदयहरणं चित्ताकर्षकं षट्चरणं रचयति तदेह जगति रसिकेति रसिका-नाम षट्पदी छन्दो भवति। यथा—जय जय हर वृषगमन, तरणिदहन विधुनयन। नयनदहनजितमदन, निजशरकृतपुरकदन। मम हृदयगतमपनय,-मविनयमधिकमपनय॥ पादान्ते यतिः॥ २८॥

यस्यादौ षट्कलमनुचरणं गणमन्तेऽपि च,
मध्ये त्रींस्तु चतुष्कलकगणान् पुनरारोपय।
तत्र तु मध्यगुरुं तृतीयमथ वा चतुर्लघुक,-
मथ तर्ह्येतत्काव्यरसिकसेव्यं काव्यं वद॥ २९॥

अथ समात्रकं काव्यनामच्छन्दसो लक्षणमाह—आदाविति। यस्यानुचरणं पादे पादे आदावन्तेऽपि च षट्कलं गणमारोपय विधत्स्व मध्ये त्रीनेव चतुष्कलकगणानारोपय तत्रैव अथ यदि तृतीयं गणं मध्यगुरुं चतुर्लघुकं वा आरोपय तर्हि काव्यरसिकैः सेवनीयमेतत् काव्यं नाम च्छन्दो वद। काव्यनाम्नि च्छन्दसि कर्त्तव्ये तृतीयो मध्यगुरुर्भवति, लघूल्लालेन तुल्यं कर्त्तव्यं चेत् तदा नैव नियमः। तत्र त्वेकादशसु विरतिरित्यभिप्रायः। यथा—हे सर्व्वाम्नायमय कमलिनीकृतकेलीचय सारथ्येऽग्रनियोजितगरुडाग्रज तेजोमय। काव्यभपार्श्व-गबालखिल्यमुनिगणकृतवन्दन, दिश शम्मे सास्वरमयसप्ताश्वस्यन्दन॥ यथा वा—मुकुटविराजितचन्द्र, चन्द्रकलोपमतिलकवर, तिलकदहन वरनयन, नयनजित-मदनमनोहर। अमरनिकरकृतसनोमनन निरवधि करुणाकर, करधृतमनुजकपाल विबुधजनतिमिरविभाकर॥ २९॥

प्रतिपदमुदयति यदि हि चतुरधिकदशयुगमितलघु,
वदति तमसुरगुरुसदृशकविकुलमिह हरिहय इति।
प्रसरति सति यदि गुरुरनुपतति च लघुकयुगलमथ,
तत ऋतपरकरिभिरिह स इदमिदमभिध उदित उत॥ ३०॥

अथ लघुद्वयह्रासेनैकगुरुवृद्ध्या काव्यस्य पञ्चचत्वारिंशद्भेदान्दर्शयिष्यन् सर्व्व-लघुकं हरिहयनामकं छन्दो लक्षयति प्रतिपदमिति। यदि हि प्रतिपदं पादे पादे चतुर्भिरधिकानां दशानां युगेन द्वयेन चतुर्विंशत्या मितं परिमितं लघु



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उदयति इह जगति शुक्रसदृशकविकुलं तं हरिहयः [इति] अर्थात् शक्र इति शक्र नामकं छन्द इति वदति। यथा—शिरसि विधृतजट, दलितदितिजभट विलसदजिनपट, निखिलभुवनमय सदयहृदयशय धृतफणिपवलय। अमितविभव-भव करलसदजगव रुचिजितगिरिधव निटिललसदनल गललसितगरल मम शरणममल॥ हे सति इह हरिहये शक्रे, शक्र इति प्रवेशयितुमशक्यत्वात्तथा कृतम्, गुरुरेकः प्रसरति वर्द्धते लघुकयुगलं लघुद्वयं पतति हसति च त[तः] क्षतपरैः समीचीनैः कविभिः स हरिहय इदमिदमभिध इयम् इयम् अभिधा आख्या यस्य तथाविधः सङ्कथितः॥ ३०॥

शक्रः शम्भुः शूरो गण्डः स्कन्धोऽथ विजयदर्पौ च।
तालाङ्कः समरसिंहाः शेषः कान्ते तथोत्तेजाः॥
प्रतिपक्षः परिधर्म्मौ मरालकमृगेन्द्रदण्डमर्कटकाः।
मदनमहाराष्ट्रे अथ वसन्तकण्ठौ मयूरश्च॥
बन्धो भ्रमरो भिन्नः सुमहाराष्ट्रं तथा च बलभद्रः।
राजा वलितो रामो मन्थानोऽथो बली मोहः॥
ससहस्राक्षो बालो दृप्तः शरभश्च तन्वि दम्भश्च।
अह उद्दम्भो वलिताङ्कतुरगहरिणान्धभृङ्गाश्च॥
वास्तूकापरनाम्नः काव्यस्यैव प्रदर्शिता भेदाः।
इति पञ्चाधिकचत्त्वारिंशत् शक्रादिभृङ्गान्ताः॥ ३१॥

वास्तूकाख्यस्य काव्यच्छन्दस इति एवम्प्रकाराः शक्रादिभृङ्गावसानाः पञ्चाधिकचत्वारिंशद्भेदाः प्रदर्शिताः। स्पष्टमन्यत्॥ ३१॥

व्याकरणदुष्टचरणः पङ्गुः स्याद्धीनमात्रया खञ्जः।
वातूलोऽधिकमात्रो झलवर्णविवर्जितो बधिरः॥
अन्धोऽलङ्कृतरहितश्छन्दस उत्थापनीविचारे तु।
त्रिकलैः पञ्चकलैर्वा गणैरुपेतो भवेन्मूकः॥
स्याद्दुर्बलोऽर्थरहितो हठाक्षरैः केकरः शुभाकारे।
सर्व्वैर्गुणैर्विरहितः काणः स्यात्कर्णजाहाक्षि॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



इति नव षट्पददोषाश्छन्दोविद्भिः प्रकीर्त्तिताः सद्भिः ।
अयि गद्यपद्यरचनाविचक्षणे सक्षणे प्राग्भिः ॥ ३२ ॥

षट्पदकाव्यस्य दोषानुद्घाटयति व्याकरणेति । प्राकृतव्याकरणेन दुष्टाक्षरणाः पादा यस्य स पङ्गुः । हीनमात्रया खञ्जः । अधिका मात्रा यस्य स वातूलः । ऋकारलकारवर्णरहितो बधिरः । उपमारूपकाद्यलङ्काररहितोऽन्धः । छन्दस उत्थापनिकाविचारे तुः यः त्रिकलैः पञ्चकलैर्वा गुणैरुपेतो युक्तो भवति स मूकः । अर्थरहितोऽर्थशून्यः दुर्बलः स्यात् । हठाकृष्टकठोराक्षरैः केकरः । हे शुभाकारे हे कर्णजाहाक्षि आकर्णायतनेत्रे श्लेषादिसद्गुणै रहितः काणः स्यात् हे गद्यपद्यरचनाविचक्षणे हे सक्षणे सोत्सवे छन्दोविद्भिः आद्यैः सद्भिः इत्येवंविधाः नव षट्पददोषाः प्रकीर्त्तिताः प्रोक्ताः ॥ ३२ ॥

द्वात्रिंशल्लघुयुक्तं विप्रं तत्षट्पदं जात्या ।
द्वाचत्वारिंशल्लघुयुक्तं क्षत्त्रियमहो अनघे ॥
अष्टाचत्वारिंशल्लघुभिर्युक्तं पुनर्वैश्यम् ।
शेषैर्लघुभिर्युक्तं शूद्रं कान्ते विजानीयाः ॥ ३३ ॥

षट्पदस्य लघुसंख्याभेदेन जातिमुपदिशति द्वात्रिंशदिति । हे अनघे निष्पापे द्वात्रिंशता लघुभिर्युक्तमिति विग्रहः । जात्येति सर्व्वत्र सम्बध्यते । 'प्रकृत्यादिभ्य उपसंख्यान'[ वां पां २।३।१८ ]मिति तृतीया ॥ स्पष्टमन्यत् ॥ ३३ ॥

चातुश्चत्वारिंशद्दीर्घाः काव्यस्या,-
थोल्लालस्य स्युः षड्विंशत्यह्रस्वाः ।
सर्व्वे सम्भूय स्युः सप्तत्यह्रस्वा,-
स्तेष्वेकैको दीर्घस्त्रुट्यत्येधेते,
द्वौ द्वौ ह्रस्वौ चेत्थं यावत् सर्वह्रस्वाः स्युः-
भेदा एकप्राक्सप्तत्या मित्या बोद्धव्याः ॥ ३४ ॥

एकसप्ततिभेदानयनप्रकारमुपदिशति चातुश्चत्वारिंशदिति । चतुश्चत्वारिंशदेव चातुश्चत्वारिंशत् स्वार्थेऽण् । काव्यस्य चतुश्चत्वारिंशद्दीर्घा अथो उल्लालस्य



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



षड्विंशतिर्दीर्घाः। सर्व्वे सम्भूय सप्ततिदीर्घा भवेयुः। तेषु दीर्घेषु चेदेकैको दीर्घस्त्रुट्यति ह्रसति, द्वौ द्वौ ह्रस्वौ चेद्वर्द्धेते वर्द्धेते। इत्थमेवम्प्रकारेण यावत् सर्व्वह्रस्वाः स्युस्तर्हि एकसप्ततिपरिमाणेन भेदा बोद्धव्याः ज्ञातव्याः। यथा—यो मल्लं चाणूरं हत्वातिक्रूरं कृत्वा वीरोत्तंसं वीतासुं कंसं। गत्वा पित्रोः पादान् लौहेन श्लिष्टान्, दृष्ट्वा क्षिप्रं कृत्वा तस्माद्विश्लिष्टान्। नत्वात्याक्षीच्छ्रान्ति लेभे चोच्चैर्हृच्छान्ति, तं श्रीराधाकान्तं वन्दे शीर्षेणाश्रान्तम्॥ ३४॥

द्वाभ्यां युक्ताशीतिर्वर्णा यस्मिंस्तत्र तु,
दीर्घा जायन्ते चेत्सप्ततिसंख्याः कान्ते,
ह्रस्वाः संविद्यन्ते वीणावाणि द्वादश,
स [तु] स्यादजयो यद्यत्रैवैकैको दीर्घः,
त्रुट्यति वर्द्धेते च द्वौ द्वौ ह्रस्वौ सर्व्वह्रस्वाः,
स्युर्यावत्तर्ह्येकाधिकसप्तत्याख्याभिः ख्याताः॥ ३५॥

हे वीणावाणि कान्ते यस्मिन् द्व्यशीतिवर्णास्तेषु तु मध्ये चेत्सप्ततिसंख्या दीर्घा भवन्ति द्वादश ह्रस्वाः संविद्यन्ते सोऽजयो नाम छन्दः स्यात्। अत्राजये एव एकैको दीर्घस्त्रुट्यति द्वौ द्वौ ह्रस्वौ वर्द्धेते च यावत्सर्व्वह्रस्वाः सर्व्वलघवो भवेयुः तर्हि एकाधिकसप्तत्या आख्याभिर्नामभिः ख्याता भवेयुः। लक्षणमेवोदाहरणम्॥ ३५॥

अजयो विजयोऽथ बलिः कर्णो वीरस्तथा च वेतालः।
सबृहन्नलमर्कटको हरिहरश्चाप्यथो ब्रह्मा॥
इन्दुश्चन्दनसुशुभङ्करश्वसिंहास्तथैव शार्दूलः।
कूर्म्मश्च कोकिलखरौ कुञ्जरमदनौ च मत्स्यतालाङ्कौ॥
शेषः सारङ्गपयोधरकुन्दाः कमलवारणौ शरभः।
अथ जङ्गमद्युतीष्टौ दाता च शरसुशरौ समरः॥
सारसशारदमेरुकमदकरमदसिद्धिबुद्धिकरतलकाः।
कमलाकरधवलसनोध्रुवाश्च कनकश्च कृष्णश्च॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

रञ्जनमेघकरौ च ग्रीष्मो गरुड़: शशी च सूर्य्यश्च ।
शल्यो नवरङ्गमनोहरौ च गगणश्च रत्नश्च ॥
नरहीरौ च भ्रमर: शेखरकुसुमाकरश्च दीपश्च ।
शङ्खो वसुशब्दाविति षट्पदभेदोऽजयादिशब्दान्त: ॥ ३६ ॥

तानेवोदाहरति अजय इत्यादिभि: स्पष्टम् ॥ ३६ ॥

प्रथमतृतीयपञ्चमपादेषु, पञ्चदशकला निदधाति,
चेद्द्वितीयकचरणे द्वादश, चैकादश तुर्य्यपदि,
अष्टषष्टिकला इति पूरय, तदनन्तरमर्पय सुमुखि,
दोहायाश्चत्वारि चरणान्यपि तर्हि नवपद,-
मथवा रण्डा भवति ॥ ३७ ॥

अथ सामान्यतो रण्डां लक्षयति प्रथमेति। हे सुमुखि प्रथमतृतीय-पञ्चमचरणेषु यदि पञ्चदशमात्रा: स्थापयति, द्वितीयकचरणे द्वादश, चतुर्थचरणे एकादश मिलित्वा अष्टषष्टिमात्रा इति। तदनन्तरं दोहायाश्चत्वारि चरणान्यपि अर्पय देहि तर्हि नवपदं नाम रण्डा नाम वा छन्दो भवति। यथा—मन्मथराजसेनमुखरपिक, उत्कूजति चूततरुषु, फुल्लपद्ममधुपानतुन्दिल, मधुकर-कुलमपि सरसि, लुठति पतति सरसमथ गुञ्जति। मलयसमीरणो लघु लघु, वहति हरति हृदयञ्च, अतिदुरन्तवसन्त इह नु, रण्डा रमणी श्वसिति॥ यथा वा—पिकरुतमिदमनुविलसति दिक्षु किंशुककलिका विकसति। वहति मलयमरुदयमपि सुलघु विरुतमलिरपि कलयति। विकसति मञ्जुलमञ्जरिरपि च, इति मधुरनुवनमनुसरति। बहुलीभूय सुकेशि, हरिरपि विलसति चरण-युगमनुसर तं हृदयेशि ॥ ३७ ॥

त्रिकलमर्पय विषमे गणमिह, चरणे त्रिचतुष्कलमपि,
तत्र चाद्यचरणेऽन्तिमं गण,-मयि मध्यगुरुं वितर,
वा चतुर्लघुकमन्ययो: पुन,-रादिगुरुकमथ समयोऽस्तु,
चतुष्कलत्रयमुज्झ, तत्र चतुर्लघुमन्त्यन्तु,
हर तुर्य्यपदान्त्यलघु ॥ ३८ ॥

Digitized by Madhuban Trust, Delhi



रण्डाया गणनियममाह त्रिकलमिति। इह विषमे पादे प्रथमतृतीयपञ्चमे आदौ त्रिकलगणमर्पय स्थापय ततस्त्रिचतुष्कलमपि त्रींश्चतुष्कलगणानपि अर्पय। तत्र च प्रथमचरणे अन्तिमं गणं मध्यगुरुं चतुर्लघुकं वा वितर देहि। अन्ययोः पुनरादिगुरुकं गणं वितर। अथ समयोर्द्वितीयचतुर्थयोस्तु पादयोः चतुष्कलत्रयं त्रींश्चतुष्कलगणान् उज्झ निक्षिप। तत्र चतुष्कलत्रयेऽन्त्यन्तु गणं चतुर्लघुं कुरु। तुर्य्यपदस्य चतुर्थपादस्यान्त्यलघु अन्तस्थितं लघु हर लोपय खण्डयेत्यर्थः। सर्व्वेष्वपि पादेष्वन्ते लघुमेव विधेहि न तु गुरुमिति भावः। चतुर्थचरणस्यान्त्यलघुखण्डनादेकादशैव कला अवशिष्यन्ते। अतएव तृतीयो गणस्त्रिलघुरूपस्त्रिकलः सिद्ध्यतीति ॥ ४२ ॥

कान्ते करभी नन्दा मेहिन्यथ चारुसेनया भद्रा।<br>अथ तन्वि राजसेना तालङ्किन्यौ च सप्तधा रड्ढा ॥४३॥

रड्ढाछन्दसः सप्तप्रकारभेदं दर्शयति कान्त इति। चारुसेनया सह भद्रा। हे तन्वि कान्तादितालङ्किन्यन्ता रड्ढा सप्तप्रकारा ॥ ४३ ॥

त्रयोदश चादिमतृतीय,-पञ्चमचरणेषु यदि,<br>कलाद्विचतुर्थकपादत,-एकादश यत्र कुरु,<br>तदनु दोहामपि तां वद, करभीं मुखपञ्चाङ्घ्रिषु हि,<br>विषमाद्यत्रिकलात्तु, द्विकले अपनय युग्मान्त्य,-<br>चतुष्कलादेकां हि ॥ ४४ ॥

करभीं लक्षयति त्रयोदशेति। प्रथमतृतीयपञ्चमचरणेषु यदि त्रयोदशमात्राः कुरु, द्वितीयचतुर्थपादयोर्यदि एकादश मात्राः कुरु, तदनु दोहामपि सम्पूर्णां कुरु विधेहि तर्हि तां करभीं नाम छन्दो वद। अत्र विशेषः। प्रथमोक्तरड्ढाया विषमपञ्चपादानाम् आद्यत्रिमात्रात् गणाद्द्वे मात्रे अपनय अपसारय। युग्मपञ्चपादानामन्त्याच्चतुष्कलाद्गणादेकां हि मात्रामपसारय॥ यथा—त्रिलोचनकण्ठलुलितोऽपि, वासुकिरधिराजोऽपि; महामणिराजिविराजित,-शीर्षकफणिनाञ्जगति, जलधिसारोद्धृतिमानपि; अहहास्वदते भेककुल,-मीशः करभीणाञ्च; गुल्मद्रुमजकण्टकमिह; जातिगुणो बलवान् हि ॥ ४४ ॥





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



प्रथमतृतीयपञ्चमपत्सु, चतुर्दश कला विचिनु,
पादयोर्द्वितीयचतुर्थत, एकादश चेत्तदनु,
दोहाश्च तदा नन्दां वद, एकां प्राक्पञ्चाङ्घ्रिषु तु,
विषमाद्यत्रिकलात्तु, द्वय कलां समचरणान्त,-
गामिचतुष्कलतोऽपि ॥ ४५ ॥

नन्दां लक्षयति प्रथमेति। प्रथमतृतीयपञ्चमचरणेषु यदि चतुर्दश मात्रा विचिनु समाहर, द्वितीयचतुर्थयोः पादयोर्यद्येकादश मात्रा विचिनु, अन्ते दोहाश्च तदा नन्दां नाम छन्दो वद। प्राक्पञ्चपादेषु तु विषमाद्यत्रिकलगणादेव एकां मात्रां समचरणान्तिमचतुष्कलगणादप्येकां मात्रां द्वय दूरीकुरु। यथा—यदुकुलदुग्धसागरचन्द्र, भवार्णवनिमग्नमिह, लोकमुद्दिधीर्षुरनुग्रह,-पूर्णो द्रुहिणेन सह, दैतेयभरैर्नन्दात्मज, मेदिन्यार्द्दितया सुभृश,-मवतीर्णोऽर्दित आद्य, धरणितले त्वमचलधर्म्म,-सेतुमहो निबबन्ध ॥ ४५ ॥

प्रथमतृतीयपञ्चमचरणेषु चोन,-विंशतिरुदियन्ति यदि,
तन्वि कला द्विचतुर्थपद एकादश, दोहाचरणास्तदनु,
प्राक्त्रिविषमाङ्घ्रिषु त्रिकलात् कृशोदरि,
यत्र चतुष्कलकत्रितय,-मथ समचरणान्तेऽस्ति,
त्रिकलगणः सा सुमुखि ननु, मोहिनी भवति तर्हि ॥४६॥

मोहिनीं लक्षयति प्रथमेति। ननु भोः तन्वि कृशोदरि सुमुखि यदि प्रथमतृतीयपञ्चमपादेषु ऊनविंशतिः कला मात्रा उदियन्ति, द्वितीयचतुर्थयोः पादयोरेकादश, तदनु दोहाचरणाः, प्राक् पूर्व्वेषु त्रिषु विषमाङ्घ्रिषु विषये त्रिकलात् गणात् परं चतुष्कलकगणत्रयं विद्यते, अथ यदि समचरणान्ते त्रिकलगण एकोऽस्ति विद्यते सा तर्हि मोहिनी नाम छन्दो भवति। इदमपि—खगपतिकेतनेन भृशनिवारितोऽपि,-शुद्धहृदयवृत्तिरपि, दुर्जयकामजयस्मयसुमुग्धः किल,-गौरीपतिरात्मभुवि नित्यरममाण, आर्जवसंयुतोऽप्यथ ; कामसुतीक्ष्णकलं वहति,-मदनपरवशो हारि, समजनि विष्णोर्महिमभव,-मोहिनीमुखमुदीक्ष्य ॥ ४६ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



प्रथमतृतीयपञ्चमपदेषु, मात्रा यदि पञ्चदश,
सन्ति विदुषि द्वितीयतुर्य्यक,-पदयोरेकादश हि,
तदनु दोहाचरणाः सुन्दरि, पूर्व्वयुग्मचरणान्तगत,-
चतुष्कलादेकलघु, निष्कासयति तदैष्यत हि,
चारुसेन ऋषिणेति ॥ ४७ ॥

हे विदुषि हे सुन्दरि यदि प्रथमतृतीयपञ्चमपदेषु पञ्चदश मात्राः, द्वितीय-चतुर्थपादयोरेकादशैव, तदनु दोहायाश्चत्वारश्चरणाः सन्ति भवन्ति, आद्ययुग्म-पादावसानस्थिताच्चतुष्कलगणादेकं लघु यदि निष्कासयति दूरीकरोति तदा ऋषिणा पिङ्गलाचार्य्येण चारुसेना इति चारुसेना नाम छन्द ऐष्यत। यथा—विषमरणाङ्गने निविशमानमुज्जृम्भितशोकमपि। योऽर्जुनमवाणकार्मुकं रणविमुखं स्निग्धं सुहृदि। स्वमुखतीयोपनिषद्भिः किल। वीतशोकमकरोत्सपदि सुचारुसेना समिति। सारथ्यसुनिपुणः स हरिराशु शं मम विदधातु॥ चारुसेना ऋषिणा इति स्थिते 'ऋत्यक' [ पां ६।१।१२८ ] इति पाक्षिको ह्रस्वः ॥ ४७ ॥

प्रथमतृतीयपञ्चमपदेषु, पञ्चदश कला अवचिनु,
चेद्द्वितीयकचरणे द्वादश, तुर्य्येऽपि तथैव तदनु,
युङ्क्ष्व दोहायाश्चरणानि च, रडढानियतगणानपि च,
विनिवेशय ननु किन्तु, हर नान्त्यकलां तुर्य्यपदि,
भद्रेति तदा भवति ॥ ४८ ॥

ननु भो यदि प्रथमतृतीयपञ्चमेषु पादेषु पञ्चदश कला मात्रा अवचिनु संस्थापय, द्वितीये पादे द्वादश मात्राः, चतुर्थेऽपि तथैव द्वादशैव, तदनु दोहाया-श्चत्वारि चरणानि रड्ढानियत गणानपि च विनिवेशय प्रवेशय, किन्तु चतुर्थपादेऽ-न्त्यकलामन्तावस्थितां मात्रां न हर न खण्डय, तदा भद्रेति नाम छन्दो भवति। यथा—मुरहर मानवीं तनुमवाप्य पादसरसिजं यदि तव, भक्तभृङ्गगणनिपितासव,-मन्तर्मनसि क्षणमपि। योगिणां हृदयैकधनं खलु, यो धावति चिन्तयति च यद्वा परिचरतीह। स गतिं लभते शाश्वतिक,-भद्राम्महतीं जगति ॥ ४८ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



प्रथमतृतीयपञ्चमपदेषु, पञ्चदश कला अवचिनु,
चेद्द्वितीयकचरणे द्वादश,-चैकादश तुर्य्यपदि,
अथ वितर दोहाचरणानि च, रड्ढोक्तगणानपि यत्र,
तुर्य्यपदान्त्यकलाञ्च, लुम्प तदा सैव समकथि,
राजसेन ऋषिणेह ॥ ४९ ॥

प्रथमतृतीयपञ्चमपादेषु यदि पञ्चदशमात्रा अवचिनु संगृहाण, द्वितीयपादे द्वादश च मात्राः चतुर्थपादे एकादश मात्राः अथानन्तरं दोहाचरणानि रड्ढोक्तगणानपि यत्र वितर स्थापय, चतुर्थपादस्य शेषे स्थितां मात्राञ्च लुम्प खण्डय, तदा ऋषिणा पिङ्गलमुनिना सैव प्रथमोक्तरण्डैव इह जगति राजसेना नाम समकथि सम्यगवादि । यथा—विकचकमलवनेषु निपतन्ति मधुलोलुपालय इह सखि, गुञ्जनेन हृदयं रुजन्ति च, कुलिशपतननिनदमिव, मदकलपिकनिकरश्च कूजति । किंशुकजालमपि विकसति हेतिरिव ज्वलनस्य दलति लवङ्गलता चाद्य हरि हरि मृगय हरिः क्व ॥ ४९ ॥

प्रथमतृतीयकपञ्चमपदेषु, षोड़शमात्राश्चिनु यदि,
चरणे द्वितीयके तु द्वादश, चतुर्थ एकादश हि,
अथ दोहां चतुरो विषमाङ्घ्रिषु, चतुष्कलान् समयोस्त्रींस्तु,
प्रथमगणान्त्यगणस्तु, तद्वत्तुर्य्यान्त्यं [च] हर,
तालङ्किन्ययि तर्हि ॥ ५० ॥

प्रथमतृतीयकपञ्चमेषु पादेषु यदि षोड़शमात्राश्चिनु, द्वितीयके तु पादे द्वादश मात्राः चतुर्थे पादे एकादशैव मात्राः, अथ दोहां निवेशय, विषमेषु पादेषु चतुरश्चतुष्कलान् गणान् निवेशय, समयोः पादयोस्त्रीनेव चतुष्कलान् गणान्निवेशय, प्रथमपादस्यान्त्यगणस्तु पूर्ववत्, चतुर्थस्य पादस्य अन्त्यं लघु हर अपनय, तर्हि तालङ्किनी नाम छन्दो भवति । तरणिसुतापुलिनेषु मृदुलेषु, गोपबधूटीकुलमनु, शरदिन्दुशीतलज्योत्स्नावलिसमुज्ज्वलेषून्नमति, कलवशक्वणिते मुदितः किल, भुवनविरचनाकुशलोऽपि यो नृत्यन् विजहार, कृष्णः स विधिगिरीशनूतचरणो मम हृदयेऽस्तु ॥ ५० ॥

इति रण्डाकुसुमम् ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



प्रतिचरणं यस्या मध्यगुरुगणं हित्वाष्टचतुष्कलकाः स्युः,
द्व्याद्यन्तगुरुचतुर्लघव इति गणा दशवसुभुवनकलासु यतिः।
पद्मावत्याख्यां ब्रुवते कवयोऽत्र पुनर्म्मध्यगुरु[र्गणोऽथ],
यदि निपतति कविताशोभां लुम्पति सन्त्रासयति च तर्हि कविम् ॥१॥

अथ पद्मावतीं लक्षयति प्रतीति। यस्याः प्रतिचरणं चतुर्ष्वपि चरणेषु मध्यगुरुगणं हित्वा वर्जयित्वा द्विगुरुरादिगुरुरन्तगुरुश्चतुर्लघुश्चेत्यष्टौ चतुष्कलका गणाः स्युः, दशसु अष्टसु चतुर्दशसु च मात्रासु यतिर्भवति, कवयस्तां पद्मावतीं नाम छन्दो ब्रूवते। अत्र पद्मावत्यां पुनर्यदि मध्यगुरुर्गणो निपतति प्रविशति तर्हि तदा कवितायाः काव्यस्य शोभां लुम्पति नाशयति कविञ्च सन्त्रासयति समुद्वेजयति। यथा—करयुगधृतवंशो रुचिरवतंसो गोवर्द्धनधारणशीलः, प्रियगोप-विहारी भवसन्तारी वृन्दावनविरचनलीलः। धृतवरवनमाली निजजनपाली वरयमुनाजलरुचिशाली, मम मङ्गलदायी कृतभवमायी वरभूषणभूषितभाली॥ यथा—पतगेश्वरचारी स्वर्गविहारी, पद्मावत्या रचितनति,-र्भूतान्तश्चारी दुर्गति-हारी, दैत्यव्रातविनाशरतिः। पीताम्बरधारी, मङ्गलकारी, लोकस्थित्यैकाग्रमति,-र्नानायुधधारी, हरिरघहारी, भूयान्ममपरलोकगतिः॥ १॥

दोहास्थचतुश्चरणानि यस्यां प्रथमं सन्ति,
काव्यस्याप्यथचत्वारि चरणान्याशंसन्ति,
या च चतुश्चत्वारिंशदधिकशतमात्रास्पद,-
मनुपादं ननु यमकपदं हृदयामोदपदम्,
रुक्माङ्गदपादाङ्गदसन्दीपितकरचरणे,
सा कुण्डलिकाष्टपदी कुण्डलिफणशयशरणे॥ २॥

कुण्डलिकां लक्षयति दोहास्थेति। रुक्माङ्गदाभ्यां स्वर्णवलयाभ्यां पादाङ्गदाभ्यां तुलाकोटिभ्याञ्च सन्दीपितौ उद्भासितौ करौ चरणौ च यस्या हे तथाभूते कुण्डलिनः शेषस्य फणेषु शेते यः स विष्णुः स एव शरणमाश्रयो यस्याः सा हे तथाभूते यस्यां दोहास्थितानि चतुश्चरणानि प्रथमं सन्ति विद्यन्ते अथानन्तरं काव्यस्यापि च्छन्दसश्चत्वारि चरणानि आशंसन्ति इच्छन्ति। या



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



च चतुश्चत्वारिंशदधिकशतमात्राणामास्पदम् आधारः या च अनुपदं पदे पदे यमकपदं हृदयामोदपदञ्च सा अष्टपदी अष्टाभिः पादैर्निबद्धा कुण्डलिका नाम छन्दः भवति ॥ यथा—चरणं शरणं भवतु तव मुरलीवादनशील, सुरगणवन्दित-चरणयुग, वनभुविविरचितलील। वनभुवि विरचितलील-(य)दुष्टजनखण्ड-नपण्डित दुर्जनजनहृदि कील, गण्डयुगकुण्डलमण्डित दुर्जनजनहृदि कील, भीतभयतापविहरण, मुनिजनमानसहंस, हरतु मम तापं चरणम् ॥ यथावा—कालव्यालकरालमुख,-सन्दलितं दत्तसुख। सहसोत्थितस्मृतिभीतिभज, मामव वल्लवनृपज ॥ उद्घमेघवर्णार्णवोद्भवाकरकृतलालन, विष्किरनिकराध्यक्षतार्क्ष्य-विपुलां सकृतासन। रुचिरामरगिरा गिराम्परिवृढयोज्झितलक्ष्मी,-प्रतिघच्छद्म-विरोधया परिणूतगुणलक्ष्मीः ॥ २ ॥

प्रथमं सुमुखि चतुष्कलगणमवताय्य यतः प्रिये,
प्रतिपदमयि यदि विंशतिवर्णानवचिनु शोभने।
कुरु पञ्चविंशतिकलकचरणाँल्लघुगुरुशेषितान्,
गुरुरवसाने भवति तदिह गगनाङ्गनमङ्गने ॥ ३ ॥

गगनाङ्गनं लक्षयति प्रथममिति। हे सुमुखि हे प्रिये हे शोभने हे अङ्गने यतो यत्र प्रथमं चतुष्कलगणमवतार्य्य अवस्थाप्य प्रतिपदं प्रतिचरणे यदि विंशति-वर्णान् अवचिनु, पञ्चविंशतिमात्रकान् चरणान् लघुगुरुभ्यां शेषितान् समापितान् कुरु, अन्ते गुरुञ्च कुरु, इह जगति तद् गगनाङ्गनं नाम छन्दो भवति। यथा—मानसमिह मम कृन्तति, कोकिलविरुतमकारणं, कलितशरासनसायक,-मतनुः कलयति मारणम्। मधुसमये कथमपि सखि, जीवं निजमपि धारये, रुचिर-मधुभिदमन्तरा, क्षणमपि सोढुमपारये ॥ यद्यप्यत्र यतिर्नोक्ता तथापि द्वादशत्रयोदश-मात्रासु यतिः कर्त्तव्येत्याम्नायः। अनन्तरोदितगगनाङ्गने यतेरभ्युपगमाद्वेति ॥३॥

अथ वा षट्कलमादौ गणमुपधाय यथाक्रमं,
शेषे गुरुलघुगुर्विति संस्थापय वर्णत्रयम्।
मध्ये तु नियमरहितं पञ्चविंशतिकलाङ्कि‌कं,
द्वादशमात्रासु यतिर्यदि तदात्थ गगनाङ्गनम् ॥ ४ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



प्रकारान्तरेण पुनर्गगनाङ्गनं लक्षयति अथवेति। अथवा यद्वा आदौ षट्कलं गणम् उपस्थाप्य यथाक्रमं शेषे सर्व्वत्र पादान्ते प्रथमं गुरु ततो लघु पुनरपि गुरु इति क्रमेण वर्णत्रयं संस्थापय। मध्ये तु नियमरहितं पञ्चविंशति-मात्राविशिष्टपादं द्वादशमात्रासु यदि आद्ययतिः प्रथमयतिः सुतरां शेषयतिः पादान्ते त्रयोदशमात्रास्वित्यर्थः यतिः सर्व्वत्र पादान्ते सामान्येनोक्तत्वात्। तदा गगनाङ्गनं नाम छन्द आत्थ वद। यथा—माधवनामस्मरणं भवति नृणां शुचिकारणं, तज्जनसङ्गतकरणं संसारविपत्तारणम्। तत्क्षेत्रेष्वभिसरणं सकलकल्मषनिवारणं तच्चरणयोश्च शरणं गतिमुक्तिमूलकारणम् ॥ ४ ॥

गण एकः प्राक् षट्कलकः स्यादथ पञ्च चतुष्कलकाः।
गुरुरवसानेऽर्द्धेऽष्टाविंशतिमात्राश्चेद्द्विपदी सा ॥ ५ ॥

द्विपदीं लक्षयति गण इति। यस्याः प्रथममेको गणः षट्कलकः स्यात् अथ पञ्चगणाश्चतुष्कलकाः स्युः अवसाने अन्ते गुरुः अर्द्धे अष्टाविंशतिमात्राश्चे-द्भवेयुः सा द्विपदी नाम छन्दः स्यात्। यथा—केशव पुण्डरीकपत्त्रायतनयन मयि शरणागते। कुरु करुणामसारसांसारिकदुःखवरविशिखाहते ॥ यथा वा—मम मानसमभिलषति सखि कृतरासकेलिरसनायके। निजरुचिहृतनूतनजलधर, मुरलीनादसुखदायके ॥ पादान्ते यतिः ॥ ५ ॥

प्रथममवतार्य्य दश, सुन्दरि पुनश्च दश,
पुनरपि च सप्तदश यत्र मात्राः।
कल्पयति तासु यति,-मित्थमपरार्द्धमपि,
ताम्भणति झुल्लणां नागराजः ॥ ६ ॥

झुल्लणां लक्षयति प्रथममिति। हे सुन्दरि यत्र प्रथममादौ दश मात्राः पुनश्च दश मात्राः पुनरपि च सप्तदश मात्रा अवतार्य्य दत्त्वा तासु दशसु सप्तदशसु च यतिं कल्पयति विदधाति यत्र अपरार्द्धमपि इत्थमेवम्प्रकारं भवति नागराजः पिङ्गलस्तां झुल्लणां नाम छन्दो भणति कथयति। यथा—प्राप्य नरविग्रहं मुञ्च विषयाग्रहं धर्म्ममनुतिष्ठ परलोकसुखदम्। कृष्णापदतामरसगलितमधुमधुरर-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सपानशुचिराप्नुहि च शाश्वतपदम् ॥ यथा वा—करविधृतवंशरव, कृतहृदयचित्तभव, गोकुलानन्दकररुचिररासे। मम सविधमुपयासि मम वचनमनुपासि वल्लवीरभिभूय जनितहासे ॥ ६ ॥

सुन्दरि यत्र चतुष्कलसप्तकमेकगुरु च दलयोश्च यदा।
स्यात्सति पिङ्गलनागः प्रवदति तामिह ननु रुचिरेति तदा ॥७॥

ननु सुन्दरि हे सति यत्र पूर्वपरयोरपि दलयोः चतुष्कलगणसप्तकमेकगुरु च यदा स्यात्पिङ्गलनागस्तामिह तदा रुचिरेति रुचिरा नाम छन्दः प्रवदति। यथा—कस्य तनुर्मनुजस्य सितासितसङ्गममधिविधितः पतिता। यस्य कृते करभोरु विषीदसि मिहिरातपनिहितेव लता। पादान्ते यतिः ॥ ७ ॥

अशकलसुविमलशशकलमञ्जुललपनेऽद्धे स्युस्तन्वि यदा।
सप्तचतुष्कलकगणा गुरुरपि किल चौआलामात्थ तदा ॥ ८ ॥

चौआलां लक्षयति अशकलेति। शशकं लाति आदत्ते इति शशकलः अशकलः पूर्णः सुविमलः निर्म्मलः यः शशकलश्चन्द्रस्तद्वन्मञ्जुलं मनोहरं लपनं मुखं यस्या हे तथाभूते हे तन्वि यदा सप्त चतुष्कला गणाः स्युः गुरुरप्येको भवति तदा किल चौआलां नाम छन्दः आत्थ ब्रूहि। यथा—दिशि दिशि विलसति जलधरगर्जितमथ तां केका राजयते। सा मम चेतः कुरुते तर्जितमपि कां कान्तो भासयते ॥ [ रुचिरातोऽभिन्नापि चौआला प्रपञ्चार्थं पृथगभिहिता ]। पादान्ते यतिः ॥ ८ ॥

प्रथमममलविकचकमलसममुखि यदि विगणय
गणमयि नवमितसकललघुचतुष्कलम्।
अथ गुरुमथ लघुमथ पुनरपि गुरुमवचिनु विरमय
च दलयुगलमिह हि भवति खञ्जिका ॥ ९ ॥

हे निर्म्मलफुल्लकमलतुल्यवदने सकलाः सर्व्वे लघवो यत्र तादृशं चतुर्लघ्वात्मकं नवमितं नवसंख्यकं चतुष्कलं चतुर्मात्रिकं गणं यदि विगणय अथ नवसंख्यकचतुर्लघ्वात्मकचतुष्कलगणनिवेशनानन्तरम् एकं गुरुम् अथ लघुमेकम्



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पुनरपि गुरुमेकम् अवचिनु अवचित्य च दलयुगलं विरमय शेषय तदा हि निश्चये इह खञ्जिका खञ्जा नामच्छन्दो भवति। अरुणकर तिमिरहर गगनचर दुरितहर दलितदर सततचर धृतदशशतदीधिते। अदितिसुत चमितहुत निगममय हरितहय यमजनक शुभगमक कुरु मयि करुणां नते॥ पादान्ते यतिः॥ ९॥

षड्धिकनवदशलघुत उदयति गुरु लघु यदचरमदलेऽथ।
द्विगुणितदशनवलघुपरमलघु लघु च चरमदल इह भवति
शिखेति॥ १०॥

शिखां लक्षयति षड़िति। यस्या अचरमदले पूर्वार्द्धे षड्भिरधिकानि नव षड्धिकनव पञ्चदशेत्यर्थः दश च तानि च तानि लघूनि चेति कर्म्मधारयः तेभ्यः परम् अर्थात पञ्चविंशतिलघुभ्यः परमेकं गुरु ततो लघु मिलित्वाष्टाविंशतिर्म्मात्रा-स्तत्रोपान्त्यं गुरु अक्षराणि सप्तविंशतिः। अथ चरमदले द्वितीयार्द्धे द्विगुणितेभ्यो दशभ्यः विंशतेरित्यर्थः नवभ्यो लघुभ्यश्च मिलित्वोनत्रिंशल्लघुभ्यः परमलघुगुरु ततो लघु च मिलित्वा द्वात्रिंशन्मात्रा अक्षराण्येकत्रिंशद्भवति चेदिह सा शिखेति शिखा नाम छन्दो भवति। यथा—प्रियकमलहतशमल गलगरल भृशसरल करकलितशूल। निटिलतललसदनल कशशिकल मउरुबल दिशतु कुशलममृतमूल॥ पादान्ते यतिः॥ १०॥

मुखदल उदितयश उदयशिखरिशिखरनिहितकर-
कुमुददयितसममुखि यदि लघूनि षट्त्रिंशत्।
गुरु लघु च त्रिगुरु च दल, उपगीत्यर्द्धान्तिमे माला॥११॥

मालां लक्षयति मुखेति। उदितं यशो यस्याः सा हे उदितयशः उदित-शिखरिणः शिखरे श्रृङ्गे निहितः अर्पितः करो मरीचिर्येन स चासौ कुमुददयितः कुमुदप्रियश्चन्द्रश्चेति तेनसमं तुल्यं मुखं यस्याः सा हे तथाभूते मुखदले प्रथमार्द्धे यदि लघून्यक्षराणि षट्त्रिंशत् ततो गुरुस्ततो लघु च पुनस्त्रिगुरु चाक्षराणि भवन्ति, अन्तिमे दले द्वितीयार्द्धे यदि उपगीत्यर्द्धा उपगीतेरर्द्धं यस्यां सा तथाभूता भवति तदा माला नाम छन्दो ज्ञेया। यथा—अहिवलय हिमनिलयगिरिनिलय



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



कृतविलय विधिहरिहयनुतचरणजितमरण पार्व्वतीजाने। भूतिविभूषण दिश मे शिव शिवमजगवधनुष्पाणे॥ यथा वा—त्रपितहृदयकरयुगकृतवसन वसनहरण-परवशयुवतिकृतविनतिरभयमात्ततद्वासाः। तीरे कदम्बशाली वरवनमाली हरिः पायात्॥ पादान्ते यतिः॥ ११॥

दोहाया दलयोरुपरि कलयति पञ्चकलञ्च गणं यदि।
पुनर्द्वितीयगुरुं सुतनु खलु चुलिआला तर्हि भवेन्ननु॥१२॥

चुलिआलां लक्षयति दोहाया इति। दोहाया दलयोर्द्वयोः उपरि पश्चात् पुनर्द्वितीयं गुरु यस्य तादृशं पञ्चकलं पञ्चमात्रकं गणं यदि कलयति संयोजयति तर्हि ननु भोः चुलियाला नाम छन्दो भवेत्। यथा—मूर्खो यत्र समाजपति,-रवनिपतिश्च जनान् भृशमर्दति। नो अभिनन्दति चाप्तगिर,-मयि सुखमभिलष यदि हि तदुत्किर॥ यथा वा—क्षणमुपविश वनभुवि हरे मम पुनरागमनावधि पालय। उपयातामिह मम सखीं तामङ्के राधामुपलालय॥ अत्रार्द्धे ऊनत्रिंशन्मात्रा भवन्ति। दलद्वये पुनरष्टपञ्चाशन्मात्राः॥ पादान्ते यतिः॥१२॥

दोहाया विषमोऽङ्घ्रिरनुपतति समे पदि यत्र।
विषमे च समो भवति सौराष्ट्रं तद्यमकेन॥ १३॥

सौराष्ट्रं लक्षयति दोहाया इति। यत्र समे पादे दोहाया विषमः पादः अनुपतति प्रविशति विषमे पादे च समः पादः अनुपतति यमकेन युक्तं चेत्तर्हि तत् सौराष्ट्रं नाम छन्दो भवति। यथा—तम्मन्यत इह धन्य,-मलमात्म-जनुर्य्यस्य खलु। मातरि पितरि च भवति, भक्तिमान् कृती गुणवांश्च॥ यथा वा—रूपविनिर्जितमार सकलयादवकुलपालक। जय जय नन्दकुमार गोपी-गोपजनपालक॥ पादान्ते यतिः॥ एतद्दोहाविपरीतमेव॥ १३॥

कलय यतस्त्रिचतुष्कलकं गणमन्तादिगुरुमनुपदम्।
स-चतुर्लघुमन्ते तु गुरुं हाकलिरित्यवधारय ताम्॥ १४॥

हाकलिं लक्षयति कलयेति। यतः यस्यामनुपदं पदे पदे अन्त आदिश्च गुरुर्यस्य तमन्तगुरुमादिगुरुञ्चेत्यर्थः सचतुर्लघुं चतुर्लघुसहितं त्रिचतुष्कलकं गणमन्ते



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तु पादान्ते तु गुरुं कलय योजय तां हाकलिरिति हाकलिं नाम छन्दोऽवधारय निश्चिनु। हाकलिस्थाने काहलिरित्यपि केचिदाहुः ॥ १४ ॥

इह मात्रा विगणय समहे प्रतिचरणन्तु चतुर्दश हे।
प्राक्पदयुगमेकादशभिः कुरु वर्णैरपरं दशभिः ॥ १५ ॥

हाकल्या मात्रा अक्षराणि च निरूपयति इहेति। हे समहे सोत्सवे इह हाकलिच्छन्दसि प्रतिपादे चतुर्दश मात्रा विगणय। तत्र प्राक्पदयुगं पूर्व्वपादद्वयम् एकादशभिर्व्वर्णैरपरं पादद्वयं दशभिर्व्वर्णैः कुरु निष्पादय। पादान्ते यतिः। यथा—विकृतभयानकवेशकलं चरणाङ्कितकरभूमितलम्। व्योमतलामलकम्बुगलं नौमि विभूषितभालतलम्॥ यथा वा—हा कलिरागत इति विविदन् विषमं विषयसुखं विसृजन्। मुक्तिविसर्जनकल्पतरुं भजतां जगतां मित्र गुरुम् ॥१५॥

त्रिचतुष्कलात्तु मध्यगुरुमुज्झ।
दलयोर्यदीह मधुभारमाह ॥ १६ ॥

मधुभारं लक्षयति त्रीति। यत्र त्रिभ्यश्चतुष्कलेभ्यो गणेभ्यः परं दलयोः पूर्व्वार्द्धपरार्द्धयोः मध्यगुरुं गणम् उज्झ निक्षिप चेदिह तन्मधुभारं नाम छन्द आह वदति। पादान्ते यतिः। यथा—हरिनाभिपद्मजभृङ्गसद्म। मम मार्ष्टु मन्तुमशुभञ्च हन्तु॥ उरसि कृतमाल, भक्तजनपाल। रुचिजिततमाल, जयनन्दबाल॥ पादान्ते यतिः ॥ १६ ॥

एकादश पदि सन्ति यत्र कलाः सितदन्ति।
आभीरं तदवैमि मध्यगुरुगणविरामि ॥ १७ ॥

हे सितदन्ति शुक्लदशने यत्र यस्मिन् पदि पादे एकादशकला एकादशमात्राः सन्ति विद्यन्ते मध्यगुरुगणे विरामि यतिमत्तदाभीरं नाम छन्दः अवैमि जानामि। यथा—आभीराशुभहारि, नन्दप्राङ्गणचारि। कृष्णवपूर्व्वनमालि, पातु जगद्बलशालि॥ यथा वा—व्रजभुवि रचितविहार, श्रुतिशतकलितविचार। यदुकुलजनितनिवास, जय भूतलकृतरास॥ पादान्ते यतिः ॥ १७ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



केशवचरणनलिननिहितमते भजनबलेन निहितदुरिततते,
प्रतिहरिवासरमुपवासरते गुरुजनशासनपालननिरते ।
अष्टचतुष्कलगणरचितपदा यमकितषोड़शमात्रा च यदा,
यतिरपि षोड़शमात्रासु तदा कामकला सा भवति सुविशदा ॥१८॥

कामकलां लक्षयति केशवेति । केशवस्य कृष्णस्य चरणनलिनयोः निहिता-रोपिता मतिर्यया हे तथाभूते, भजनबलेन भक्तिबलेन निहता विनाशिता दुरिततति र्यया हे तथाभूते, प्रतिहरिवासरमेकादश्यामेकादश्यामुपवासे भक्तत्यागे रतिर्यस्या हे तथाभूते गुरुजनानां शासनस्याज्ञायाः पालने निरते आसक्ते अष्टचतुष्कलगणै रचितानि पदानि चरणाणि यस्यास्तथा यमकिता यमकनिबद्धा षोड़शमात्रा यस्यास्तथा यदा भवति षोड़शमात्रासु च यतिरपि भवति तदा सुविशदा निर्म्मलतरा सा कामकला नाम छन्दो भवति । यथा—कमला-करलालितपदकमलं निजजनहृदयविनाशितशमलं, पीतवसनपरिभासितममलं जितकम्बुमनोहरविमलगलम् । नाभिकमलगतविधिकृतनसनं फणिमणिकुण्डल-मण्डित वदनं, नौमि जलधिशयमतिरुचिसदनं दानवनिवहसमरकृतकदनम् ॥१८॥

अयि चरणे चरणे यत्र प्रथमं चत्वारो हि चतुष्कलका,
यदि सन्ति गणा अथ षट्कलसंज्ञक एकः स्मितमुखि भवति गणः ।
पुनरेव चतुष्कलगणयुगलं किल चरणान्ते पुनरेकगुरु,-
र्वद तद्दण्डकलं द्वात्रिंशत्कलचरणं कविमानसहरणम् ॥ १९ ॥

दण्डकलं लक्षयति अयीति । अयि भोः स्मितमुखि यत्र चरणे चरणे चरणे प्रथमं चत्वार एव चतुष्कलका गणाः सन्ति । अथैकषट्कलो गणो भवति । पुनरेव द्वौ चतुष्कलगणौ भवतः । पुनश्चरणान्ते एकगुरुर्भवति । द्वात्रिंशत्कला मात्ता यत्र तादृशाश्चरणा यस्मिंस्तत्कवीनां चित्ताकर्षकं दण्डकलं नाम छन्दो वद । यथा—भृगुपतिहस्तोद्यत,-महितनिधनहित,-मुग्रमवेक्ष्य शितं परशुम्, भूपतयो भग्ना दिकूतटलग्ना हित्वा कोषस्तं सपशुम् । गहनान्तर्लीनाः, केचन दीना, विविशुर्गह्वरभूविवरम्, राजन्यकुलघ्न,-स्तातशिरोघ्नं युधि हत्वा प्रशशाम परम् ॥ पादान्ते यतिः ॥ १९ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सचतुष्कलकमन्त्य,-गुरुपञ्चकलमस्य ।
गणमङ्घ्रिषु लघुञ्च, तद्दीपकमवस्य ॥ २० ॥

दीपकं लक्षयति सेति । अस्य छन्दसः अङ्घ्रिषु पादेषु चतुर्ष्वपि आदावेकं चतुष्कलकं गणं ततः अन्त्यगुरुकं पञ्चकलं गणमेकं ततो लघुञ्चैकमवस्य निश्चिनु चेत्तर्हि तद्दीपकं नाम छन्दो भवति। अवस्येति अवपूर्व्वषोऽन्तकर्म्मणि दिवादिः। लोटो मध्यमपुरुषैकवचने रूपम्। यथा—अज दनुजकुलकाल, गललम्बिवनमाल। श्रुतिदीपक सुचाप, मामुद्धर दुराप॥ पादान्ते यतिः ॥२०॥

यस्याङ्घ्रिषु चतुर्षु, सचतुष्कललघू च ।
मध्यगुरुमपि मुञ्च, तद्द्विपदमवगच्छ ॥ २१ ॥

दीपकस्य नामान्तरमाह—यस्येति। यस्य चतुर्षु चरणेषु चतुष्कलेन गणेन सहितौ द्वौ लघू च मध्यगुरुमपि गणं मुञ्च देहि तद्द्विपदं नाम च्छन्दोऽवगच्छ जानीहि॥ यथा—शेषविरचितहार, पितृकाननविहार। जय जय हर महेश, गौरीकृतसुवेश॥ पादान्ते यतिः॥ २१॥

यमकितचरणं द्विगुणाष्टकलं,
कलयस्व चतुर्लघुमन्तगुरुम् ।
गुरुमन्तगतं त्ववलोकपरं,
परमे यदि सिंहमवेहितराम् ॥ २२ ॥

[ सिंहावलोकं लक्षयति यमकितेति। हे परमे श्रेष्ठे यदि पद्यस्य यमकित-चरणं यमकयुतं पादम्, अन्त्ययमकान्वितमित्यर्थः, चरणं द्विगुणाष्टकलं षोड़शकलात्मकं कलयस्व विधेहि, मात्रागणञ्च चतुर्लघुम् अन्तगुरं वा स्वेच्छातः कलयस्व, तथा अन्तगतं चरणान्तस्थितम् अपि वर्णं गुरुं द्विकलरूपं कलयस्व, तदा तत् अवलोकपरं सिंहं सिंहावलोकं नाम छन्दः अवेहितराम् प्रकर्षेण जानीहि। वाणीभूषणकारस्तु 'सिंहावलोकम्' इति छन्दसि प्रवेशयितुम् अशक्यतया सिंह+अवलोकम् इति स्थिते शकन्ध्वादित्वात् पररूपे सति सिंहवलोकमिति कृतवान्। अन्यथा सप्तदशकलकं प्रथमचरणं स्यात्। श्रृणु सिंहवलोकितवृत्तवरं, वरयमकमनोहरचरणधरम्। ] धरणीपतिमानसमधिकलितं



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



किल वेद चतुष्कलगणललितम् ॥ यथा—तव वल्लववेश हरे चरणं रणदुज्ज्वल-नूपुरमरुणतरम् । तरसा भजननिपुन-मोहहरं, हरनुतमखिलं मम हरतु दरम् ॥ यथा वा—हतदूषणकृतजलनिधितरणं रणभुविकृतदानवकुलमरणम् । रणरणित-शरासनभङ्गकरं करकलितशिराननदेववरम् ॥ [ अत्र लक्षणन्तु नोदाहरणम् ] । पादान्ते यतिः ॥ २२ ॥

प्रोज्झ्य चतुष्कलपञ्चकलत्रिकलान् पर,
न्त्वङ्घ्रिषु यत्र गणास्त्रय एव हि षट्कलाः ।
किन्तु मुखाक्षरकं गुरु लघु गुरु चान्ततः,
स प्लवङ्गम एकविंशतिकलकाङ्घ्रिकः ॥ २३ ॥

प्लवङ्गमं लक्षयति प्रोज्झ्येति । यत्र चतुष्कलपञ्चकलत्रिकलान् गणान् हित्वा अङ्घ्रिषु चरणेषु हि निश्चये त्रय एव षट्कला गणाः सन्ति मुखाक्षरं प्रथमाक्षरं गुरु अन्ततः पादान्ते लघु गुरु च भवति एकविंशतिः कला मात्रा यस्य तादृशोऽङ्घ्रिः पादो यस्य तथाभूतः स प्लवङ्गमो नाम छन्दो भवति। यथा—क्रामति नूत्नतड़ित्वति विद्युदिवाम्बरम्, यद्धरिवर्ष्मणि चञ्चति चञ्चलमम्बरम् । वक्षसि ते च कदम्बमुकुलयुगमुन्नतं, वेद्मि तदालि घनागमसमयमुपागतम् ॥ पादान्ते यतिः ॥ २३ ॥

यत्र चतुष्कलपञ्चकलौ न मुखे भवेत्,
षट्कल आदिगुरुर्हि ततस्त्रिचतुष्कलाः ।
तुर्य्यगणोऽन्तगुरुर्ननु लघु गुरु चान्ततः,
स प्लवङ्गम एकविंशतिकलपादकः ॥ २४ ॥

प्रकारान्तरेण तमेव लक्षयति यत्रेति । यत्र यस्मिन् मुखे पादानामादौ चतुष्कल-पञ्चकलौ गणौ न, आदिगुरुर्हि आदिगुरुरेव षट्कलो गणो भवेत, ततस्त्रयश्चतुष्कला गणा भवेयुः । तेषां तुर्य्यगणश्चतुर्थो गणः अन्तगुरुर्यदि, अन्ते यथाक्रमं लघु गुरु च भवेत्, एकविंशतिकलकः स प्लवङ्गमो नाम छन्दो भवति । यथा—कुञ्चितचञ्चलकुन्तलकलितवराननं, वेणुविरावविनोदविमोहितकाननम् । मण्डलनायकदानवखण्डनपण्डितं, चिन्तय चण्डकरोपमकुण्डलमण्डितम् ॥ २४ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



लघुगुरुनियमो न वर्णनियमोऽपि न मध्यगुरुः समविषमपदे,
द्रुतरयहय इव सति गण इह निपतति कोऽपि न नियमो विशदरदे ।
परमष्टचतुष्कल,-कलितपदा किल, तत्रान्त्योऽन्तगुरुर्हि यदा,
द्वात्रिंशति विरमति मात्रासु जगति, लीलावत्यपि भवति तदा ।।२५।।

लीलावतीं लक्षयति लघु इति । हे सति हे विशदरदे शुद्धदति इह छन्दसि लघुगुरुनियमो न कियन्तो लघवः कियन्तो गुरव इति नियमो नास्ति, वर्णनियमोऽपि न एतावदक्षरः पाद इति नियमोऽपि नास्ति, समे विषमे च पादे इह मध्यगुरुर्गणो निपतति इति कोऽपि नियमो नास्ति, अत्र दृष्टान्तः द्रुतरय हय इव चञ्चलवेगो घोटको यथा दिग्विदिक्षु गम्यागम्यासु प्रसरति तद्वत् । परन्तु अष्टाभिश्चतुष्कलैर्गणैः कलितं निबद्धं पदं चरणं यस्याः सा किल । तत्राष्टचतुष्कलगणमध्ये योऽन्त्यो गणः सोऽन्तगुरुरेव यदा द्वात्रिंशन्मात्रासु विरमति पादः पूर्णो भवति तदा सा लीलावती नाम छन्दो भवति । यथा—
नरकान्तक कान्त रजतहिमपर्व्वत हर शशधरकरविमलयशो,-विशदीकृतदिक्तट मृदितदितिजभट धनुरध्वरहतकंसपशो । वृषपुङ्गवबाहन कमलजननघनवाहन-सततकृतप्रणते, वसुदेवज हे अज रतिरमणात्मज वितर वरम्मे चिन्तयते ॥ यथा वा—गुञ्जाकृतभूषणमखिलजनहतदूषणमधिककृतरासकलं करयुगधृतमुरलीं नवजलधरनीलं वृन्दावनभुवि चपलम् । हतगोपीमानं नारदकृतगानं लीलाबल-देवयुतम्, स्मर नन्दतनुजं सुरवरकृतपूजं समहृदयमुनिजननूतम् ॥ २५ ॥

गणमेकमाचिनु पञ्चमात्रकमादितो यदि षट्कलं,
तदनु त्रिपरिमितपञ्चकलमित एककं गुरु चान्तिमम् ।
नवसप्तदिनपतिमितकलायतिरष्ट विंशतिरपि कलाः,
सति सन्त्यनुचरणमत्र तर्हि तु कीर्त्तिता हरिगीतिका ।।२६।।

हरिगीतां लक्षयति गणमिति । हे सति आदित आदौ एकं पञ्चमात्रकं गणं यदि आचिनु अथ एकं षट्कलं गणमथ त्रिपरिमितं त्रिसङ्ख्यकं पञ्चकलं गणं पुनरपि अन्तिममक्षरं गुरु च कुरु । नवसु सप्तसु द्वादशसु च कलासु



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यतिर्यस्यां सा, अष्ट विंशतिरित्यसमस्ते। अष्टौ विंशतिरपि यदि कलाः मात्रा अनुचरणं प्रतिपादेषु सान्त तर्हि तु तदैव हरिगीता नाम छन्दः कीर्त्तिता। यथा—भुजगपरिवारितवृषभधारित हस्तडमरुविराजितं, कृतमदनगञ्जनमशुभ-भञ्जनवरमुनिगणसभाजितम्। हिमकिरणभासितदहनभूषितभालसुमया सङ्गतं, धृतकृत्तिवाससममलमानसमनुसर सुखदमङ्गतम्। यथा वा—त्यज युवतिसङ्ग-ममचरजङ्गमजगति कुरु पुरु मित्रतां, कुरु सुजनसङ्गममतिभुजङ्गमकुटिलभवगति-चित्रताम्। गिरिपतनझर्झरशिशिरनिर्झरघनरसं पिव कैशवं पदमञ्च भक्षय शाकमक्षयलोकमिहि सृज शैशवम्॥ २६॥

प्रथमममलतमसोमसममुखि कलयति पञ्चकलङ्गणम्,
तदनु षट्कलमथ पञ्चकलं पुनरपि पञ्चकलं गणम्।
पुनरपि च पञ्चकलमलिकतलतिलकेऽथ गुरुं [वै] यदा,
सुकवयोऽपरमिह सति हरिगीतमिति वदन्त्यवले तदा॥२७॥

अपरं हरिगीतं लक्षयति। हे अतिनिर्म्मलचन्द्रसदृशवदने अलिकतले ललाटतले तिलकं यस्या हे तथाभूते हे सति हे अबले प्रथममादौ यदा पञ्चकलं गणं कलयति स्थापयति तदनु षट्कलमथ पञ्चकलं पुनरपि पञ्चकलं पुनरपि च पञ्चकलं ततो गुरुमेकं कलयति तदा सुकवय इह जगति अपरमन्यत् हरिगीतमिति हरिगीतं नाम छन्दो वदन्ति। यथा—रचय कदलीदलनवशयनं कमलदला-वलिमालितं, वीजय मृदुपवनेन घनाघनसुन्दरविरहदालितम्। अङ्गकमपि घनसारविराजितचन्दनरचनलालितं, कुरु मम वचनमानय कमलाननवनमालिन-मालितम्॥ पादान्ते यतिः॥ २७॥

शशधरवदने ज्वलनसमुज्ज्वलमणिकुण्डलयुतकर्णे,
विकचकनकचम्पकदलसुषमालोपिसहजतनुवर्णे।
अन्तनियतगुरुयुगलमुरुमते यदि हि भवति हरिगीतं,
श्रवणप्रवणमनो हरिगीतैस्तर्हि कथय हरगीतम्॥ २८॥

हरगीतं लक्षयति शशधरेति। हे शशधरवदने ज्वलन इवाग्निरिव समुज्ज्वले ये मणिरचितकुण्डले ताभ्यां युतौ कर्णौ यस्या हे तथाभूते विकचस्य



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



स्फुटस्य कनकचम्पकस्य दलस्य सुषमालोपी परमशोभालोपकः सहजः स्वाभाविकस्तनुवर्णो यस्या हे तथाभूते हे उरुमते हरेर्विष्णोर्गीतेर्गीतस्य श्रवणे प्रवणं नम्रं मनो यस्या हे तथाभूते यदि हि हरिगीतं छन्दः अन्ते पादान्ते नियतं गुरुयुगलं यस्य तथाविधम्भवति तर्हि हरगीतं नाम छन्दः कथय। यथा—उरसि विलसितानुपमनलिनकृतमधुकररुतयुतमालं, मुनिजनयमनियमादि-विनाशकसकलदनुजकुलकालम्। मुरलीरवमोहनमनुमोहितनिखिलयुवतिकृतरासं विनमतु मम हृदि किमपि गोपिकामानसकलितविलासम्॥ पादान्ते यतिः॥२८॥

असितनेत्रि रुचिरगात्रि लोकोत्तरसुकृतधात्रि सुमुखि यत्र कुरु
कलत्र कविसमाजरञ्जिनि,
प्रथममेव षट्कलगणसप्तकपणमनुपदं हि तदनु पञ्चकलगणञ्च
खलसमाजगञ्जिनि।
अक्षरन्तु विगतमन्तुयोषिद्गुणगणविकीर्णहृत्कुरुष्व गुरु
सुनिःस्वहितकरि चरणान्तिमम्,
विष्णुमन्त्रजपनतन्त्र आत्मार्पितकरणतन्त्र एतां कविताम्बुजरविराह
ननु चतुष्पदी॥ २९॥

चतुष्पदीं लक्षयति असितेति। हे असितनेत्रि हे रुचिरगात्रि हे अलोक-सामान्यसुकृतपोषयित्रि हे सुमुखि हे कलत्र हे कविसमाजरञ्जिनि हे खलसमाज-गञ्जिनि विगतमन्तवः निरपराधा या योषितस्तासां गुणगणेन विकीर्णं व्याप्तं हृत् हृदयं यस्या हे तथाभूते हे निस्स्वानां दरिद्राणां हितकरि विष्णुमन्त्रजपनमेव तन्त्रं प्रधानं यस्या हे तथाभूते आत्मनि ब्रह्मणि अर्पितं निवेदितं करणतन्त्र-मिन्द्रियपरिच्छदो यया हे तथाभूते यत्र यस्यां प्रथममादावेव अनुपदं पादे पादे हि निश्चये षट्कलगणसप्तकस्य पणं कुरु सप्तषट्कलगणान् स्थापय तदनु पञ्च कलगणञ्च कुरु अन्तिमं पादान्ते स्थितम् अक्षरं गुरु कुरुष्व एतां कविताम्बुजेषु रविः पिङ्गलाचार्य्यश्चतुष्पदीमाह चतुष्पदीं नाम छन्दः ब्रवीति। यथा—स्वजनपुत्रदारमित्रकुप्यरुप्यकनकपात्रकोषनिवहधेन्वनडुहमाहिषवाजिकुञ्जरान्, तं चिराय ननु तृणाय मन्यमान इह भजस्व मित्रहृदयशर्म्मसदमवरुध्य करणकुञ्जरान्।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हरिपदाब्जमनिशमब्जजन्मादिकस्मरमुखाब्जविगलदमृतसमनुतिशतसामभिरनुवर्णितम्, भवजलनिधिलङ्घनविधिकुलिशसारतरिमनाधिपापतापमतिदुरापममलभक्तयुपासितम् ॥ पादान्ते यति ॥ २६ ॥

यत्र रमणि सद्गुणमणिकान्तितत्तदिगन्ते,
चेत्त्रिगुणितषट्कलगणमारचय तदन्ते ।
सर्व्वगुरुचतुष्कलगणमेकममलकान्ते,
तद्भवति चतुष्पदमिति चूर्णयुगलकान्ते ॥३०॥

हे रमणि प्रशस्तगुणरूपमणीनां कान्तिभिस्ततः व्याप्तः दिगन्तो यया हे तथाभूते हे अमलकान्ते चूर्णानि वासयोगान् युनक्तीति चूर्णयुक् तथाविधोऽलकान्तो यस्या हे तथाभूते यत्र त्रिगुणितषट्कलगणं षट्कलगणत्रयम् आरचय तदन्ते त्रिषट्कलगणान्ते सर्व्वं गुरु यस्य तथाविधं द्विगुरुरूपं चतुष्कलगणमेकमारचय चेत्तच्चतुष्पदं नाम छन्दो भवति । यथा—श्रुत्वा किल सा मदकलकोकिलकुलनादं, जैमिनिरिति जैमिनिरिति जल्पति सविषादम् । नीलनलिनमाल्यमहह वीक्ष्य भुजगवीता, गरुड़ गरुड़ गरुड़ेत्यभिरौति परमभीता ॥ पादान्ते यतिः ॥३०॥

दशमात्राः प्रथमं ननु मृदुहृदये प्रभवन्ति ततः परमनघे,
स्मितमुखि यत्राष्टौ पुनरपि चाष्टौ षट् च पुनस्तास्वपि विरतिः ।
कुरु गुरु चरणान्त्यं रुचिरापाङ्गि द्वात्रिंशत्कलपादयुता,
स्यादष्टचतुष्कलकलिता क्वापि न मध्यगुरुः सा त्रिकभङ्गी ॥३१॥

त्रिभङ्गीं लक्षयति दशेति । ननु भो मृदुहृदये हे अनघे हे स्मितमुखि हे रुचिरापाङ्गि यत्र प्रथमं दश मात्राः ततः परमष्टौ मात्राः पुनरपि च अष्टौ मात्राः पुनः षट् च मात्राः प्रभवन्ति जायन्ते, तासु दशसु अष्टसु अष्टसु षट्सु च यतिरपि भवति । चरणान्त्यं पादान्तगतमक्षरं गुरु कुरु गुरु विधेहि । द्वात्रिंशन्मात्राकपादविशिष्टा, अष्टभिश्चतुष्कलैर्गणैः कलिता निबद्धा, क्वापि कुत्रापि चरणे मध्यगुरुर्गणो न स्याच्चेत् सा त्रिभङ्गी नाम छन्दो भवति । यथा—विविधायुधमण्डितसङ्गरपण्डितरणदण्डितपाषण्डभटे, चण्डासुरखण्डिनि पुरहरमण्डिनि शशधरखण्डिनि



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



बद्धजटे। भवसागरतारिणि दुर्गतिहारिणि मङ्गलकारिणि मयि सुचिरं, गिरिराजसुवासिनि शैलनिवासिनि शम्भुविलासिनि देहि वरम्॥ यथा वा—वरमुक्ताहारं हृदिकृतभारं विरहितसारं कुरु मुषितं, छादय विधुबिम्बं न कुरु विलम्बं हर निकुरम्बं कमलकृतम्। जहि मलयजपवनं लघु लघु वहनं तनुकृतदहनं मोहकरं, मम चित्तमधीरं रदजितहारं यदुवरवीरं याति परम्॥ प्राकृते तु तिब्भङ्गीति नाम। त्रिभङ्गीति प्रवेशयितुमशक्यतया त्रिशब्दोत्तरं स्वार्थिककन्प्रत्ययं विधाय त्रिकभङ्गीति यत्कृतं तत्सोढव्यम्॥ ३१॥

> प्राक् सुतनु सुविहितं कुरु नवविमितं यत्र
> चतुष्कलमेव गणं सिद्धिकृतपणं,
> चिनु हे प्रतिचरणं मध्यगुरुगणं कृत्वान्तगुरुं
> दशमगणं शेषय चरणम्।
> श्रितहरिगुरुचरणे चेत्प्रतिचरणे दशवसुभुवना-
> ष्टकलासु स्यादथ विरतिः,
> षष्ट्यधिकशतकलं मोहयितुमलं नृपमपि
> तद्वद् मदनगृहं तर्हि सुखगृहम्॥३२॥

मदनगृहं लक्षयति प्रागिति। हे सुतनु हे श्रितहरिगुरुचरणे यत्र प्राक् प्रथमं नवपरिमितं चतुष्कलमेव गणं सिद्धये कृतः पणो यत्र तत् यथा भवति तथा सुविहितं कुरु। प्रतिचरणं चरणे चरणे मध्यगुरुगणं चिनु, दशमगणम् अन्तगुरुं कृत्वा चरणं शेषय पादं समापय। अथ प्रतिचरणे दशसु अष्टसु चतुर्दशसु अष्टासु च कलासु मात्रासु विरतिर्य्यतिः स्याद्यदि तर्हि षष्ठ्यधिकशतकलात्मकं नृपमपि मोहयितुम् अलं समर्थं सुखगृहं सुखास्पदं मदनगृहं नाम छन्दो वद ब्रूहि। यथा—मम कंसविघातिनि, कीर्त्तिविसारिणि, संहृतमुष्टिकमल्लवरेऽसदरिष्टहरे, यमलार्जुनभञ्जिनि, जगदनुरञ्जिनि, कालियमूर्द्धनि नृत्यकरे, चाणूरहरे। बकवत्सविखण्डिनि, यदुकुलमण्डिनि, राधामुखमधुपानकरे, करकलितधरे, भक्तिप्रतिपादिनि, मुक्तिविधायिनि, जन्मनि जन्मनि देववरे रतिरस्तु परे॥ यथा वा—करकलितकपालं धृतनरमालं भालस्थानलहुतमदनं कृतरिपुकदनं,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



भवभयभरहरणं गिरिजारमणं सकलजनस्तुतशुभचरितं शुनगणभरितम् । कृतफणिपतिहारं त्रिभुवनसारं दक्षमखक्षयसंक्षुब्धं रमणीलुब्धं गलराजितगरलं गङ्गाविमलं कैलासाचलधामकरं प्रणमामि हरम् ॥ ३२ ॥

यत्र प्रतिचरणं, सुन्दरि सन्ति, द्वात्रिंशन्मात्रा दशभिश्,
छेदोऽष्टभिरथ यदि, सचतुर्दशभि,-स्ताभिस्तत्रान्त्या तु गुरुः ।
किञ्चाष्टचतुष्कल,-गणयुक्पादा, चान्तः पतति चतुर्लघुकः,
अन्ते त्वन्तगुरु,-द्विगुरुर्विषमे, दुर्मिलका सा भवति तदा ॥३३॥

दुर्मिलकां लक्षयति यत्रेति । हे सुन्दरि यस्यां पादे पादे द्वात्रिंशन्मात्राः सन्ति । यदि दशभिरष्टभिश्चतुर्दशभिश्च मात्राभिश्छेदो यतिः । तत्र द्वात्रिंशन्मात्रामध्ये अन्त्या तु मात्रा गुरुः । किञ्च अष्टचतुष्कलगणयुजः पादा यस्याः सा । अन्तर्मध्ये चतुर्लघुको गणो निपतति । अन्ते तु अन्तगुरुर्गणः पतति । विषमे चरणे द्विगुरुर्गणो निपतति । सा दुर्मिलका नाम छन्दो भवति । यथा—गोग्रहणासङ्गान् बद्धनिषङ्गानुद्दलदट्टट्टध्वनितान्, दुर्य्योधनपक्षान् सङ्गरदक्षान् कक्खटकङ्कटकानहितान् । वैराटिसहायो वर्म्मितकायो जित्वा गाण्डीवी तरसा, गा आनीयाश्वथ सफलमनोरथ आप्राच्छुद्धान्तस्सहसा ॥ यथा वा—हैयङ्गवचौरं नन्दकिशोरं तण्डुलकणरुचिसमदशनं घनकुञ्चितकेशं मञ्जुलवेशं, विजितमनुजस्वररुचिसदनम् । अपरिस्फुटमदनं, दधियुतवदनं नौमि दितिजवरशकटहरं, मुक्ताभूषालक,-मद्भुतबालक,-मखिलमुनिजनहृदि सुखकरम् ॥ ३२ ॥

दश दश दश च लवव, उत यत उडु धव,-मुखि
गुरुरवसितिनिहितपदः,
करतलजितकिसलय इह षोड़शयुग,-परिमित-
कलमुपहर चरणम् ।
क्वचिदुपनतगुरुयुगमपि न च परिहर
दशवसुगजगुहवदनकला,-
स्त्ववसितिरपि च भवति सुतनु तदहिपति,-वदनो-
त्थितमिह जलहरणम् ॥ ३४ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



जलहरणं लक्षयति दशेति। उडूनां नक्षत्राणां धवः पतिश्चन्द्रः स इव मुखं यस्याः हे उडुधवमुखि करतलेन जितं किसलयं पल्लवं यया हे तथाभूते हे सुतनु यतो यस्मिन् दश दश दश च लघवस्त्रिंशल्लघव उत एवं अवसितौ पादान्ते निहितं पदं येन तादृशो गुरुरेकश्च भवन्ति, इह छन्दसि षोड़शयुगपरिमिता द्वात्रिंशत्परिमिताः कला मात्रा यस्मिंस्तादृशं चरणं पादमुपहर उपस्थापय। क्वचित् न तु सर्व्वत्र पादे उपनतमुपस्थितं गुरुमपि न हि परिहर मा मुचः। अत एवात्र द्वयोः पादयोरेकैका गुरुमात्रा प्रवेशयितुं शक्या न ततोधिका। गुरुमात्राद्वयप्रवेशाभावेऽपि न क्षतिरिति भावः। दशसु अष्टसु पुनरष्टसु षट्सु च कलासु अवसितिर्यतिरपि च भवति चेत् अहिपतिवदनादुत्थितं पिङ्गलनागमुखप्रभवं तत् जलहरणं नाम छन्दो भवति। अत्र द्वितीयपादे षो इति चतुर्थपादे नो इति गुरुमात्रा, मिलित्वा द्विगुरुमात्रेति। यथा—वरजलनिधिजलशय निरुपम-रुचिचय सुरगणहतभय गतकुमते, बहुदितिसुतकुलहर निजजनसुखकर सुरमुनिगणवर कृतसुमते। असलकमलसुवदनकटिधृतसुवसन कुसुमनिभहसनसुखकरणं, तव भवतु पदकमलमधिकतरविमलसुखदशुभयुगल भवतरणम्॥ यथा वा—मुनिजन-विहसनचण,-मधुमदकृतरण,-मृतयादवगणविहितगते, निजभुजजितसुरपति,-सदन-कदनदितिसुतपतिबलिमदरदनरते। मम भुवनजननचय,-जननमरणभय,-मपनुद धनजनविषयमदं, तव विकसन्नवदल,-कमलविमलदल,-मृदुपदतल इह वितर पदम्॥ ३४॥

चेत्त्रिगुणितमङ्घ्रिमुखत ओषधिपतिकान्ते,
षट्कलगणमुज्झति पुनरलघुयुगलमन्ते।
यत्र सुदति हे कुलवति तां गुणवति रामां,
विषधरपतिरिह निगदति सुकृतिहृदभिरामाम्॥ ३५॥

रामां लक्षयति चेदिति। ओषधिपतेश्चन्द्रस्य कान्तिरिव कान्तिर्यस्या हे तथाभूते हे सुदति हे कुलवति हे गुणवति यत्र यस्याम् अङ्घ्रिमुखतः पादादौ यदि षट्कलगण[त्रयं] पुनरन्ते पादान्ते अलघुयुगलं गुरुद्वयम् उज्झति न्यस्यति तदा तां विषधराणां नागानां पतिरीश्वरः पिङ्गलनाग इति यावत्



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सुकृतिनां कवीनां हृदभिरामां मनोहारिणीं रामां नाम छन्दो निगदति ब्रवीति। यथा—श्रुत्वा किल सा मदकलकोकिलकलनादम्। जैमिनिरिति जैमिनिरिति जल्पति सविषादम्। नीलनलिनमाल्यमहह वीक्ष्य भुजगवीता, गरुड़ गरुड़ गरुड़ेत्यभिरौति परमभीता॥ [अस्याश्चतुष्पदेन (पृ. २५८, श्लो. ३०) सहाभिन्नत्वेऽपि प्रपञ्चार्थं पृथगुल्लेखः।] पादान्ते यतिः॥ ३५॥

यस्य पुरत आदिगुरुकषट्कलकगणत्रयं,
पश्यसि वरसुन्दरि लघुमध्यकगणमन्ततः।
एककमनुपादमरुणपङ्कजतुलितानने,
यत्त्रिसहितविंशतिकलमात्थ तदिह हीरकम्॥ ३६॥

हीरकं लक्षयति यस्येति। हे वरसुन्दरि हे अरुणपङ्कजतुलितानने यस्य पुरतोऽग्रे आदिगुरुकषट्कलकगणत्रयं पश्यसि अन्ततोऽन्ते एकमेकं लघुमध्यक-गणम् पादे पादे पश्यसि यत् त्रिसहितविंशतिकलं त्रयोविंशतिमात्रकम् इह जगति तत् हीरकं नाम छन्दः आत्थ कथय। यथा—कृष्णचरणनावमरुण-पङ्कजदलगञ्जिनीम्, भक्तिनिपुणसात्त्वतगणनित्यहृदयरञ्जिनीम्। विषयनिकरनक्रम-करवाड़वतिमिदुस्तरं, सत्वरमवलम्ब्य सुसुखमुत्तर भवसागरम्॥ यथा वा—चन्द्रवदन-कुन्दरदन-मन्दहसनभूषणं, भीतिकदन-नीतिसदन-कान्तिमदनदूषणम्। धीरमतुल-हीरबहुल-चीरहरणपण्डितम्,नौमि विमलधूतकमल-नेत्रयुगलमण्डितम्॥ पादान्ते यतिः॥ ३६॥

मुख एव सुकान्ते गणमतिकान्ते षट्कलमेकं यत्र,
चिनु पञ्च गणानां चतुष्कलानामथ गुरु लघु च कलत्र।
दशवस्वेकादशमात्रासु भवति विरतिश्चेत्समदन्ति,
शतषोड़शमितकल,-चरणमिह महाराष्ट्रं तत्प्रवदन्ति॥३७॥

महाराष्ट्रं लक्षयति मुख इति। हे सुकान्ते सुशोभने हे अतिकान्ते सुमनोरमे हे कलत्र हे समदन्ति समानदशने यत्र मुखे आदौ एव एकं षट्कलगणं चिनु स्थापय, अथानन्तरं चतुष्कलानां गणानां पञ्च अर्थात्पञ्च-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



चतुष्कलगणांश्चिनु, ततो गुरु लघु च चिनु, चेत् यदि दशसु अष्टसु एकादशसु मात्रासु विरतिर्भवति शतञ्च षोड़श च द्वन्द्वः, तैर्मिताः परिमिताः कला मात्रा यत्र तादृशाश्चरणा यस्य तत् इह जगति महाराष्ट्रं नाम छन्दः प्रवदन्ति कथयन्ति। यथा—यदि वाञ्छसि भोगं, सञ्चितरोगं, भवति वपुस्तव मित्र, यदि परहितकारी, त्रिदिवविहारी भवसि सुखी पुनरत्र। यदि न पिशुनसङ्गं, सत्पथभङ्गं त्यजसि शुभं न कदापि, चेन्मुरहरपादौ, ध्वस्तविषादौ, मृगयसि मुक्तिरिहापि॥ यथा वा—गर्वाविलभासुर हतकंसासुर भुवि कृतविमलविलास, मुरलीभासुरकर वृषभासुरहर वरतरुणीकृतरास। दावानलबालक गोधन-पालक हिमकरकरनिभहास, कृपया कुरु दृष्टिं मयि सुखवृष्टिं मुनिहृदि जनितविकास॥ ३७॥

हीरकमुख्यमहामणिरञ्जितकुण्डलमण्डितगण्डतले,
रोचनचन्दनलोहितचन्दनविन्दुसमुज्ज्वलभालतले।
पश्यसि यत्र चतुष्कलसप्तकमादिगुरुं ननु कम्बुगले,
तत्परमेकगुरुञ्च विमुञ्चसि ताम्मदिराङ्कथयन्त्यबले॥३८॥

मदिरां लक्षयति हीरकेति। हीरकमुख्यैर्व्वज्रादिभिर्महद्भिर्म्मणिभी रत्नै रञ्जिताभ्यां खचिताभ्यां कुण्डलाभ्यां मण्डितं गण्डतलं यस्या हे तथाभूते रोचनं गोरोचना चन्दनं मलयजं लोहितचन्दनं कुङ्कुममेषां विन्दुभिस्तिलकैः समुज्ज्वलं देदीप्यमानं भालतलं यस्या हे तथाभूते हे कम्बुगले त्रिरेखकण्ठि, हे अबले यत्र आदिगुरुं चतुष्कलानां गणानां सप्तकं पश्यसि तत्परं तदनु एकगुरुञ्च विमुञ्चसि निक्षिपसि तां मदिरां नाम छन्दः कवयः कथयन्ति। यथा—भालविराजित-चन्द्रकलं नयनानलदाहितकामबलं, बाहुविराजितशेषफणीन्द्रफणामणिभासुर-कान्तिधरम्। भूधरराजसुतापरिरम्भितमण्डितनूपुरदपडधरं, नौमि महेशमशेष-सुरेशविलक्षणवेशमुमेशहरम्॥ पादान्ते यतिः। आकृतिप्रकरणे वर्णवृत्ते मदिरा गङ्गादासेन विन्यस्ता तस्या अनया सह प्रभेदो नास्ति परन्तु मदिरादीनां षण्णां चतुष्पदीनां सवयेति संज्ञा ग्रन्थान्तरे दर्शिता अतोऽत्रैव जातिप्रकरणे तस्याः समावेशः युक्तिसिद्ध इति॥ ३८॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



प्रागुदिता मदिरा मदिरायतनेत्रि सुगात्रि यदा चरणान्ते,
बालमृणालसमानभुजे पुनरेककगुर्वधिका शशिकान्ते।
कैटभजिच्चरणाम्बुजपूजनशोधितचित्तमले ननु माल-
त्युद्गदिता भुवि विश्रुतकीर्त्तिमनीषिगणेन तदोज्ज्वलमाले ॥३९॥

मालतीं लक्षयति प्रागिति। मदिरौ मत्तखञ्जनाविव आयते दीर्घनेत्रे यस्या हे तथाभूते, सु शोभनं गात्रं यस्या हे सुगात्रि, अबालेन तरुणेन मृणालेन विसेन समानौ भुजौ बाहू यस्या हे तथाभूते, शशिनश्चन्द्रस्य कान्तिरिव कान्तिर्यस्या हे तथाभूते, कैटभजितो विष्णोश्चरणाम्बुजयोः पादपद्मयोः पूजनेनार्च्चनेन क्षालितं धौतं चित्तस्य हृदयस्य मलं कषायं यया हे तथाभूते, उज्ज्वला माला यस्या हे उज्ज्वलमाले, यदा प्रागुदिता पूर्वोक्ता मदिरा चरणान्ते पादान्ते पुनरेकक एको गुरुरधिको यस्याः सा भवेत् तदा भुवि पृथिव्यां विश्रुता विख्याता कीर्त्तिर्यशो येषां तेषाम्मनीषिणाङ्गणेन समूहेन मालती नाम छन्द उद्गदिता उच्छब्दिता॥ यथा—चन्द्रकचारुचमत्कृतिचञ्चलमौलिविलुम्पितचन्द्रकशोभं, रस्यनवीनविभूषणभूषितनन्दसुतं बलिताधरलोभम्। धेनुकदानवदारणदक्षदयानिधिदुर्गमवेदरहस्यं, नौमि हरिं दितिजावलिमालितभूमिभरापनुदं सुयशस्यम्॥ पादान्ते यदिः॥ ३९॥

ललनाकुलमण्डिनि दुर्मतखण्डिनि कृष्णकथामृतपायिनि मल्ली,-
कमलावलिभिर्बलिभिर्नवमालिकयापि च नन्दजनुस्तनुवल्लीम्।
अलयन्ति यदान्तगुरूँश्चिनुतेऽष्टगणांस्तत एकगुरुं बुधपल्लीं,
परितोषितवत्यतिवेलमलङ्करणोचितगात्रि तदा वद मल्लीम्॥४०॥

मल्लीं लक्षयति ललनेति। हे ललनाकुलमण्डिनि हे दुर्मतखण्डिनि हे कृष्णकथामृतपायिनि कृष्णकथामृतपानशीले हे मल्लीनां कमलानामावलिभिः श्रेणीभिर्बलिभिः पूजोपहारैर्नवमालिकया सप्तलयापि च नन्दाज्जनुर्जन्म प्रादुर्भावो यस्य तस्य कृष्णस्येत्यर्थः तनुर्वल्लीव ताम् अलयन्ति अलङ्कुर्वति हे बुधपल्लीं पण्डितग्रामं परितोषितवति, अतिवेलं भृशम् अलङ्करणे उचितं योग्यं गात्रं यस्या हे तथाभूते यदान्तगुरूनष्टगणान् चिनुते संस्थापयति तत एकगुरुञ्च



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



चिनुते तदा मल्लीं नाम छन्दो वद। यथा—गिरिराजसुताकमनीयमनङ्ग-विभङ्गकरं गलमस्तकमालं, परिधूतगजाजिनवाससमुद्धतनृत्यकरं विगृहीतकपालम्। गरलानलभूषितदीनदयालुमदभ्रमदोद्धतदानवकीलं, प्रणमामि विलोलजटातट-गुम्फितशेषकलानिधिलालितमालम्॥ पादान्ते यतिः॥ ४०॥

महामणिचित्रमहारजताङ्गदशोभितबाहुमृणाललते,
नितान्तमनन्तमहिम्नि विभून्नि समाहितचित्ततयाप्तगते।
युनक्ति गणान्ननु मध्यगुरून् सति सप्त लघुश्च गुरुश्च यदा,
चतुश्चरणेषु महोत्पलमालिनि मल्लिक ऋष्युदितात्र तदा॥४१॥

मल्लिकां लक्षयति महेति। महामणिभिर्महारत्नैश्चित्रिताभ्यां महारजताङ्ग-दाभ्यां कनककेयूराभ्यां शोभिते भूषिते बाहू मृणाललते इव बाहुमृणाललता यस्या हे तथाभूते, अनन्तः अशेषः महिमा माहात्म्यं यस्य तस्मिन् विभून्नि व्यापके समाहितचित्ततयारोपितहृदयतया आप्तासादिता गतिर्यया हे तथाभूते, हे सति हे महोत्पलमालि पद्ममालावति चतुर्षु चरणेषु सप्त मध्यगुरून् गणान् लघुमेकं गुरुञ्चैकं यदा युनक्ति प्रयुङ्क्ते तदात्र जगति मल्लिका नाम छन्द ऋषिणा पिङ्गलमुनिना उदिता उक्ता। यथा—धुनोति मनो मम कम्पितकाननकम्पितकेलिरयम्पवनः, कथामपि नैव करोमि तथापि वृथा कदनं कुरुते मदनः। कलानिधिरेष बलादपि मुञ्चति वह्निकलापमलीकहिमः, विधुर्हि तथा मतिमेति यथा सविधेन यथा व्रजभूमहिमः॥ पादान्ते यतिः। मल्लिका ऋष्युदितेति स्थिते ऋत्यक इति ह्रस्वः॥ ४१॥

अषेशसुरासुरमौलिमहामणिलालितपल्लवपाटलपादे,
हरौ विनियोजितभक्तिविशोधितसञ्चितचित्तमले प्रतिपादे
कुटुम्बिनि सा यदि गुर्वधिका विरतौ किल तर्हि यशस्विनि माध-
व्यशेषभुजङ्गमराजमुखाम्बुजनिर्गलितेति निबोध विबाधम्॥४२॥

माधवीं लक्षयति अशेषेति। अशेषाणां सुरासुराणां मौलीनां मणिभिर्लालितौ पल्लवाविव पाटलितौ पादौ यस्य तस्मिन् हरौ कृष्णे विनियोजितया आसञ्जितया



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



भक्त्या विशोधितं सञ्चितं पूर्व्वजन्मनीहजन्मनि च पुञ्जीकृतं मनोमलं यया हे तथाभूते हे कुटुम्बिनि हे यशस्विनि प्रतिपादं सा मल्लिका विरतौ पादान्ते यदि गुरु अधिकं यस्यास्तथाविधा भवेत् तर्हि किल निश्चयं सकलनागराजमुखपद्मनिःसृता माधवीति माधवी नाम छन्दो विबाधं निर्ब्बाधं यथा भवति तथा निबोध बुध्यस्व। यथा—विलोलविलोचनकेन विलोकितमोहितगोपबधूजनचित्तः, मयूरकलापविकम्पितमौलिरपारकलानिधिबालचरित्रः। करोति मनो मम विह्वलमिन्दुनिभस्मितसुन्दरकुन्दसुदन्तः, सखीमिति कापि जगाद हरेरनुरागवशेन विभावितमन्तः॥ पादान्ते यतिः॥ ४२॥

श्रीरमणचरणकमलयुगलगलदमलसुधाधिकतरमकरन्दम्,
प्रपिवन्ति घनाघनघनरसमिव तृषिता चातकयोषिदसन्दम्।
यत्र भवन्ति चतुश्चरणेषु यदाष्टचतुष्कलकगणा धन्ये,
पिङ्गलनागो वदति तदा तां मागध्यखिलस्त्रीकुलमान्ये॥४३॥

मागधीं लक्षयति श्रीति। श्रीश्च श्रीश्च श्रियौ लक्ष्मीसरस्वत्यौ तयो रमणस्य पत्युश्चरणकमलयुगलाद्गलन्त्या अमलायाः सुधाया अपि अधिकतरं समधिकम् अमन्दं सुन्दरं मकरन्दं घनाघनस्य वर्षुकमेघस्य घनरसं जलं तृषिता सञ्जाततृष्णा चातकीव प्रपिवन्ति हे अखिलस्त्रीकुलस्य मान्ये यत्र यस्यां चतुर्षु चरणेषु यदाष्टौ चतुष्कला गणा भवन्ति तदा पिङ्गलनागस्तां [ मागधी इतीति शेषः, ] मागधीं नामच्छन्दो वदति। यथा—माधव विद्युदियं गगणे तव कलयति पीतवसनमभिरामं, जलधरनीलगगणपद्धतिरपि तव तनुरुचिमनुसरति निकामम्। इन्द्रशरासनमपि तव वक्षसि भासितवरवनमालाशोभम्, कुरु मम वचनं सफलय हृदयं राधाधरमनु विरचितलोभम्॥ पादान्ते यतिः॥ मदिरादि मागध्यन्तानां सवयेति संज्ञा॥ ४३॥

यत्र पञ्चकलौ गणौ भवतो यदि मुखे,
द्वौ तथाथ चतुष्कलावपि शाश्वतसुखे।
अथ लघुश्च गुरुश्च तर्हि श्रुतिललितकं,
ललिताङ्गि सङ्गिरन्ते ज्ञास्तद्गलितकम्॥ ४४॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



गलितकं लक्षयति यत्रेति। शाश्वतं सुखं यस्या हे शाश्वतसुखे हे ललिताङ्गि रुचिरावयवे यस्यां मुखे प्रथमे द्वौ पञ्चकलौ गणौ अथ तथा द्वौ चतुष्कलावपि गणौ भवतः अथ लघुश्च गुरुश्च यदि भवतस्तर्हि तदा श्रुतिललितकं श्रवणसुभगं गलितकं नाम छन्दः ज्ञाः विद्वांसः सङ्गिरन्ते स्वीकुर्व्वन्ति। यथा—मल्लिमालतियूथिपङ्कजकुन्दकलिके, कुमुदचम्पककेतकिपरिमलवलदलिके। मलयपर्व्वत शीतलत्वयि जातपवनः, हरिवियोगितनोरयं मम कथन्दहनः॥ पादान्ते यतिः॥ ४४॥

सततहितकारिणि कमलमालभारिणि कान्ते,
प्रथममानय पञ्चकलगणयुगममलकान्ते।
अथ चतुष्कलगणयुगलमादिलघुमथ यस्मिन्,
पञ्चकलग[णंकवि]र्भणति विगलितकमस्मिन्॥ ४५॥

विगलितकं लक्षयति सततमिति। हे सततहितकारिणि हे कमलमालभारिणि अत्र 'इष्टकेषिकामालानां चिततूलभारि'[ पां ६।३।६५ ]ष्विति मालाया ह्रस्वः। हे कान्ते हे अमलकान्ते यस्मिन् यत्र प्रथममादौ पञ्चकलगणद्वयम् अथ चतुष्कलगणद्वयम् अथ आदिर्लघुर्यस्य तादृशं पञ्चकलगणमप्यानय प्रापय अस्मिन् जगति कविस्तद् विगलितकं नाम छन्दो भणति वदति। यथा—भवजलधितारिणि सकलतापहारिणि गङ्गे, अघदहनकारिणि रुचिधारिणि हरकृतसङ्गे। गिरिनिकरदारिणि मनोहारिणि तरलभङ्गे, स्वपिमि वारिणि हंसहारिणि तव विलसदङ्गे॥ पादान्ते यतिः॥ ४५॥

सचतुष्कलगणयुग्मकं, पञ्चकलकगणमेककम्।
यत्र कमलमुखि मुञ्चते, तत्सङ्गलितकमुच्यते॥४६॥

सङ्गलितकं लक्षयति सचतुष्कलेति। हे कमलमुखि यत्र चतुष्कलगणद्वयेन सह एकं पञ्चकलकगणं मुञ्चते स्थापयति तत् सङ्गलितकं नाम छन्दः कविभिरुच्यते। यथा—धृतिमवधारय मानसे, हरिमपि गततनुवानसे। सखि तव वचनं मानये, ननु वनमालिनमानये॥ पादान्ते यतिः॥ ४६॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



पञ्चकलगणयुग्मत[श्च], चिनु लघु गुरु [प्र]यत्नतः।
प्रवद तदा मितभाषिते सुन्दरगलितकमानते ॥ ४७ ॥

सुन्दरगलितकं लक्षयति पञ्चेति। मितं भाषितं वचनं यस्या हे मितभाषिते, हे आनते विनम्रे यदि पञ्चकलगणद्वयात् परं [प्र]यत्नतो लघु गरु च चिनु संस्थापय तदा सुन्दरगलितकं नाम छन्दः प्रकर्षेण वद। यथा—विगलितचिकुरविलासिनीं, नवहिमकरनिभहासिनीम्। सुरनराधिकान्तामये, तनुजितकनकां कामये ॥ पादान्ते यतिः ॥ ४७ ॥

सुमुखि पञ्चकलौ प्रथमं गणौ त्रिकलकौ च ततोऽर्पय चेत्तदा।
असितचामरचारुशिरोरुहे गलितकं भण भूषणपूर्व्वकम् ॥४८॥

हे सुमुखि असितचामरवत् कृष्णचामरवत् चारवः मनोहराः केशा यस्या हे तथाभूते प्रथममादौ पञ्चकलौ द्वौ गणौ ततस्त्रिकलकौ च द्वौ गणौ अर्पय यदि तदा भूषणं पूर्व्वं यस्य तथाविधं गलितकं भूषणगलितकं नाम छन्दो भण कथय। यथा—रुचिरवेणुविरावविमोहिता, द्रुतपदाः कृतरासरसे स्थिताः। हरिमदूरवने हरिणेक्षणा,-स्तमनुजग्मुरनन्यगतेक्षणाः ॥ पादान्ते यतिः ॥ ४८ ॥

द्रुतविलम्बितवच्छ्रुतितुल्यता भवति यद्यपि चास्य तथापि तत्।
भवति वर्णगणै रचितं प्रिये पुनरिदन्तु कलागणगुम्फितम् ॥४९॥

संशयन्निरस्यति द्रुतेति। हे प्रिये यद्यपि चास्य भूषणगलितकस्य द्रुतविलम्बितवत् श्रुतितुल्यता श्रवणसमता भवति तथापि तद्द्रुतविलम्बितं वर्णगणैरक्षरगणै रचितं निबद्धम् इदन्तु भूषणगलितकन्तु कलागणैर्मात्रागणैर्गुम्फितं निबद्धं भवतीत्यनयोर्भेदः। लक्षणन्यस्तपञ्चकलत्रिकलगणेतरपञ्चकलत्रिकलगणप्रवेशनेऽन्यप्रकारश्रुतिरपि सम्भवति। यथा—निर्व्वाणसुखाय यदि स्पृहयसि, समदुःखसुखलोष्ट[क]हिरण्यः। कोकनदसन्निभं कृष्णपदं, धारय हृदयसरसि रहसि सखे ॥ द्रुतविलम्बिते त्वेकप्रकारा श्रुतिर्नान्यतरा वर्णगणघटितत्वात् ॥ ४९ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यत्र भवेत्प्रथमं षट्कलगणयुगलं,
तन्वि ततस्त्रिकलकगणयोरपि युगलम् ।
एकगुरुश्च पुनर्यदि तर्ह्यमलधिय-
स्तद्ब्रुवते मुखविगलितकं भुवि कवयः ।। ५० ।।

मुखविगलितकं लक्षयति यत्रेति । हे तन्वि यत्र प्रथममादौ षट्कलगणद्वयं ततस्त्रिकलकगणद्वयं पुनरेकगुरुश्च यदि भवेत् तर्हि अमलधियः कवयो भुवि तन्मुखविगलितकं नाम छन्दो ब्रुवते वदन्ति यथा—ब्रह्मभवादिकनुतपदपङ्कज-युगलं नाशितभक्तहृदयगतदारुणशमलम् । दीनकृपानिधिभवजलराशितारकं नौमि हरिं कमलनयनमशुभदारकम् ॥ पादान्ते यतिः ॥ ५० ॥

मुखतः षट्कलो गणो भवति यत्र ललने,
ततश्चतुश्चतुष्कला अजिनयोनिनयने ।
परन्तु तत्र योऽन्तिमोऽन्तगुरुरेव स यदा,
विलम्बितगलितकमिदं सुन्दरि भवति तदा ।। ५१ ।।

बिलम्बितगलितकं लक्षयति मुखत इति । हे ललने अजिनयोनेर्हरिणस्य नयने इव नयने यस्या हे तथाभूते हे सुन्दरि यत्र मुखत आदौ षट्कलो गणो भवति ततश्चत्वारश्चतुष्कला गणा भवन्ति परन्तु किन्तु तत्र चतुष्कलगणेषु मध्ये योऽन्तिमश्चतुष्कलः सोऽन्तगुरुरेव यदा भवति तदा इदन्तत् विलम्बितगलितकं नाम छन्दो भवति । यथा—नमामि पङ्कजाननं सकलदुःखहरणं, भवाम्बुराशि-तारकं निखिलवन्द्यचरणम् । कपोललोलकुण्डलं व्रजबन्धुजनहितं, विलासहास-पेशलं सरसरासमहितम् ॥ पादान्ते यतिः ॥ ५१ ॥

पाटलकरतलजितविदलितलोहितसरसिजदले,
प्रथमत उपचिनु यत एकचतुष्कलकगणममले ।
अथ पञ्चकलगणयुगं द्विचतुष्कलगणमपि च यदा
शेषे लघु गुरु च भवति तत् सप्तगलितकं तदा ।।५२।।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सप्तगलितकं लक्षयति पाटलेति। पाटलाभ्यां करतलाभ्यां जितं विदलितस्य विकसितस्य लोहितस्य सरसिजस्य पद्मस्य दलं पलाशं यया हे तथाभूते हे अमले-निष्पापे यतः यस्मिन् प्रथमे एकश्चतुष्कलगणमथ पञ्चकलगणद्वयं तथा चतुष्कल-गणद्वयं शेषे पादान्ते लघु गुरु च यदा उपचिनु आहर तदा तत् सप्तगलितकं नाम छन्दो भवति। यथा—निखिलहरगणविनुतपङ्कजकोमलचरणयुगलं, पीतवसनविलसितशरीरमनुत्तमकम्बुगलम्। नौमि निगमपरिगदितमपारगुणयुत-मिन्दुमुखं, नन्दतनूजं निखिलगोपवधूजनदत्तसुखम्॥ पादान्ते यतिः॥ ५२॥

विषमे पदे, यत्र चतुष्कलमथ चेद्गणं त्रिकलमवचिनु समे।
षट्कलमथ, त्रिकलचतुष्कपञ्चकलगुरु च वदति सङ्गलितकम्॥५३॥

अपरं सङ्गलितकं लक्षयति विषम इति। यत्र विषमे प्रथमतृतीयपादे चतुष्कलं गणमेकम् अनन्तरं त्रिकलगणमेकं यद्यवचिनु। समे द्वितीयचतुर्थपादे षट्कलमेकं त्रिकलानां चतुष्कं पञ्चकलगणमेकं गुरु चावचिनु तदपरं सङ्गलितकं नाम छन्दो वदति। यथा—विभूतिसितं, शिरसि निवसितानुपमनदीभव-पङ्कजविलसितम्। अहिपरुचिरं, किमपि विलसतान्मम हृदि किमपि वेदरहस्य-मतिसुचिरम्॥ पादान्ते यतिः॥५३॥

मध्यगुरुरहितपञ्चचतुष्कलकगणान्ते,
गुरुरेकश्चेन्निपतति यत्र तु ननु कान्ते।
तत् कविवर्गा जगति प्रथितास्सितदन्ति
प्रणयिनि लम्बितगलितकमिति तर्हि वदन्ति॥५४॥

लम्बितगलितकं लक्षयति मध्यगुर्विति। हे कान्ते हे सितदन्ति शुभ्रदति हे प्रणयिनि विश्रम्भवति यत्रैव मध्यगुरुगणरहितानां पञ्चानाञ्चतुष्कलानां गणानामन्तेऽवसाने यद्येको गुरुर्निपतति जगति प्रथिता विख्याता कविवर्गास्तर्हि। तल्लम्बितगलितकमिति लम्बितगलितकं नाम छन्दो वदन्ति। यथा—राजति वंश-रुतमिदं [वै] काननदेशे, गच्छति कृष्णे तस्मिन्नथ मञ्जुलवेशे। याहि मया सार्द्धमितो वासा हितचित्ते, तत्सविधे प्रेमविलोले ते नच वित्ते॥ पादान्ते यतिः॥५४॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यत्र [च] प्रथमं ननु पञ्चकलोऽथ चतुष्कलक,-
स्तदनून्नतिशालिनि पञ्चकलः स्याच्चतुष्कलकः।
अथ पञ्चकल[श्च] गण एको गुरुः पुनरपि यदा,
विक्षिप्तिकगलितकमिति तत्कवयो ब्रुवते तदा ॥ ५५ ॥

हे उन्नतिशालिनि यत्र प्रथमं पञ्चकलो गणः अथ चतुष्कलेन सह पञ्चकलो गणः अथ चतुष्कलो गणः अथ पञ्चकलो गणः पुनरप्येको गुरुश्च यदा स्यात् तदा विक्षिप्तिकगलितकमिति विक्षिप्तिकगलितकं नाम छन्दः कवयो ब्रुवते। यथा—चन्द्रकचितमुकुटमखिलमुनिजनहृदयसुखकरणं, धृतवेणुकलं वर-भक्तजनस्याद्भुतं शरणम्। वृन्दावनभूमिषु वल्लवनारीमनोहरणं, रुचिरं निजचेतसि चिन्तय गोवर्द्धनोद्धरणम् ॥ पादान्ते यतिः ॥५५॥

प्रथमं यदा विचिनु चतुष्कलमेकमतः परं,
पञ्चकलमथ गणं किल चतुष्कलमेकमपरम्।
अयि पञ्चकलं पुनरपि च चतुष्कलमवसाने,
गुरुमपि ललितागलितकमवेहि तर्हि सुगाने ॥ ५६ ॥

ललितागलितकं लक्षयति प्रथममिति। सु शोभनं गानं गीतं यस्या हे सुगाने प्रथमं यदि एकञ्चतुष्कलं गणमतः परं पञ्चकलम् अथो किल चतुष्कलम् अथापरं पञ्च कलं पुनरपि च चतुष्कलं गणम् अवसानेऽन्ते गुरुमप्येकं विचिनु तर्हि तदा ललितागलितकं नाम छन्दोऽवेहि जानीहि। यथा—कमलापतिं कमलदललोचनमिन्दुनिभाननं, मञ्जुलपरिपीतवासुसमपारगुणकाननम्। सनकादिकमानसजनितनिवाससमस्तनुतं, प्रणमामि हरिं निजभक्तजनस्य हिते निरतम् ॥ पादान्ते यतिः ॥ ५६ ॥

साद्यद्वितीयचरणे पञ्चकलचतुष्कलात्तु,
पञ्चकलचतुष्कलकौ पञ्चकलोऽथ लघुरस्ति।
सतृतीयतुर्य्यचरणे त्रिपञ्चकलचतुष्कलौ,
पञ्चकल इनकलायतिरयि विषमितागलितकम् ॥ ५७ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



विषमितागलितकं लक्षयति साद्येति। अयि भोः आद्ये प्रथमे द्वितीये च चरणे पञ्चकलचतुष्कलाद्गणात्तु परौ पञ्चकलचतुष्कलौ गणौ पञ्चकलगणः अथ लघुर्भवति। तृतीये चतुर्थे च चरणे त्रयः पञ्चकला गणाः चतुष्कलः पञ्चकलश्च गणः, इनकलासु द्वादशकलासु च यत्र यतिर्भवति तत् विषमिताविगलितकम् नाम छन्दो भवति। यथा—वेणुं करे कलयता सखि गोपकुमारकेन, पीताम्बरावृतवपुर्विभृता भवतारकेन। प्रेमोद्धतस्मितरुचा वनजभूषणशोभिना, चेतो ममापि कवलीकृतं मानसलोभिना ॥ ५७ ॥

प्राक् सुजनहितकारिणि ननु वरवर्णिनि विरचय षट्कलगण-
मथ चेत्किल परमिह मध्यगुरुतः,
लक्षणवति चतुष्कलमधिगतनिष्कल इति नियमेन हि सुतनु
समापय चरणचतुष्टयमितः।
किन्तु विरतिगतं कुरु सति नियतं गुरु षड्धिकविंशातियुगलकलं,
[मत्तकोकिलगलगञ्जिनि]
कृतिपिङ्गलधृतधुरं श्रुतिमधुरं सुमहितकृतिनः सुकृतवति
वदन्ति मालादि तद्गलितकम् ॥५८॥

मालागलितकं लक्षयति प्रागिति। हे सुजनहितकारिणि हे वरवर्णिनि हे लक्षणवति सुलक्षणे अधिगतं प्राप्तं निष्कलं ब्रह्म यया हे तथाभूते हे सुतनु हे सति हे [ मत्तकोकिलाधिकमधुरभाषिणि ] हे सुकृतवति पुण्यवति प्राक् प्रथमं षट्कलं गणं विरचय अथ यदि मध्यगुरुगणात्परं चतुष्कलं गणं रचय, इति अनेन नियमेन चरणचतुष्टयं चत्वारि चरणानि समापय। किन्तु इत एषु चतुष्कलगणेषु मध्ये विरतिगतम् अन्त्यमक्षरं गुरु कुरु। एतेनान्त्यो गणो द्विगुरुरन्तगुरुर्वायाति। षड्धिकविंशतियुगलकलं [षट्चत्वारिंशन्मा]त्राकं कृतिना छन्दःकुशलिना पिङ्गलेन धृता धूर्यस्य तत् तथा श्रुतौ श्रवणे मधुरं अतिमहिताः कृतिनस्तन्मालादिगलितकं मालागलितकं नाम छन्दो वदन्ति। यथा—कालियकुलविभञ्जकमधुरविडम्बकदनुजविलुम्पकमखिलजनस्तुतशुभचरितं मुनिनुतं, नौमि विमलतरं सकलसुखकरं कलिकलुषहरं भवजलधितरिं हविस्पालने सुनियतम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



कंसहृदि विकटं मुनिगणनिकटं विनिहतशकटं परिधृतमुकुटं जगद्विरचनेऽतिचतुरं, भक्तजनशरणं भवभयहरणं वरसुखकरणं स्वपदवितरणं जगन्नाशने धृतधुरम् ॥ पादान्ते यतिः ॥ ५८ ॥

कृष्णस्तोत्रपाठसततनिरते तदनुगतमते कनकजिच्छरीरकान्ते,
यत्र चतुष्कलद्वयविरहितमद्वयमननपरे यदि भवेत्तदेव कान्ते ।
काव्यपयःपयोनिधिमथनसमुत्थितमधुरसुधाधयनतुन्दिला अपूर्व्वं,
विद्वांसो ब्रुवन्ति भुवनविदिताः कुलरमणि कुशाग्रधिषणेऽत्र
मुग्धपूर्व्वम् ॥५६॥

मुग्ध[माला]गलितकं लक्षयति कृष्णेति । हे कृष्णस्य स्तोत्रपाठे सततमविरतं निरते आसक्ते तस्मिन् कृष्णेऽनुगतान्विता मतिर्यस्या हे तथाभूते, कनकजित्सुवर्णजित् शरीरकान्तिर्यस्या हे तथाभूते, अद्वयस्यैकस्य ब्रह्मणो मननं विचारणं परं प्रधानं यस्या हे तथाभूते, हे कान्ते हे कुलरमणि कुलप्रीतिदायिनी, कुशाग्रमिव धिषणा बुद्धिर्यस्या हे तथाभूते, यत्र तदेव मालागलितकमेव चतुष्कलगणद्वयेन रहितं हीनं भवति तदा काव्यरूपक्षीरसागरमथनसमुत्थितताया मधुरायाः सुधाया धयनेन पानेन तुन्दिला बृहत्कुक्षयो भुवनेषु जगत्सु विदिता विद्वांसस्तदात्र जगति तन्मुग्धं पूर्व्वं यस्य तन्मालागलितकं मुग्धमालागलितकं नाम छन्दो ब्रुवन्ति । यथा—वन्दे नन्दनन्दनमनवरतं मरकतसुतनुं धृतरुचिं मुरारिमीशं, वादितवंशमानतमुनिजननारदविरचितगानमवनीमणीमनीशम् । कारितरासहासपरवशरतं विरचितसुरतं विततकुङ्कुमेन पीतम्, तन्देवम्प्रमोदभरसुविदितं मुदितसुरनुतं सततमात्मजेन गीतम् ॥ पादान्ते यतिः ॥ ५९ ॥

तत्तदापि यदा भवति सति चतुष्कलगणयुगहीनमभवे,
भावपूर्णमनोऽनुमितपरमसामविषयपरतत्त्वविभवे ।
नागराजमुखाब्जविगलितसुधाधिकमधुरिमधृगुल्ललितकं,
काव्यशास्त्रविनोदिपुलकजनकं ननु भवति तदोद्गलितकम् ॥६०॥

उद्गलितकं लक्षयति तदिति । हे सति नास्ति भव उत्पत्तिर्यस्य यद्वा नास्ति भवः संसारो यस्मात् तस्मिन् भावपूर्णेन भक्तिपूर्णेन मनसानुमितः





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



परमस्योत्कृष्टस्य साम्नो विषयस्य परतत्त्वस्य ब्रह्मतत्त्वस्य विभवः सम्पत्तिर्यया हे तथाभूते तन्मुग्धमालागलितकं तदापि यदा चतुष्कलगणद्वयहीनं भवेत् काव्यशास्त्रविनोदिनां पुलकजनकं नागराजस्य मुखाब्जान्मुखपद्माद्विगलितं निर्गतं सुधाया अधिकमधुरत्वधारि ललितकं सुन्दरम् उद्गलितकं नाम छन्दो भवति। यथा—नन्दनन्दनमेव कलयत न किञ्चिदिह जगति सारमपरं, पुत्रमित्रकलत्र-मखिलमपि चित्रघटितमिव भाति न परम्। सावधानतयेव लवमपि मनः परमचलमिदं न विदितं, भावयन्तु दिवानिशमनिमिषमात्मनि परमपदं प्रमुदितम्॥ पादान्ते यतिः॥ ६०॥

समम‌र्द्धसमं विषमन्तदिदं,
कविसेवि तथाखिलजातिपदम्।
मधुमाधवकोकिलकण्ठकले,
सततं लगतान्तव तन्वि गले॥६१॥

उपसंहरति समम‌र्द्धसममिति। हे तन्वि कविसेवि कविजुष्टं तदिदं समम‌र्द्धसमं विषमं तथा अखिलानां निःशेषाणां जातीनामार्य्यादीनाञ्च पदं लक्षणं 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वि'त्यमरः। मधुमाधवयोश्चैत्र-वैशाखयोः कोकिलस्य कण्ठकल इव कण्ठाव्यक्तमधुरध्वनिरिव कलो यत्र तथाविधे तव गले कण्ठे सततं नित्यं लगतात् लग्नं भवतु। लगतादिति आशिषि लोट्। 'तुह्योस्तातङाशिष्यन्यतरस्या'[ पा॰ ७।१।३५ ]मिति लोटःस्थाने वा तातङादेशः॥ ६१॥

सीमन्तिनीनामधुनातनीनां यच्छान्दसे छन्दसि नाधिकारः।
तत्ते पुरस्तात्किल लक्षणानि सुलक्षणे तस्य न लक्षितानि॥६२॥

हे सुलक्षणे यद्यस्मादधुनातनीनामिदानीन्तनीनां सीमन्तिनीनां स्त्रीणां छान्दसे वैदिके छन्दसि अधिकारो न, तत्तस्मात्ते तव पुरस्तादग्रे तस्य वैदिकच्छन्दसो लक्षणानि न लक्षितानि नोक्तानि। पुरातनीनां मुनिपत्नीनां वैदिके छन्दस्यधिकार आसीत्। अत्र बृहदारण्यकाद्युपनिषत् प्रमाणम्॥६२॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



इत्थमार्य्यादिजातीनां स्वरूपमुपवर्णितम् ।
प्रस्ताराद्यधुना वक्ष्ये कविकामदुघं प्रिये ॥ ६३ ॥

हे प्रिये इत्थमनेन प्रकारेण आर्य्यादिजातीनामार्य्यावैतालीयप्रभृतीनां जातीनां मात्रापद्यानां स्वरूपमुपवर्णितम् । अधुना कविकामदुघं कवीनां काममभिलाषं दोग्धीति तथा प्रस्तारादि प्रस्तारनष्टोद्दिष्टप्रभृतिच्छन्दःसङ्केतमहं वक्ष्ये कथयिष्ये ॥ ६३ ॥

इति धीरेश्वराचार्य्यकृतौ छन्दोऽनुशासने ।
श्रीवृत्तमञ्जरीनाम्नि षष्ठोऽयं स्तवको गतः ॥ ६४ ॥

स्पष्टम् ॥ ६४ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

# सप्तमः स्तवकः

## प्रस्तारः

कनकप्रस्तरनिश्चलहृदये प्रस्तारनष्टमुद्दिष्टम् ।
एकद्व्यादिलघुगुरुक्रिया च संख्याध्वयोगौ च ॥
मेरुपताके च पुनः साञ्जननयनेऽथ मर्कटीजालम् ।
एतत्प्रत्ययनवक छन्दःसर्व्वस्वमित्युक्तम् ॥ १ ॥

किन्तावत्प्रस्तारादि इत्यपेक्षायामाह कनकेति । कनकप्रस्तर इव निश्चलं हृदयं यस्या हे तथाभूते अञ्जनेन कज्जलेन सह वर्त्तमाने नयने यस्या हे साञ्जननयने प्रस्तारो, नष्टम्, उद्दिष्टम्, एकद्व्यादिलघुगुरुक्रिया, संख्या, अध्वयोगः, मेरुः, पताका, मर्कटीजालञ्च एतत् प्रत्ययस्य प्रतीतेर्नवकं छन्दःसर्व्वस्वमिति कविभिरुक्तम् ॥ एतदन्यत्किमपि नास्तीति ॥ १ ॥

अथ वणप्रस्तारः ।

पादे सर्व्वगुरौ गुरोः प्रथमतोऽधस्ताल्लघुं न्यस्य भोः
प्रस्तारप्रसिते यथोपरि तथा शेषं सुमुख्यङ्कयेत् ।
भूयो भूय इमं विधिं वितनुयाद्द्यादपूर्णे गुरून्
यावत्सर्व्वलघुर्भवेदिति बुधाः प्रस्तारमार्णं व्यधुः ॥ २ ॥

अथ वर्णप्रस्तारं लक्षयति पाद इति । भोः प्रस्तारप्रसिते प्रस्तारे प्रसक्ते हे सुमुखि सर्व्वे गुरवो यस्मिन् तादृशि पादे चरणे प्रथमतः प्रथमात् गुरोः प्रथमं गुरुमारभ्य अधस्तादधः गुरोरेवाधः पृथक्पङ्क्तौ लघुं न्यस्य दत्त्वा यथा उपरि तथा शेषमङ्कयेत् अङ्कितं कुर्य्यात् । भूयो भूयः पुनः पुनरिमं विधिं वितनुयात् विस्तारयेत् । प्रस्तारवर्णे अपूर्णे सति गुरून् दद्यात् । यावत्सर्व्वलघुः प्रस्तारो भवेत्तावदेवेत्यर्थः । सर्व्वलघौ प्रस्तारे समुदिते



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



विरमेदिति भावः। बुधाः सुधिय इत्येवं रूपम् अर्णस्य वर्णस्यायमार्णः 'तस्येद'[ पां ४।३।१२० ]मित्यण् तं वर्णप्रस्तारं व्यधुर्विहितवन्तः ॥ २ ॥

## अथ वर्णनष्टोन्नयनम्।

तन्नष्टोन्नयनं भवेदमृतवागाताम्रनम्रानने,
पृच्छाया विषयीकृतस्य सुमते नष्टस्य योऽङ्को भवेत्।
अर्द्धेऽर्द्धे विहिते हि तस्य तु समे सम्यग्लघून्नीयतां,
दत्त्वैकं विषमे तथैव विहिते कान्ते गुरून्नीयताम् ॥ ३ ॥

नष्टोन्नयनं लक्षयति तदिति। आताम्रमतिरक्तं नम्रमवनतम् आननं यस्या हे तथाभूते हे सुमते हे कान्ते तत् नष्टोन्नयनं भवेत्, पृच्छायाः प्रश्नस्य विषयीकृतस्य नष्टस्य यः अङ्को भवेत् तस्याङ्कस्य अर्द्धे विहिते कृते सति समे सम्यक् यथा स्यात्तथा लघु उन्नीयताम् उद्ध्रियताम्, विषमे एकम् अङ्कं दत्त्वा तथैव विहिते अर्द्धे अर्द्धे कृते सति सम्यग्यथा भवति तथा गुरु समुन्नीयताम् उद्ध्रियताम् ॥ ३ ॥

## अथ वर्णोद्दिष्टम्।

सद्वृत्तेऽखिलवृत्ततत्त्वनिपुणे वृत्ताक्षरादादिमा-
न्मूर्द्ध्नि द्विद्विगुणान् क्रमेण विलिखेदङ्कान्छशाङ्कच्छवे।
ये तत्राङ्ग लघूत्तमाङ्गनिलयास्तैः पिण्डितैः पण्डिते,
सैकैराश्रितवत्सले मुनिवरेणोद्दिष्टमेतन्मतम् ॥ ४ ॥

वर्णोद्दिष्टमाह सद्वृत्त इति। अङ्ग भोः सच्चरित्रे हे अखिलानां वृत्तानां तत्त्वे निपुणे प्रवीणे हे चन्द्रकान्ते हे पण्डिते हे आश्रितवत्सले आदिमात्प्रथमात् वृत्ताक्षरादारभ्य मूर्द्ध्नि उपरि क्रमेण द्विद्विगुणानङ्कान् लिखेत्, तत्र तेष्वङ्केषु मध्ये येऽङ्का लघूत्तमाङ्गनिलया लघुशीर्षगतास्तैः पिण्डितैरेकीभूतैः सैकैरेकाङ्कयोगैर्मुनिवरेण पिङ्गलाचार्य्येणैतदुद्दिष्टं मतं कथितम् ॥ ४ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

## अथ एकद्व्यादिलघुगुरुक्रिया ।

वर्णान् सुप्रज उत्तराधरतया सैकान् स्थितान् वृत्तगा-
नेकादिक्रमशो ह्युपर्य्युपरि तानेणाक्षि सन्निक्षिपेत् ।
एकैकं जहदूर्द्ध्वतः किल गुरोः सुन्दर्य्युपर्य्यादिमा-
त्तूपान्त्याद्विरमेल्लघोरुत गुरोरेकादिकेयं क्रिया ।। ५ ।।

अथ वर्णस्यैकद्व्यादिलघुगुरुक्रियामाह वर्णानिति । सु शोभना प्रजा सन्ततिर्यस्या इति बहुव्रीहौ 'नित्यमसिच् प्रजामेधयोः' [ पाँ ५।४।१२२ ] इति समासान्तोऽसिजादेशः । हे सुप्रजः हे एणाक्षि हरिणाक्षि हे सुन्दरि सैकान् एकसङ्ख्याबोधकेनाङ्केन सह वर्त्तमानानुत्तराधरतया स्थितान् वृत्तगान् वर्णान् एकादिक्रमेणैव उपर्य्युपरि सन्निक्षिपेत् । किल निश्चये आदिमात्तु आद्यादेव गुरोरुपरि ऊर्द्ध्वत एकैकं जहत् त्यजन् तान् सन्निक्षिपेत् दद्यात् । उपान्त्यादन्त्यात पूर्व्वस्माद्वर्णाद्विरमेत् ततः परं एकद्व्यादिलघुगुरुक्रियां न कुर्य्यादिति भावः ॥ ५ ॥

| | | | | |
|---|---|---|---|---|
| १ | १ | | | |
| १ | २ | १ | | |
| १ | ३ | ३ | १ | |
| १ | ४ | ६ | ४ | १ |
| १ | ५ | १० | ५ | १ |
| १ | ६ | १५ | ६ | १ |

## प्रकारान्तरेणैकद्व्यादिलघुगुरुक्रिया ।

वृत्ताङ्क्यक्षरसङ्ख्यया विलिखिता अङ्का अयि व्युत्क्रमे-
णैकाद्येकपराः क्रमेण लिखितैरङ्कैर्विभाज्याः प्रिये ।
पूर्व्वेणैव परोऽथ तत्परगतो गुण्यः पुनस्तत्परे-
णैकद्व्यादिरियं लघोरुत गुरोर्लीलावतीया क्रिया ।। ६ ।।

पुनः प्रकारान्तरेण एकद्व्यादिलघुगुरुक्रियां लक्षयति वृत्ताङ्क्यक्षरेति । अयि प्रिये वृत्तस्याङ्क्षरणस्याक्षरसंख्यया व्युत्क्रमेण वैपरीत्येन लिखिता एकाद्येकपरा एकादय एकपराश्चाङ्का यथाक्रमेण लिखितैरङ्कैर्विभाज्या विभजनीयाः ।

Digitized by Madhuban Trust, Delhi



अथ पूर्व्वेणैवाङ्केन पराङ्को गुण्यः पूरणीयः। अथ तत्परगतोऽङ्कस्तत्परगतेनाङ्केन पुनर्गुण्यः। लघोरेवं गुरोश्च इयमेकद्व्यादिः क्रिया अर्थादेकद्व्यादिलघुगुरुक्रिया लीलावतीया लीलावतीनामाङ्कशास्त्रोक्ता न तु छन्दःशास्त्रोक्ता। पूर्व्वोक्ता तु छन्दःशास्त्रोक्ता। फलत एकैव ॥ ६ ॥

अथ संख्याध्वानौ।

सङ्ख्यामानय मिश्रितैर्लघुगरू कृत्योदिताङ्कव्रजै-
रुक्तोद्दिष्टगताङ्कसञ्चयसमाहारेण सैकेन वा।
सङ्ख्यैव द्विगुणा गुणामृतनिधे सैकेन हीना भवे-
द्वृत्तस्याङ्गुलिकं जहत् पदमधः कुर्य्यात्तथैवाङ्गुलिम् ॥ ७ ॥

अथ संख्यां लक्षयति पूर्व्वार्द्धश्लोकेन सङ्ख्यामिति। हे गुणामृतनिधे गुणस्वरुपामृतसिन्धो मिश्रितैः पिण्डीभूतैरेकद्व्यादिलघुगुरुक्रियायामुदितैरुक्तैरङ्क-समूहैरथवा उक्ता उदिता ये उद्दिष्टगता अङ्कास्तेषां सञ्चयः समूहस्तेषां समाहारेणैकीकरणेन सैकेन एकाङ्कयोगेन सङ्ख्यां प्रस्तारसङ्ख्यामानय आहर। अथ परार्द्धेनाध्वानं लक्षयति सङ्ख्येति। द्विगुणा द्विगुणिता एकेन एकसंख्या-बोधकाङ्केन हीना न्यूना संख्यैवाध्वा अवकाशो भवेत्। वृत्तस्याधः आङ्गुलि-कमङ्गुलिपरिमितं पदं स्थानं जहत् त्यजन् तथैवाङ्गुलिमङ्गुलिप्रमाणं पदं स्थानं कुर्य्यात् ॥ ७ ॥

अथ वर्णमेरुः।

प्रागेकं चतुरस्रमुज्ज्वलरुचे कोष्ठं लिखेच्छोभनं
तस्याधोऽर्द्धविनिर्गतावुभयतः कोष्ठौ तथा द्वौ लिखेत्।
इत्थन्तत्तदधः क्रमादुभयतः कोष्ठान् प्रिये वर्द्धये-
दा षड्विंशतिवर्णपादमथ तत्पूर्त्तिप्रकारं शृणु ॥ ८ ॥

वर्णमेरुं लक्षयति प्रागिति। हे उज्ज्वलरुचे उज्ज्वलकान्ते प्रिये वल्लभे प्राक् प्रथमं शोभनं वक्रादिदोषरहितमेकञ्चतुरस्रं कोष्ठं लिखेत्। तस्य कोष्ठस्याधोभागे उभयतः पार्श्वेऽर्द्धविनिर्गतौ अर्द्धनिष्क्रान्तौ तथा चतुरस्रौ द्वौ



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



कोष्ठौ लिखेत्। इत्थमेवम्प्रकारेण तत्तदधस्तेषान्तेषामधः षड्विंशतिवर्णपादमा अभिव्याप्य उभयतः पार्श्वे कोष्ठान् वर्द्धयेत्। अथानन्तरं तत्पूर्त्तिप्रकारं तेषां कोष्ठानाम्पूरणप्रकारं त्वं शृणु ॥ ८ ॥

कोष्ठात्प्राथमिकाल्लिखेत् पुनरधः कोष्ठव्रजाद्यन्तयो-
रेकाङ्कं प्रतिपङ्क्त्यथोपरितने कोष्ठे स्थिताङ्कद्वयम्।
एकीकृत्य च मध्यकोष्ठनिकरान्रिक्तानधोऽवस्थितां-
स्तैरङ्कैः परिपूरयेद्यदि तदा स्याद्वर्णमेरुः प्रिये ॥ ९ ॥

कोष्ठादिति। हे प्रिये प्रतिपङ्क्ति पङ्क्तिम् पङ्क्तिम् प्रति वीप्सार्थेऽव्ययीभावः प्राथमिकात्कोष्ठात् प्रथमकोष्ठादधोऽवस्थितानां कोष्ठनिकराणामादावन्ते च एकाङ्कमेकसंख्याबोधकमङ्कं लिखेत्। अथो अनन्तरमुपरितने कोष्ठे स्थितमङ्कद्वयमेकीकृत्यैव समाहृत्यैवाधोऽवस्थितान् रिक्तान् शून्यान्मध्यकोष्ठनिकरान् मध्यकोष्ठगणान् यदि तैस्तैरङ्कैः परिपूरयेत् तदा वर्णमेरुर्नाम प्रस्तारः स्यात् ॥ ९ ॥




अथ वर्णपताका।

वर्णोद्दिष्टसमानमङ्कमबले प्रस्तारसंख्यं लिखेत्
पूर्व्वाङ्केण परं प्रपूर्य्य तदधः पूर्णाङ्कमावेशयेत्।
एकस्मिँल्लिखितं पुनर्न तु लिखेदन्यत्र, नो लङ्घये-
च्चान्त्याङ्कावधिमीदृशेन विधिना वार्णी पताका भवेत् ॥१०॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ वर्णपताकामाह वर्णोद्दिष्टेति। हे अमले निर्मले प्रस्तारस्य संख्या यस्यां क्रियायां तद्यथा भवति तथा वर्णोद्दिष्टसमानं तत्सदृशमङ्कं लिखेत्। पूर्व्वमेकमङ्कं संस्थाप्य उत्तरोत्तरं द्विगुणितान् द्विचतुरष्टादिकानङ्कान् प्रस्तारसंख्यया स्थापयेत्। अङ्कस्य वामगतिविधानादन्तिमाङ्क एव पूर्व्वाङ्कः प्रथमत एव स्थाप्यः स एकगुरुकस्थानम्, तेन पूर्व्वाङ्केन सह परं तस्य परमङ्कं प्रपूर्य्य योजयित्वा अत्रापि पूर्व्वाङ्क एव पराङ्क उच्यते, अङ्कस्य वामा गतिरित्युक्तत्वात् तदधस्तस्याधोभागे पूर्णाङ्कं मिलिताङ्कमावेशयेत् स्थापयेत्। पुनर्नियममाह। एकस्मिन्नेकत्र लिखितमङ्कं पुनरन्यत्र नतु नैव लिखेत् अर्थात्प्रथमप्राप्तमङ्कं परित्यजेदित्यर्थः। अन्त्याङ्कावधि चरमाङ्कसीमां नो लङ्घयेन्नातिक्रामेत्। ईदृशेन एवम्प्रकारेण विधिना नियमेन वार्णी पताका वर्णस्य पताका भवेत् ॥ १० ॥

| १ | २ | ४ | ८ | |
|---|---|---|---|---|
| १ | २ | ४ | | १६ |
| | ३ | ६ | १२ | |
| | ५ | ७ | १४ | |
| | ९ | १० | १५ | |
| | | ११ | | |
| | | १३ | | |

## अथ वर्णमर्कटी।

षट्पङ्क्तीर्विरचय्य तासु रचयेत्कोष्ठान् समानक्षरैः
प्राक्पङ्क्तौ प्रथमादिकोष्ठपटलेष्वेकादिकाङ्काँल्लिखेत्।
विन्यस्येद्द्विगुणांश्च कोष्ठनिकरेष्वङ्कान् द्वितीयावलौ
तान् कृत्वादिमपङ्क्तिगाङ्कगुणितान् पङ्क्तौ चतुर्थ्यां क्षिपेत् ॥११॥

वर्णमर्क्कटीजालमाह—षड़िति। षट्पङ्क्तीर्विरचय्य रचयित्वा तासु पङ्क्तिषु अक्षरैः वर्णैः समान् कोष्ठान् रचयेत्कुर्य्यात् अत्र पङ्क्तिषु मध्ये प्राक्पङ्क्तौ प्रथमपङ्क्तौ प्रथमादिकोष्ठपटलेषु प्रथमादिकोष्ठसमूहेषु एकादिकानेकद्वित्रिचतुः-प्रभृतीनङ्कान् विलिखेत्। द्वितीयावलौ द्वितीयपङ्क्तौ कोष्ठनिकरेषु कोष्ठसमूहेषु



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



द्विगुणान् द्विचतुरष्टषोड़शादीन् न्यस्येन्निक्षिपेत्। आदिमपङ्क्तिगैः प्रथमपङ्क्तिस्थितैरङ्कैः तान् द्वितीयपङ्क्तिस्थानङ्कान् गुणितान् कृत्वा चतुर्थ्यां पङ्क्तौ क्षिपेत् न्यस्येत् ॥ ११ ॥

अर्द्धीकृत्य चतुर्थपङ्क्तिनिहितानङ्कान् क्षिपेत्पञ्चमी-
षष्ठ्योः पञ्चमतुर्य्यपङ्क्तिनिहितानन्योन्यमेकीकृतान्।
न्यस्येच्चाधितृतीयपङ्क्तिनियमो यत्रेदृशो दृश्यते
वागीशैरपि दुस्तरा निगदिता स्याद्वर्णमर्कट्यसौ ॥ १२ ॥

अर्द्धीति। चतुर्थपङ्क्तिनिहितान् चतुर्थपङ्क्तौ अर्प्पितान् अङ्कान् अर्द्धीकृत्य अर्द्धभागं कृत्वा पञ्चमीषष्ठ्योः पङ्क्त्योः क्षिपेत्। पञ्चमतुर्य्यपङ्क्तिनिहितान् पञ्चमचतुर्थपङ्क्तिस्थितान् अङ्कान् अन्योन्यं परस्परमेकीकृतान् योजितान् कृत्वा अधितृतीयपङ्क्ति तृतीयपङ्क्तौ अधि विभक्त्यर्थेऽव्ययीभावः न्यस्येदर्पयेत्। ईदृशो नियमो यत्र दृश्येत वागीशैरपि दुस्तरा तरीतुमशक्या असौ वर्णमर्कटी भवेत् ॥ १२ ॥

अस्याः पङ्क्तिषु षट्सु निर्म्मलमते वृत्तानि भेदाः कला
वर्णाः स्युर्गुरवोऽथ तन्वि लघवो ज्ञेयान्ययेऽनुक्रमात्।
प्राणेभ्योऽपि गरीयसि प्रतिकथं पीयूषवर्षिण्यमूं
ये जानन्ति तरन्ति ते भुवि सुखं प्रस्ताररत्नाकरम् ॥१३॥

अस्या इति। हे निर्मलप्रज्ञे हे तन्वि हे प्रिये हे प्राणेभ्योऽपि गरीयसी हे कथासु कथास्वमृतवर्षिणि अस्या वर्णमर्कट्याः षट्सु पङ्क्तिषु अनुक्रमात्प्रथमादि पङ्क्तिक्रमेण वृत्तानि पद्यानि भेदाः प्रकाराः कला मात्रा वर्णा अक्षराणि गुरवो गुरुसंख्या लघवो लघुसङ्ख्या अपि ज्ञेयानि स्युः। ज्ञेयानीत्यत्र 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्या'[ पां १।२।६९ ]मित्येकशेषः क्लीवत्वं मेकत्वञ्च वेति। ये जना अमूं वर्णमर्कटीं जानन्ति ते भुवि सुखमनायासेन प्रस्ताररत्नाकरं प्रस्तारसागरं तरन्ति ॥ १३ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वर्णमर्कटीजालमिदम्

| वृत्तानि | १ | २ | ३ | ४ | ५ | ६ |
|---|---|---|---|---|---|---|
| भेदाः | २ | ४ | ८ | १६ | ३२ | ६४ |
| मात्राः | ३ | १२ | ३६ | ९६ | २४० | ५७६ |
| वर्णाः | २ | ८ | २४ | ६४ | १६० | ३८४ |
| गुरवः | १ | ४ | १२ | ३२ | ८० | १९२ |
| लघवः | १ | ४ | १२ | ३२ | ८० | १९२ |

अथ मात्राप्रस्तारः ।

आदावादिलघुं निवेश्य विषमे कान्ते गणं मात्रिके
प्रस्तारेऽथ समे तु सर्व्वगुरुकं पूर्व्वादधस्ताद्गुरोः ।
सम्मुञ्चेत लघुं यथोपरि तथा शेषं पुनस्तद्विधिं
कृत्वोने तु गुरूँल्लघूंश्च वितरेद्यावच्च सर्व्वागुरुः ।। १४ ।।

मात्राप्रस्तारमाह—आदाविति । हे कान्ते विषमे मात्राप्रस्तारे आदौ प्रथमतः आदिलघुं गणं निवेश्य स्थापयित्वा पूर्व्वात्प्रथमाद्गुरोरधस्तादधः पङ्क्तौ लघुं सम्मुञ्चेत स्थापयेत् । शेषमवशिष्टम् उपरि ऊर्द्ध्वं यथा यत्प्रकारेण स्थितं तथा तत्प्रकारं सम्मुञ्चेत । पुनःपुनस्तद्विधिं कृत्वा ऊने अपूर्णे तु गुरुं वितरेत् गुरुणा अपूर्णे प्रस्तारे लघुञ्च वितरेद् इति भावः ॥ वर्णप्रस्तारे अपूर्णे गुरुणैव पूरयेत् । मात्राप्रस्तारे तु गुरुणा अपूर्णे लघुनापि पूरयेदिति विशेषः ॥ १४ ॥

अथ मात्रानष्टोन्नयनम् ।

सर्व्वा एव कलाः प्रिये लघुमयीः कृत्वाथ तासां शिरः-
स्वङ्कान् पातय पूर्व्वयुग्मसदृशान् पृष्टोऽङ्क ऊन्योऽन्तिमे ।
उद्वृत्तोऽप्यथ यत्र यत्र लभते भागं स स स्याद्गुरु-
र्धृत्वा चैव परां कलामिति कलानष्टं समुन्नीयताम् ।।१५।।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे प्रिये सर्व्वा एव कला मात्रा लघुमयीर्लघुरूपाः कृत्वा अथ तासां कलानां शिरःसु पूर्व्वयुग्मसदृशानङ्कान् पातय। अन्तिमे शेषेऽङ्के पृष्टोऽङ्कः प्रश्नविषयीभूतोऽङ्कः ऊन्यः लोपनीयः। लोपात्परमुद्वृत्तोऽपि अङ्कः ऊन्यः लोप्यः। यत्र यत्र भागं लभते परां कलां परमात्रां धृत्त्वा गृहीत्वा स स गुरुः स्यात्। इति एवम्प्रकारेण कलानष्टं मात्रानष्टं समुन्नीयतामुह्यताम्॥ १५॥

## अथ मात्रोद्दिष्टम्।

मात्रोद्दिष्टमिदं भवेल्लघुगुरून् प्रश्नानुसाराल्लिखे-
च्चोपर्य्येव लघोर्गुरोः पुनरुपर्य्यङ्कानधश्च प्रिये।
विन्यस्येद्यदि पूर्व्वयुग्मसदृशानङ्कान् गुरूर्द्ध्वस्थितान्
शेषाङ्केऽथ विलोपयेदधिगतैरङ्कैरशङ्कं तदा॥ १६॥

मात्रोद्दिष्टमाह मात्रेति। हे प्रिये प्रश्नानुसारात् प्रश्नमनुसृत्य लघुगुरून् लिखेत्। लघोर्लघुमात्राया उपर्य्येव गुरोः पुनरुपरि प्रदेशे गुरोः पुनरुपरि अधोदेशे च पूर्व्वयुग्मसदृशानङ्कान् विन्यस्येत् पातयेत्। अथ गुरोरूर्द्ध्वस्थितानङ्कान् यदि शेषाङ्के अन्तिमेऽङ्के विलोपयेत् द्रवयेत् अधिगतैः लब्धैरङ्कैरशङ्कं निःशङ्कं तदा इदं मात्रोद्दिष्टं मात्राया उद्दिष्टं भवेत्॥ १६॥

## अथ मात्रामेरुः।

कोष्ठं स्यात्सदृशं द्वयं द्वयमथैकाङ्कं तदन्ते लिखे-
द्युग्माद्येषु पुनर्युतौ प्रथमके द्वावेव कृत्वा त्वधः।
स्थाप्यो रिक्तशिरःस्थितैतदुपरिस्थाङ्केन ताम्पूरये-
न्मात्रामेरुरयम्मतोऽस्य गहना कोष्ठाङ्कसञ्चालना॥१७॥

अथ मात्रामेरुस्वरूपमाह—कोष्ठमिति। समं सदृशं द्वयं द्वयं कोष्ठं स्यात्। अथ तदन्ते तेषां कोष्ठानामन्तेऽवसाने एकाङ्कमेकसंख्याङ्कं लिखेद्विन्यस्येत्। युग्माद्येषु युग्मानां कोष्ठानां पुनराद्येषु प्रथमेषु अयुग्मेष्विति यावत्कोष्ठेषु एकाङ्कमेकसङ्ख्याबोधकमङ्कं लिखेत्। नतु सर्व्वत्र। प्रथमके विषमे द्वावेकैकाङ्कौ युतौ मिलितौ कृत्वा एवाधः कोष्ठे स्थाप्यः। उद्वृत्तकोष्ठानाम्पूरणोपायमाह रिक्तेति। रिक्तानां कोष्ठानां शिरःस्थितेनाङ्केन एतस्य उपरिस्थेन



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



शिरःस्थितस्योर्द्ध्वस्थितेन चाङ्केन तान् रिक्तकोष्ठान् पूरयेत्। अयमेतत्स्वरूपो मात्रामेरुर्नाम प्रस्तारो मुनिना मतः। अस्य मात्रामेरोः कोष्ठाङ्कस्य सञ्चालना गहना दुरवगाहा कोष्ठपूरणार्थं दुःखेनापि अन्तर्वर्त्तिनमङ्कं सञ्चालयितुमशक्यम् ॥१७॥

अथ मात्रापताका।

मात्रोद्दिष्टसमानमङ्कमखिलं दत्त्वान्तिमाङ्के प्रिये
वामावर्त्तविधिं श्रिताङ्कनिकरांस्तत्पूर्व्वगाँल्लोपय।
एकस्यैकगुरुं द्वयोरथ गुरू द्वौ त्रींस्त्रयाणां गुरूँ-
ल्लोपे स्वीकुरु नागराजमुखजा मात्रापताकेदृशी॥ १८॥

अथ मात्रापताकामाह मात्रेति। हे प्रिये मात्रोद्दिष्टसमानं पूर्व्वयुगलसदृशं समस्तमङ्कं स्थापयित्वा अन्तिमाङ्के शेषेऽङ्के वामावर्त्तविधिं श्रिता वामावर्त्तेन तत्पूर्व्वगांस्तस्यान्तिमाङ्कस्य पूर्वस्थितानङ्कव्रजान् लोपय। एकस्य लोपे एकगुरुमथ द्वयोर्लोपे द्वौ गुरू त्रयाणां लोपे सति त्रीन् गुरून् स्वीकुरु। नागराजस्य पिङ्गलाचार्य्यस्य मुखजा वदनसम्भूता मात्रापताका ईदृशी एवंरूपा ॥ १८ ॥

अथ मात्रामर्कटी।

षट् पङ्क्तीर्विरचय्य तासु रचयेत्कोष्ठान् कलासङ्ख्यका-
नाद्या द्व्यादिककोष्ठकेषु विलिखेदङ्कानये द्व्यादिकान्।
आद्यङ्कस्य समस्तपङ्क्तिषु पुनस्त्यागश्च कुर्य्यादथो
न्यस्येत्प्रेयसि पूर्व्वयुग्मसदृशानङ्कान् द्वितीयावलौ॥ १९॥
अङ्कैरादिमपङ्क्तिगैः प्रगुणयेत्पङ्क्तिं द्वितीयां क्रमात्
ये येऽङ्काः प्रभवन्ति पङ्क्तिममले तैस्तैस्तृतीयां भरेत्।
पृष्ठाङ्कौ सह भेदपङ्क्तिनिहितेनाङ्केन संयोजयन्
कान्ते पञ्चमपङ्क्तिकोष्ठपटलं निश्शङ्कमापूरयेत्॥ २०॥

मात्रामर्कटीमाह षडिति। अये प्रेयसि प्रियतमे षट् पङ्क्तीर्विरचय्य निर्म्माय तासु पङ्क्तिषु कलासङ्ख्यकान् मात्रासङ्ख्यान् कोष्ठान् रचयेत् लिखेत्। आद्यायाः प्रथमायाः पङ्क्तेर्द्व्यादिककोष्ठकेषु द्विप्रभृतिषु कोष्ठेषु द्व्यादिकान् द्वित्रिचतुःप्रभृतीनङ्कान् विलिखेत् विन्यस्येत्। समस्तपङ्क्तिषु मध्ये पुनः आद्यङ्कस्य



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



एकाङ्कस्य त्यागं न्यासं कुर्य्यात्। अथो ततः द्वितीयावलौ द्वितीयपङ्क्तौ पूर्व्वयुग्मसदृशान् मात्रोद्दिष्टसदृशानङ्कान्न्यस्येत्। आदिमपङ्क्तिगैः प्रथमपङ्क्ति-स्थितैरङ्कैर्द्वितीयां पङ्क्तिं क्रमात् प्रगुणयेत्। हे अमले निष्पापे ये ये अङ्काः प्रभवन्ति जायन्ते तैस्तैरङ्कैस्तृतीयां पङ्क्तिम्भरेत् पूरयेत्। अत्राङ्कशब्दस्य व्यत्यासेन योजनाद्द्वौ पृष्ठाङ्कौ पृष्ठाङ्कद्वयं भेदाङ्केन भेदपङ्क्तिनिहितेन संयोजयन्नेकी-कुर्व्वन् पञ्चमपङ्क्तेः कोष्ठगणं निःशङ्कं यथा भवति तथा आपूरयेत् ॥१९-२०॥

पूर्व्वौ यौ तु लघू गुरुर्भवति तौ किन्त्वत्र तौ स्तो न तत्
कोष्ठे प्राचि तु षष्ठपङ्क्तिरचिते स्थाने तु शून्यं गुरोः।
अङ्कैः पञ्चमपङ्क्तिकोष्ठनिहितैः पङ्क्तिञ्च षष्ठीम्भरे-
देकीकृत्य चतुर्थपङ्क्तिमनयोरङ्कव्रजं पूरयेत्॥ २१ ॥

पूर्व्वाविति। पूर्व्वौ यौ लघू लघुद्वयं तौ मिलित्वा गुरुर्भवति किन्तु तौ लघू अत्र न स्तो न वर्त्तेते तत्तस्मात् कारणात् षष्ठपङ्क्तिरचिते षष्ठपङ्क्तौ निर्म्मिते प्राचि प्रथमे कोष्ठे गुरुस्थाने तु शून्यम्। पञ्चमपङ्क्तिकोष्ठनिहितैरङ्कैः षष्ठीं पङ्क्तिं भरेत् पूरयेत्। अनयोः षष्ठपञ्चमपङ्क्त्योरङ्कव्रजमङ्कसमूहमेकीकृत्य चतुर्थपङ्क्तिम्पूरयेत्॥ २१ ॥

सर्व्वान् कोष्ठगणानयि प्रियतमे षट्पङ्क्तिगर्भस्थितान्
स्मारं स्मारमनुक्षणं क्षणयुते रीत्यानया पूरयेत्।
इत्थं यत्र विलक्षणेक्षणयुगे लक्ष्येत चेल्लक्षणं
मात्रामर्कटिका तदा भवति सा द्वित्रज्ञधीगोचरा॥ २२ ॥

अयि भोः प्रियतमे हे क्षणयुते सोत्सवे हे विलक्षणेक्षणयुगे विलक्षणलोचन-युग्मे अनुक्षणं क्षणे क्षणे स्मारं स्मारं स्मृत्वा स्मृत्वा वीप्साभीक्ष्ण्ययोर्णमुलिति णमुल् नित्यं वीप्साभीक्ष्ण्ययोरिति द्विः। अनया रीत्या नियमेन षट्पङ्क्ति-गर्भस्थितान् सर्व्वान् कोष्ठगणान् गृहान् पूरयेत्। यत्रेत्थं लक्षणं लक्ष्येत चेत्तदा द्वित्रज्ञधीगोचरा द्वौ वा त्रयो वा सङ्ख्या यत्र ते द्वित्राः। बहुव्रीहौ संख्येये डजबहुगणात् [ पां ५।४।७३ ] इति। ते ये ज्ञाः पण्डितास्तेषां धीर्गोचरो यस्याः सा मात्रामर्कटी नाम प्रस्तारो भवति॥ २२ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अत्रापि प्रथमादिषु स्फुटतरं वृत्तानि भेदांस्तथा
मात्रावर्णलघून् गुरूँश्च मनुतां षट्सु क्रमात् पङ्क्तिषु ।
छन्दोमत्तमतङ्गजो गजगते स्यात्संयतो मर्कटी-
जालेनेति तथा यतेत भवती वश्या यथेयं भवेत् ॥ २३ ॥

हे गजगते अत्रापि मात्रामर्कट्यामपि प्रथमादिषट्सु पङ्क्तिषु स्फुटतरं सुव्यक्तं यथास्यात्तथा क्रमात् वृत्तानि भेदान् मात्रावर्णलघून् मात्रा वर्णान् लघून् गुरूंश्च मनुतां जानीताम् । यथा—प्रथमायां पङ्क्तौ वृत्तानि द्वितीयायां भेदाः तृतीयायां मात्राः चतुर्थ्यां वर्णाः पञ्चम्यां लघवः षष्ठ्यां गुरव इति । छन्दोरूप-मत्तहस्ती मर्कटीजालेन संयतो रुद्धः स्यादिति हेतोरियं मर्कटी यथा वश्या वशङ्गता भवेत् तथा भवती यतेत यत्नं कुर्य्यात् ॥ २३ ॥

मात्रामर्कटी-जालमिदम् ।

| वृत्तानि | १ | २ | ३ | ४ | ५ | ६ | ७ |
|---|---|---|---|---|---|---|---|
| भेदाः | १ | २ | ३ | ५ | ८ | १३ | २१ |
| मात्राः | १ | ४ | ९ | २० | ४० | ७८ | १४७ |
| वर्णाः | १ | ३ | ७ | १५ | ३० | ५८ | |
| लघवः | १ | २ | ५ | १० | २० | ३८ | |
| गुरवः | ० | १ | २ | ५ | १० | २० | ३८ |

इति प्रदर्शितः कान्ते प्रस्तारस्ते सविस्तरम् ।
अस्ति यत्राखिलं छन्दः प्रोतं विश्वमिवेश्वरे ॥ २४ ॥

हे कान्ते इति एवंरूपः प्रस्तारः सविस्तरं साकल्येन ते तुभ्यं मया प्रदर्शितः । यत्र प्रस्तारे ईश्वरे ब्रह्मणि विश्वं जगदिव निखिलं समस्तं छन्दः प्रोतमस्ति वर्त्तते ॥२४॥

जन्यार्य्ये नलिनाक्षि यां व्यरचयत्प्राणाधिकस्ते सुगीः
स्वच्छे श्रोणिविराजमानरशने संश्रित्य गां वाग्विदः ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तत्राधीतिनि यत्नतो विरचितप्रातःक्रिये सम्मदा-
दालस्यञ्जहती स्वयं वितनुया गीःसम्पदः सर्व्वदा ॥ २५ ॥

हे जनीषु श्रेष्ठे हे नलिनाक्षि हे शोभनवाक् हे स्वच्छे सु निर्म्मले श्रोणौ श्रोणिदेशे विराजमाना रशना मेखला यस्या हे तथाभूते यत्नात् रचिता कृता प्रातःक्रिया प्रातःकृत्यं यया हे तथाभूते ते तव प्राणाधिकः प्रियः वाग्विदः वाङ् निपुणस्य गां वाणीं संश्रित्य यां श्रीवृत्तमञ्जरीं व्यरचयत् सम्मदाद्धर्षात् तत्र तस्यामधीतिनि । [ क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् ( वां पां २।३।३६ ) इति सप्तमी ]। आलस्यं जहती त्यजन्ती सती सर्व्वदा सदा स्वयं गीःसम्पदः वाक्सम्पत्तीः तनुया विस्तारयेः। चक्रबन्धोऽयं श्लोकः। चक्रस्यास्य षट्पङ्क्तौ नारायणाश्रित इति रचयितुर्विशेषणमस्ति ॥ २५ ॥

वामे व्योमगजग्रहश्रुतिमिते वर्षे प्रवृत्ते कलेः
सम्प्राप्ते शशलाञ्छनाम्बरवसुक्षोणीशकाब्देऽथवा ।
प्रायेण श्रुतबोधवच्छ्रुतिसुखा श्रीवृत्तमञ्जर्य्यसौ
श्रीगोविन्दपदारविन्दकृपया नीता समाप्तिम्मया ॥ २६ ॥

हे वामे सुन्दरि व्योमगजग्रहश्रुतिमिते अङ्कस्य वामा गतिरिति नियमात् वामावर्त्तेनाङ्का निवेशनीया भवन्ति व्योम शून्यं गजा अष्ट ग्रहा नव श्रुतयश्चतस्रः ४९८० एभिर्मिते कलेर्वर्षे प्रवृत्ते अथवा शशलाञ्छनाम्बरवसुक्षोणीशकाब्दे शशलाञ्छनमेकः अम्बरं शून्यं वसु अष्टौ क्षोणी एकः एभिरुपलक्षिते शकस्य नृपतेरब्दे वत्सरे सम्प्राप्ते प्रायेण बाहुल्येन श्रुतबोधवत् कालिदासीयच्छन्दोग्रन्थवत् श्रुतिसुखा श्रुतिमधुरासौ श्रीवृत्तमञ्जरी एतन्नामकच्छन्दोऽनुशासनं श्रीगोविन्दपदारविन्द-कृपया श्रीगोविन्दस्य पादपद्मानुग्रहेण मया समाप्तिं नीता प्रापिता ॥ २६ ॥

इति धीरेश्वराचार्य्यकृतौ छन्दोऽनुशासने ।
श्रीवृत्तमञ्जरीनाम्नि सप्तमः स्तवको गतः ॥ २७ ॥

धीरेश्वराचार्य्यस्य कृतौ वृत्तमञ्जरीनामके च्छन्दोऽनुशासने छन्दोग्रन्थे सप्तमः स्तवको गतः समाप्तः ॥ २७ ॥

## समाप्तः



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

# (क) निर्घण्टः[1]

( वर्णानुक्रमिकः )



1. The index has been prepared by Prof. B. K. Acaryya.



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

आ



इ



उ

Digitized by Madhuban Trust, Delhi







CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi







CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi







CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi







CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi







CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi







CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi







CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi







CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi







CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

श

Digitized by Madhuban Trust, Delhi





ष



स





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi







CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ह



---





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

# (ख) भ्रमसंशोधनम्

| पृष्ठे | पंक्तौ | मुद्रितपाठः | शुद्धपाठः |
|---|---|---|---|
| १ | ६ | स्वान्तैमहा | स्वान्तैर्महा |
| ३ | १० | कविवेश | कविवंश |
| ५ | २१ | स्पष्टभुप | स्पष्टमुप |
| १४ | १४ | -लाचने | -लोचने |
| १६ | १८ | मुनिनार्या यः | मुनिनार्यायाः |
| ३१ | ६ | लघ | लघु |
| ३७ | १५ | हलायुधः | हलायुधः |
| ३९ | ५ | -द्वे दैवदै | -द्वे दैवैंदै |
| ४० | २१ | -रञ्चनं | -रञ्जनं |
| ४६ | २ | -भत्तया | -भक्त्या |
| ५१ | ७ | प्राक्ता | प्रोक्ता |
| ५६ | १० | वर्णा | वर्णो |
| ५६ | २४ | -दगरुः | दगुरुः |
| ५७ | ७ | ङीप् | ङीष् |
| ६४ | १४ | चाङ्गौ | चाङ्ग्ौ |
| ६६ | २३ | कथिताय्यः | कथिताय्यैः |
| ७१ | ६ | त्रथमं | प्रथमं |
| ७२ | २० | कुद्मल | कुट्मल |
| ७३ | १३ | विद्याधार | प्राग्विद्याधार |
| ८० | ११ | -श्चकलघु | -श्चैकलघु |
| ८० | १२ | -कुद्मला | -कुट्मला |
| ८९ | २ | दीघा | दीर्घा |



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



| पृष्ठे | पंक्तौ | मुद्रितपाठः | शुद्धपाठः |
|---|---|---|---|
| ९७ | २३ | नामाभि | नाम्नाभि |
| १०१ | २४ | हयर्यत्र | हयैर्यत्र |
| १०४ | ४ | सचतुद्दशं | सचतुर्दशं |
| १०५ | २ | पुरस्थ | पुरःस्थ |
| १०६ | ४ | यथ | अथ |
| ११२ | १६ | माधवां | माधवीं |
| ११२ | २६ | -मुप्रभय | मुग्रभय |
| ११२ | २७ | तार यतु | तारयितु |
| ११३ | २३ | रुा | रुष |
| ११४ | ११ | -रभिन्नमिति | रभिन्न इति |
| ११५ | २७ | प्रभवात | प्रभवति |
| ११६ | १२ | -स्त्रयोदश | -स्त्रयोदश |
| १२६ | ५ | पश्चादार्घा | पश्चादीर्घा |
| १२८ | २३ | -यतिभवे | यतिर्भवे |
| १३४ | ३ | द्वादशतत्परं | द्वादशतः परं |
| १३४ | १७ | विपश्चित्तर्त | विपश्चित्ततं |
| १३८ | १८ | पुनदीर्घा | पुनर्दीर्घा |
| १३९ | २३ | रुचिरोपाङ्गो | रुचिरापाङ्गो |
| १४१ | २६ | अगाधविबोध | अगाधविबोधे |
| १४२ | ८ | -च्छार्दल | च्छार्दूल |
| १५१ | १५ | -भूमृतः | भूभृतः |
| १५३ | १९ | माप्तुवन्ति | माप्नुवन्ति |
| १५५ | ५ | सहिनं | सहितं |
| १५५ | ६ | चरणम्मवति | चरणम्भवति |
| १५५ | १७ | यथाक्रनं | यथाक्रमं |
| १६५ | १६ | तद्वद्दा | तद्वद्वा |



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



| पृष्ठे | पंक्तौ | मुद्रितपाठः | शुद्धपाठः |
|---|---|---|---|
| १६९ | ११ | समुत्त्लुत्य | समुत्प्लुत्य |
| १७० | २२ | धर्म्मकाय्यषु | धर्म्मकार्य्येषु |
| १७२ | २ | त्रभङ्गीति | त्रिभङ्गीति |
| १७३ | ६ | सर्ब्वभू ंता | सर्व्वभूता |
| १८७ | १३ | चरण | चरणे |
| १९० | २२ | -मक्षराणाम्तु | -मक्षराणान्तु |
| १९२ | ११ | -रूद्धं | रूर्द्धं |
| १९६ | २३ | उपास्थत | उपस्थित |
| २०५ | १० | बह्रुभिर्व्येश्या | बह्रुभिर्वेश्या |
| २०५ | २६ | दाषमाह | दोषमाह |
| २१४ | २१ | आवगीता | अविगीता |
| २१९ | ९ | द्वितुय्यति | द्वितुर्य्येति |
| २२५ | २ | त्रिगुणितर्नव | त्रिगुणितैर्नव |
| २३७ | २४ | ऽलङ्कात | ऽलङ्कृति |
| २४४ | २३ | तालङ्गिनी | तालङ्किनी |
| २५३ | २१ | अन्तगुरं | अन्तगुरुं |
| २५६ | ३ | सान्त | सन्ति |
| २५७ | १७ | अलाक | अलोक |
| २५८ | ३ | -बिधि | विधि |
| २६९ | १५ | बिलाम्बित | विलम्बित |
| २७६ | ५ | मकटी | मर्कटी |
| २८८ | १८ | कलेर्वष | कलेर्वर्षे |



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

